ब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते। नाभिपर्यन्तमागच्छता तेन वायुनाभिव्यक्ता मनोगोचरीभूता **पश्यन्ती** वागुच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या **मध्यमा** वागुच्यते। तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या **वैखरी** वागुच्यते। इति वाचश्चतुर्विधत्वं नागेशभट्टो मन्यते। भर्तृहरेश्चेदमत्राकूतम्—**पश्यन्ती मध्यमा वैखरी** चेति त्रिविधैव वाक्। त्रिविधापि **सा स्थूला सूक्ष्मा परा** चेति भेदत्रयेण भिद्यते, इति वाचो नवभेदाः सम्पद्यन्ते। वर्णादीनां प्रविभागरहिता स्वरप्रधाना संगीतरूपा वाक् स्थूला पश्यन्ती। जिज्ञासारूपा सैव सूक्ष्मा पश्यन्ती। जिज्ञासाहीना संविद्रूपा परा पश्यन्ती। चर्मावनद्धे मृदङ्गादौ करघातादिना समुद्भूता ध्वनिरूपा वाक् स्थूला मध्यमा। विवादयिषारूपा सैव सूक्ष्मा मध्यमा। तादृशेच्छा-रहिता निरुपाधिका सैव परा मध्यमा। एवं परस्परवैलक्षण्यापादनेन स्फुटीकृता वर्णरूपा वाक् स्थूला वैखरी। विवक्षारूपा सैव सूक्ष्मा। विवक्षारहिता परसंविद्रूपा सा परा इति। सगुणनिर्गुणादिभेदेन परापरभेदेन वा द्विविधतया वर्णितस्यापि ब्रह्मणो यथा एकत्वं न विरुद्धम्, तथा एकैव प्रत्यवमर्शिनी वाक् गुणभूमिमतीत्य कदाचित्पश्यन्तीति कदाचिच्च परेति संज्ञयोपवर्ण्यते इति पश्यन्त्येव परा इति स्वीकार्यम्। अत एव "इत्याहुस्ते परं ब्रह्म" इति शिवदृष्टौ वैयाकरणमतानुवादावसरे पश्यन्त्येव परात्वेनोपवर्णिता। वाचां त्रित्वे सत्येव मध्यमा वागिति व्यपदेशः संगच्छते।

तन्त्रशास्त्रवासनावासितान्तःकरणो नागेशभट्टो वाक्यपदीयमुपजी-व्याप्यत्र तत्सिद्धान्तमुपेक्षमाणः **"अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः"** सूक्तिमिमां चरितार्थयति।

> प्रतिपत्तिर्भवत्यर्थे ज्ञाने वा संशयः क्वचित्।
> स्वरूपेषूपलब्धेषु व्यभिचारो न विद्यते॥

(वाक्य० कां ३, पृ० ९६) अस्याः कारिकाया हेलाराजीयं व्याख्यानमनुसृत्य नागेशेनापि शब्दार्थयोस्तादात्म्यं स्वीकृतम्। तत्र वास्तविको भेदः, आरोपितश्चाभेदः। अत एव गुडशब्दोच्चारणे माधुर्यापत्तिः, अग्निशब्दोच्चारणे दाहापत्तिश्च न। शब्दार्थयोर्बौद्धत्वेऽपि वाक्यपदीयमेवानुसृतं नागेशेन।

व्यपदेशे पदार्थानामन्या सत्तौपचारिकी।
सर्वावस्थासु सर्वेषामात्मरूपस्य दर्शिका॥

(वाक्य० कां ३, पृ० ११९) शब्दार्थयोः सम्बन्धसत्त्वे वाक्यपदीयस्य तृतीयकाण्डस्य "सति प्रत्ययहेतुत्वे" इति श्लोको नागेशेन शक्तिनिरूपणे प्रमाणत्वेनोद्धृतः।

अत्रेदं रहस्यम्—अर्थस्य बाह्यत्वे यावन्त आक्षेपा भर्तृहरिणोद्भाविताः तावन्तः सर्वेऽपि नागेशनापि आवर्तिताः, परन्तु बुद्धिसत्ताविशिष्टत्वमेव समर्थितम्। नागेशेन स्पष्टं प्रतिपादितं यत् 'वस्तुतो बौद्ध एवार्थः शक्यः, पदमपि बौद्धं, तयोरभेदः। न च बौद्धे दाहादिशक्तिमत्त्वम्। (लघुमञ्जूषाशक्तिनिरूपणम्) बौद्धार्थनिरूपणे शक्यार्थोऽपि बुद्धिसत्ताविष्ट एव नतु बाह्यसत्ताविष्टः" इति प्रतिपादयता नागेशेन सर्वथा बाह्यार्थः प्रत्याख्यातः। इदमेव समर्थयमानेन तेन सर्वस्यापि जगतो मिथ्यात्वं ब्रह्मणश्च सत्यत्वं साधयितुं परमार्थसारस्य कूर्मपुराणस्य च वचनमुद्धृतम्।

"मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम्।
तैमिरिकचन्द्रयुगवद् भ्रान्तमखिलं जगद्रूपम्॥

(परमार्थसा० २२)

विप्र! पृथ्व्यादि चित्तस्थं न बहिःस्थं कदाचन।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते॥ (कूर्मपुराणम्)

सत्यमिव जगदसत्यं मूलप्रकृतेरिदं कृतं येन। (परमार्थसा० ९)
एवञ्च शब्दार्थौ निरूपयता नागेशेन अद्वैतवेदान्तसम्मतः "ब्रह्म सत्यं जगन्मिथ्या" इति सिद्धान्तो निरूपितः। परन्तु एवं प्रतिपादयता नागेशेन स्वपाण्डित्यप्रौढ्या शब्दशास्त्रसम्मतः सिद्धान्तोऽपहस्तितः। यत

एवं व्याकरणस्यैकाङ्गित्वं समापद्यते । भगवता पतञ्जलिना व्याकरणं वेदानां दर्शनानाञ्च सर्वस्याः शाखाया अङ्गं प्रतिपादितम्। हरिणापि तथैव समर्थितम्। नागेशमते शब्दार्थयोः सर्वथा काल्पनिकत्वे सम्बन्धस्य निस्सत्वं शशशृङ्गायमाणं स्यात्। अस्मिन्नेव प्रकरणे तेन प्रतिपाद्यते "पदपदार्थाद्यसत्यमेव" शास्त्रमप्यसत्यव्युत्पादकमेव" (मं० बौ० नि०) शब्दार्थयोः सम्बन्धं निराकुर्वद्भिर्बौद्धैः स्थापितात् सिद्धान्तात् स्वस्यातिरिक्तत्वख्यापनाय जगतो व्यवहारे प्रतीतिः स्वीक्रियते नागेशेन प्रतिपाद्यते च "सत्यमिवेति" इवेन तस्यारोपितत्वात् । व्यवहारकाले तत्प्रतीतेः, सत्यमिवेत्युक्तम्। स्वमतस्य बौद्धमतप्रवेशनिराकरणाय नागेशेन प्रतिपाद्यते यत् बौद्धैरारोपितसत्त्वमपि नाङ्गीक्रियते, आत्मनश्चानित्यत्वं स्वीक्रियते। पतञ्जलिः "उपदेशेऽजनुनासिक इत्" (१, ३, २,) इति सूत्रे उपदेशोद्देशयोर्व्याख्यायां वाह्यबौद्धयोरपि सत्त्वं स्वीकृतवान्। "ज्ञानं प्रयोक्तुर्बाह्योऽर्थः स्वरूपं च प्रतीयते" । (वाक्य०३, पृ. ९६) इति प्रतिपादयता भर्तृहरिणा तु शाब्दबोधे तत्त्वत्रयस्योल्लेखं कुर्वता बाह्योऽर्थः स्पष्टतयाऽङ्गीकृतः । तदेवं नागेशस्योभ्यामपि प्रामाणिकाभ्यामाचार्याभ्यां सह विरोधः । भट्टपादाभिमतान्विताभिधानखण्डनमपि नागेशस्य भर्तृहरिखण्डनानुसार्येव । स्फोटनिरूपणमपि वाक्यपदीयवचनानुसारि।

यद्यपि स्फोटायनऋषेरयं स्फोटवादः भर्तृहरिप्राग्वार्तीभिरनेकैर्व्याडिप्रभृतिभिराचार्यैर्व्याख्यातस्तथापि भर्तृहरिणा यथा स्पष्टीकृतस्तथा प्राक्तनैर्न कृतः । नागेशेन तु स्वप्रतिभाबलेन सर्वेऽपि नैयायिकमीमांसकादयो विरोधिनाऽप्रत्याख्यैयोपपत्तिभिः प्रत्याख्याताः, एवञ्च नागेशो भृशमुपकृतो भर्तृहरिणा। यदि वाक्यपदीयं नाभविष्यत् तदा नागेशभट्टस्तथा सफलो नाभविष्यत्। एवं कौण्डभट्टस्यापि महान् प्रभावो लक्ष्यते नागेशे स्फोटनिरूपणे, न केवलं कौण्डभट्टस्य पद्धतिरेवादृता, अपितु तदुदाहृतानि प्रमाणान्यपि स्वग्रन्थे नागेशेन निःसंकोचं स्वीकृतानि। क्वचित् क्वचिच्चाविकलानि भूषणकृतो वचनान्यपि स्वग्रन्थे नागेशभट्टेनोद्ध्रियन्ते। वाक्यार्थस्यापूर्वत्वेन तत्र शक्तिग्रहो न स्यादिति परोक्तं प्रत्याचक्षाणेन नागेशेन–

अर्थे विशिष्य सम्बन्धाग्रहणं चेत् समं पदे ।
लक्षणादधुना चेत् तत् पदेऽर्थेऽप्यस्तु तत्तथा ॥

(वैयाकरणभूषणसारः, श्लो० ६३) अयं श्लोकः प्रमाणत्वेनोद्धृतः । अष्टौ स्फोटाः कौण्डभट्टेन स्वीकृताः, नागेशेनापि तथैव स्वीकृताः । समासे अपभ्रंशे च शक्तिस्वीकारे समानैव सरणी समवलोक्यते द्वयोः । धात्वर्थतिङर्थलादेशाद्यर्थनिरूपणेऽपि भूषणकारप्रदर्शितः पन्था एव स्वमतस्थापने दर्शनान्तरीयराद्धान्तप्रत्याख्यानेऽनेनादृतः । वृत्तिविवेचनादिकमपि भूषणविवेचनसमानमेव । धात्वाद्यर्थविवेचने भूषणकारपद्धतिमङ्गीकुर्वतापि नागेशभट्टेन तत्र तत्र तन्मतं प्रत्याख्याय स्वीयः पृथक् सिद्धान्तः स्थापितः ।

तथाहि "**फलव्यापारयोर्धातुः**" इति कारिकास्थफलव्यापारयोरिति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक् शक्तिरिति, "एकवृन्तगतफलद्वयन्यायेन" पृथगुपस्थितिप्रयोजिका खण्डश एकैव शक्तिरिति वा । अत एव फले स्तोकादिरूपकर्मणोऽभेदेन ग्रामादिकर्मणश्च भेदसम्बन्धेनान्वय इति कौण्डभट्टः । नागेशस्तु फलविशिष्टव्यापारे, व्यापारविशिष्टफले च धातूनां शक्तिः । पृथक्शक्तिस्वीकारे व्यापारोद्देश्यकफलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य च बोधस्यापत्तिः, उद्देश्यविधेयभावेनान्वयप्रयोजिकायाः पृथगुपस्थितेः सत्त्वात् इत्याह । एवं शक्तिनिरूपणे अर्थविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपकेश्वरेच्छारूपा, तादृशेच्छीयविशेष्यतारूपा वा शक्तिरिति नानाविधाः पक्षा अवलम्बितास्तार्किकैः । नागेशेन च, इच्छायाः विशेष्यताया वा सम्बन्धत्वस्य क्वचनाप्यदर्शनात् शाब्दबोधात् प्रथमं तथाविधस्य सम्बन्धस्यावर्तमानत्वेन कार्याव्यवहितप्राक्क्षणावच्छेदेन वर्तमानस्यैव कारणतावच्छेदकतया तार्किकाभिमतंशक्तेः सम्बन्धत्वं वक्तुमशक्यमित्याद्यनेकदोषैः तेषां शक्तिलक्षणं कौण्डभट्टाभिमतं घटादिविषयकबोधजनकघटादिपदानां सामर्थ्यरूपं शक्तिस्वरूपञ्च, शक्तेर्भिन्न एव सम्बन्धः शक्तेः कार्यजनकत्वनियामकत्वेन दृष्टः,

यथा दीपगतप्रकाशकत्वशक्तेः कार्यजनकत्वे दीपवस्तुनोः प्रकाशकत्व-शक्त्यतिरिक्तसंयोगादिसम्बन्धसत्त्व एव वस्तुप्रकाशकत्वं नान्यथा, घट पटादिगतशक्तेरपि शाब्दबोधरूपकार्यजनने सम्बन्धसत्त्वे एवार्थबोधकत्वं नान्यथेत्यादिदोषैश्च निरस्य वाच्यवाचकभावापरपर्यायाऽखण्डसम्बन्ध-रूपा शक्तिर्व्यवस्थापिता। शब्दशक्त्या बोध्योऽप्यर्थो बुद्धिस्थ एव नतु बाह्यः, "न सत्तां पदार्थो व्यभिचरति" इति "मतुम्" सूत्रे भाष्यात् सत्ताविशिष्टघटादीनामेव घटादिप्रातिपदिकार्थतया 'अस्ति' 'नास्ति' इत्यादिप्रयोगानापत्तेः, गतार्थत्वात्, सत्तया विरोधाच्च । किञ्च 'शश-शृङ्गं नास्ति' 'बन्ध्यापुत्रो नास्ति' इत्यादिवाक्यजन्यबोधे भ्रमत्वस्य सर्वानुभवविरुद्धतया प्रातिपदिकत्वाय बौद्धार्थस्वीकार आवश्यकः। अत एव "बुद्धिसिद्धं तु तदसत्" ( न्या० द० अध्या० ४ आह्नि० १ सू० ५० ) इति गौतमोक्तिः सङ्गच्छते। अनया रीत्या नागेशेन बौद्धार्थत्वं साधितम्। अद्वैतमतवादिभिः "परत्र पूर्वदृष्टावभासोऽध्यासः" इत्यध्यासस्वरूपं-निरूप्य तदतिरिक्ताऽविद्या साधिता। तत्राध्यास एवाविद्या। "तमेतमेवं लक्षणं पण्डिता अविद्या इति ब्रुवते" इति भाष्यादध्यासविषयकप्रश्नोत्तरवद-विद्याविषयकप्रश्नोत्तरानुपलब्धेश्चेत्यादिहेतुभिरविद्याया अध्यासरूपत्वं सिद्धान्तितम्।

अद्वैतवादिभिश्च अविद्याया अजन्यत्वं विनाशित्वञ्च स्वीकृतम्। "एकेन विज्ञातेन सर्वं विज्ञातं भवति" इति प्रतिज्ञाभङ्गप्रसङ्गात्, ब्रह्मातिरिक्तस्याजन्यत्वासम्भवात्, वियदादीनामजन्यत्वे "प्रतिज्ञाहानि-रव्यतिरेकाच्छब्देभ्यः" ( वे० द० अध्या० २, पा० ३ सू० ६ ) इति सूत्रेण प्रतिज्ञाभङ्गापादनाच्च तन्मतं दूषितं नागेशेन। "अजामेकाम्" इत्यादिश्रुतेरविद्याया अनादित्वबोधकत्वपरतैव। अपरञ्च "सदसद्विलक्षणम्—अनिर्वचनीयम्" वेदान्तिभिः स्वीकृतम्। तदपि न, तादृशपदार्था-प्रसिद्धेः। किन्तु उभयरूपमेव। तत्र सत्त्वमारोपितम्, असत्त्वन्तु वास्तविकमिति न विरोधः। इत्थं तदभिमतानिर्वचनीयख्यातिरपि निरस्ता।

ज्ञानलक्षणप्रत्यासत्तिः नव्यनैयायिकैः स्वीकृता। नागेशेन तु अविद्यमानस्य प्रत्यासत्तित्वासम्भवात् सा प्रत्याख्याता। ज्ञानविषयत्वस्य प्रत्यासत्तित्वे तु विषयताया ज्ञानविषयोभयरूपत्वमते ज्ञाननाशे तस्यास्तत्त्वासम्भवात्।

अनुव्यवसायस्य ज्ञानग्राहकत्वमप्यसङ्गतम्, ज्ञाने सति "जानामि न वा" इति संशयाननुभवात्, "घटं जानामि" इतिवत् "ज्ञानं जानामि" इत्यनुभवाभावात्, अनवस्थापाताच्च। किन्तु ज्ञानस्य स्वतः प्रकाशकत्वमेवेति नागेशेनाङ्गीकृतम्। तार्किकमते संयोगस्य सम्बन्धत्वं प्रसिद्धम्। नागेशस्तु सम्बन्धस्य पदार्थयोजनामात्रहेतुत्वात्, संयोगस्य च स्वतः पदार्थत्वात् तत् प्रत्याख्यातवान्। सम्बन्धस्य सांसर्गिकविषयतया पदाबोध्यत्वमेव। केवलं षष्ठ्यादिविभक्त्या, वाक्येन वा बोध्यत्वम् इति नास्ति संयोगस्य सम्बन्धत्वम्। तार्किकैः—द्रव्यगुणकर्मस्वेव जातिः स्वीकृता। सा च सत्तारूपा, गोत्वादिरूपा च। "सामान्यं विशेष इति बुद्ध्यपेक्षम्" इति कणभक्षवचनात्, "समानप्रसवात्मिका जातिः" इति गौतमवचनाच्चानुगतप्रतीतेरेव जातिसाधकत्वाज्जातेरैक्यसर्ववृत्तित्वे एव समुचिते। एकैव जातिः गवादिप्रतिनियतव्यञ्जकव्यञ्जिता तत्तज्जात्यवच्छिन्नकार्यसाधिका भवतीत्यपि साधितं नागेशेन। आकाशसमवायादेश्चौपाधिकानेकत्वात्तत्रापि जातिः सिद्ध्यति। एवमन्ये पदार्थाः शास्त्रान्तरे प्रसिद्धाः प्रमाणनिरपेक्षाः स्ववासनाकल्पिताः कौण्डभट्टेनानिराकृता नागेशभट्टेन प्रबलाभिर्युक्तिभिः प्रत्याख्याता इति मञ्जूषापर्य्यालोचनेनावगन्तव्यम्। यद्यपि महाभाष्यादिव्याकरणशास्त्राकरग्रन्थं निखिलमपि समालोड्य नागेशभट्टेन मञ्जूषा लिखिता, तथापि भर्तृहरेः कौण्डभट्टस्य च महानुपकारो लक्ष्यते नागेशे इति नास्ति शङ्कालेशः। भर्तृहरेः पदार्थजातं, कौण्डभट्टस्य पदार्थनिरूपणशैली च सर्वत्र नागेशमञ्जूषायां परिलक्ष्यते।

## "स्फोटविचारः"

नैयायिकनये परमाणोरिव, वेदान्तिमते ब्रह्मण इव च शाब्दिक-

सिद्धान्ते स्फोटस्य महती चर्चा विद्यते तत्र तत्राकरग्रन्थेषु। शाब्दिकानां दार्शनिकत्वप्रासादः स्फोटभित्तिमेवावलम्बते। परन्तु स्फोटवादस्य कुतः प्रारम्भो जातः? इत्यस्य समाधाने इतिवृत्तस्य पृष्ठानि मौनमेवावलम्बन्ते। परन्तु सूक्ष्मेक्षिकया पर्यालोच्यमाने "वागेव विश्वा भुवनानि जज्ञे" "ओमित्येतदक्षरमिदं सर्वम्" "वाचो ह वाक्" इत्यादि श्रुतिरूपाणि स्फोटस्रोतांसि वेदब्राह्मणादिवारिधिषु समुपलभ्यन्ते। शाब्दिका अमुमेव सूत्रात्मकमर्थं सुगमतां सरलताञ्च नयन्ति। वेदब्राह्मणादिषु ग्रन्थेषु शब्द-गो-वागादिशब्दाः शब्दरूपेऽर्थे प्रयुज्यन्ते न तु स्फोटशब्दरूपेऽर्थे। अतो वादत्वेन स्फोटवादस्य कदा प्रारम्भ इति प्रश्नोऽद्यापि न समाहितोऽभूत्।

"अवङ् स्फोटायनस्य (पा० सू० ६, १, १२३) इति सूत्रे स्फोट-शब्दो दृष्टिगोचरीभवति। अस्य स्फोटायनशब्दस्य हरदत्तः पदमञ्जर्यां विवरणं करोति—"स्फोटोऽयनं पारायणं यस्य स स्फोटायनः, स्फोट-प्रतिपादनपरो वैयाकरणाचार्यः। (पदमञ्जरी, काशिका ६, १. १२३) नागेशेनापि स्फोटवादे अन्ते स्फोटायन ऋषेरेव सिद्धान्तः स्फोटवाद इति प्रतिपादितम्—वैयाकरणनागेशः स्फोटायनऋषेर्मतम्।

परिष्कृत्योक्तवांस्तेन प्रीयतां जगदीश्वरः॥

(स्फोटवादः, पृ० १०२, अड्यारलायब्रेरी, मद्रास, सीरीज नं. ९९)

यास्काचार्योऽपि प्रारम्भे निरुक्ते शब्दानित्यत्वं व्यवस्थापयतामाचार्यौ-दुम्बरायणानां मतं प्रत्याख्याय शब्दस्य नित्यत्वं व्यापकत्वमणुत्वं च स्थापितवान्। अत्र दुर्गाचार्यः—"व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च।" (निरुक्त १, २) इति स्फोटं प्रतिपादितवान्। एवं स्फोटस्येतिहा-सोऽतीव प्राचीनो वर्तते। अमुं स्फोटमुद्दिश्य विभिन्नशास्त्रेषु विभिन्नानि मतानि शास्त्रकाराणामुपलभ्यन्ते। तान्यत्र समासतो निर्दिश्यन्ते—अत्र मीमांसकाः—"[1]अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीयाः, इति भगवान् उपवर्षः, इति कण्ठताल्वाद्यभिघातानां श्रवणेन्द्रियविषयाणां

१ शाबरभाष्यम् १, १, ५.।

वर्णानामेव शब्दत्वं वाचकत्वं चास्ति। प्रकरणपञ्चिकायां शालिकोऽपि– "कः शब्दोऽभिमतः ? वर्णाः, तेषामेव श्रोत्रग्राह्यत्वात्" इति। तथा च भाष्यम् 'श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः' इति। अन्यस्मिन् दिनेऽनुभूतेऽद्यानुभूयमानस्य 'सोऽयम्' इति प्रत्यभिज्ञया तावत्कालं स्थिरत्वे सिद्धे[1] "तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति" इति न्यायात् पराभिमताशुविनाशित्वव्यतिरेके सिद्धे नित्यत्वपर्यवसानम् । सर्वदेशेषु तदुपलम्भाद् विभुत्वम् । लाघवाच्चैकत्वम् । आनुपूर्वीघटकम्– अव्यवहितोत्तरत्वं चैतत्पक्षे उत्पत्त्यनवच्छिन्नस्वज्ञानाधिकरणकालोत्पत्ति-कज्ञानविषयत्वम् । यथाऽत्यन्तरागवतः कामिनीसाक्षात्कारस्थले ज्ञानधारा-कल्पने गौरवादेकत्वं तद्वद् ज्ञानानामप्येतद्विषये स्थिरत्वम् ।

ननु न तावद् वर्णानां प्रत्येकमर्थबोधकत्वम्, एकैकस्मादर्थाप्रतीतेः । नापि समुदितानां, क्षणविनाशिनाम् समुदायानुपपत्तेः। प्रतिवर्णं च संस्कारकल्पने गौरवापत्तिः । अतो वर्णोच्चारणानन्तरं यतोऽर्थप्रत्ययो भवति सोऽयं स्फोटकत्वेन प्रकाशकत्वेन स्फोट इत्युच्यते। स एव पदात्मा शब्दः। एवं वाक्यस्फोटोऽपि । अप्रत्यक्षोऽप्ययमर्थः प्रतीतिलक्षणकार्या-नुपपत्त्या गम्यते। न च वर्णा एवानुभूयन्ते न तदतिरिच्यमानस्वरूपं वस्तु-तत्त्वमिति वाच्यम्, पदमेकं वाक्यमेकमिति चैकरूपस्यानुभवात् । नचेयं वर्णावगाहिनी, तेषां परस्पराभिन्नत्वात् । नचैकत्र नानात्वैकत्वे संभवतः विरुद्धत्वात्। एकार्थविषयत्वेनैकत्वमिति चेत्, न परस्पराश्रयात्। एक-पदत्वेनैवैकार्थविषयत्वात्। तस्मान्न वर्णात्मकः शब्दः किन्तु स्फोटरूप एवेति चेन्न, वर्णातिरिक्तवाचककल्पनायामर्थापत्तिः प्रमाणं, प्रत्यक्षं वा ? नाद्यः, अर्थप्रतिपत्तेरन्यथाप्युपपद्यमानत्वात्। नेतरः, तदभावात् । नचैकं पदमित्येकवस्त्ववगाहिनी नानावर्णेष्वनुपपद्यमाना बुद्धिरेव प्रमाणमिति वाच्यम्, वर्णेष्वप्येकार्थविषयत्वेन तदुपपत्तेः। अस्ति खल्वेकाभिधेयधी-हेतुभावस्त्रयाणामपि वर्णानामेकस्मरणोपारूढानामश्मनामिवैकपिठरधारणे । नाप्यन्योन्याश्रयः, समधिगतैकाभिधेयधीहेतुभावानां तेषां पश्चात्पदत्वाव-

---

1 श्लोकवार्तिकम्, पृ- ८३३, श्लोक ३६६ ।

धारणात्। कारकविशेषाभिधायी हि पदशब्दः पच्यतेऽनेनेति, स च कार्य-सम्बन्धज्ञाने सत्येव भवति नान्यथा। अत एकार्थविषयत्वज्ञाने सत्येव एकपदत्वज्ञानम्। यदाहुः—"अर्थैकत्वादेकं वाक्यम्" इति। पदमप्य-र्थैकत्वादेकम्। श्रोत्रग्राह्ये च वस्तुनि शब्दशब्दः प्रसिद्धो वर्ण एव च श्रोत्रग्राह्यो न स्फोटः। अतो नासौ शब्दशब्दवाच्यः कथमर्थप्रत्यायकः स्यात्, शब्दादेवार्थप्रतीतेः सर्वलोकसंमतत्वात्। आशुतरविनाशिनां साहित्यासंभवात् कथं गमकत्वमिति चेत्, संस्कारेणेति। यदाह भाष्यकारः— "[1]पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः" इति। व्यापारस्य चाव्यवधायकत्वात् शब्दादर्थं प्रतिपद्यामह इत्युपपद्यते। अथवा भाष्यपर्यालोचनया अन्त्यवर्णस्यैव प्रत्यायकत्वम्। एवञ्च शब्दा-दिष्वेकवचनमप्युपपन्नम्। तथाचोक्तम्—

"[2]यदि वा पूर्वसंस्कार इतिकर्त्तव्यतेष्यते।
वर्णोऽन्त्यो गमकस्तस्य शब्दत्वान्मुख्यता भवेत्॥"

केचित्तु-सद्रूपान्त्यवर्णविषयप्रत्यक्षं पूर्वेषु चातीतेषु वर्णेषु स्मृति-रूपेति चित्रस्वरूपा बुद्धिः सर्वार्थप्रतीतिहेतुरित्याहुः। तथाचोक्तम्—

[3]चित्ररूपां च तां बुद्धिं सदसद्वर्णगोचराम्।
केचिदाहुर्यया वर्णो गृह्यतेऽन्त्यः पदे पदे॥

अन्त्यवर्णेऽपि विज्ञाते पूर्वसंस्कारकारितम्।
स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते॥

स्फोटवादिनापि शब्दतत्त्वं कल्पयित्वा पुनः संस्कारकल्पनावश्यं कर्तव्या। ध्वनयो हि प्रत्येकं स्फोटमभिव्यञ्जन्ति साहित्यञ्च क्रमवर्तिनां

---

१ शाबरभाष्यम् १, १, ५

२ श्लोकवार्तिकम्, १३०, पृ. ४७२ मद्रास युनिवर्सिटी-संस्कृतसीरीज, नं. १३.

३ श्लोकवार्त्तिकम्, १११, ११२ पृ. ४६८, Madras University Sanskrit Series, No. 13.

संस्कारद्वारमेवेति तुल्यं तत्कल्पनम् । प्रत्युत स्फोटवादिनः स्फोटसद्भावो वर्णेभ्यश्च व्यतिरेकः सावयवे पदे गम्यमाने निरवयवत्वमित्यधिका कल्पना स्यात् । तस्मात् वर्णा एव वाचकाः, न तदतिरिक्तः स्फोटो युक्तिसिद्ध इत्याहुः । गुरुमतानुयायिनस्तु—"[1]वर्णेष्वेव प्रत्यक्षेष्वर्थप्रतीत्युपपत्तये कश्चिद् विशेष आश्रयितुं युक्तः, सर्वपूर्वपूर्वोपलम्भसापेक्षत्वादन्त्यवर्णस्य । उपलम्भस्य च क्षणिकतया स्वतो विशेष्टुमशक्यत्वात् पूर्वपूर्ववर्णोपलम्भजन्यः संस्कार एवाश्रीयते । स च स्मृतिहेतोः संस्काराद् भिन्न एव । स्मृतिहेतुर्हि संस्कारो यदुपलम्भप्रभावितस्तत्रैवोपलम्भान्तरं जनयितुमलम्, नार्थान्तर इत्यर्थविषया प्रतीतिस्ततोऽनुपपन्नेति तदतिरेकिणः संस्कारस्याश्रयणम्" इति संस्कारद्वयं स्वीकर्त्तव्यम् । एकः स्मृतिहेतुः अर्थप्रतीतिहेतुरपरः, येन क्रमेण विषया अनुभूताः तेनैव क्रमेण स्मर्यन्त इति तु प्रमाणविरहितम्, एकैकशो दृष्टेष्वपि घटेषु "सहस्रं घटाः" इति समुदितस्य स्मरणात् । तदित्थं वर्णा एव शब्दः । ते च व्यापका नित्याश्च । सर्वोऽपि ककार एक एव । पदवाक्यानामपि वर्णसमुदायरूपत्वं प्रत्येकमेकत्वं नित्यत्वं विभुत्वञ्च । पदादीनामनित्यत्वे "[2]औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति तत्सम्बन्धनित्यत्वप्रतिपादकं सूत्रं व्याकुप्येत । तथाचोक्तम्—

> "[3]तस्मान्न पदधर्मोऽस्ति विनाशी कश्चिदीदृशः ।
> तेन नित्यं पदं सिद्धं वर्णनित्यत्ववादिनाम् ॥ इति ।

शब्दो द्रव्यं साक्षादिन्द्रियसंबन्धवेद्यत्वात् घटवदित्यनुमानेन चैषां वर्णानां द्रव्यत्वम् । शब्दो ध्वन्यात्मको वर्णात्मकश्च । वर्णव्यञ्जको ध्वनिर्वायुगुणः । वर्णस्तु द्रव्यं ध्वनिव्यङ्ग्यमित्याहुः । पातञ्जलयोगास्तु पदस्फोटस्य वाक्यस्फोटस्य च वाचकत्वं स्वीकुर्वन्तः वर्णानां वाचकत्वं प्रत्याचक्षते ।

---

१ प्रकरणपञ्चिकाप्रमाणपारायण पृ. ८१, चौखम्बासीरीज १७.

२ मीमांसासूत्रम्, १, १,

३ श्लोकवार्तिकम्, १०८/७ श्लोक ३०५, चौखम्बा सं. सीरीज ३.

"अयमभिसन्धिस्तेषामर्थप्रत्ययो हिं वर्णैर्नियतक्रमतया परस्परसम्भवद्भिरशक्यः कर्तुम् । न च संस्कारद्वाराऽऽग्नेयादीनामिव परमापूर्वे वा स्वर्गे वा जनयितव्येऽनियतक्रमाणामपि साहित्यमर्थबुद्ध्युपजनने वर्णानामिति सांप्रतं, विकल्पासहत्वात् । स खल्वयं वर्णानुभवजन्यः संस्कारः स्मृतिप्रसवहेतुरन्यो वाऽऽग्नेयादिजन्य इवापूर्वाभिधानो, न तावदनन्तरः, कल्पनागौरवापत्तेः । स एव तावददृष्टपूर्वः कल्पनीयस्तस्य च क्रमवद्भिर्वर्णानुभवैरेकस्य जन्यत्वं न संभवतीति तज्जातीयानेकावान्तरसंस्कारकल्पनेति गौरवम् । नचैष ज्ञापकहेत्वङ्गमज्ञातस्तदङ्गतामनुभवतीति । न खलु सम्बन्धोऽर्थप्रत्यायनाङ्गमज्ञातोऽङ्गतामुपैति । स्मृतिफलप्रसवानुमितस्तु संस्कारः स्वकारणानुभवविषयनियतो न विषयान्तरे प्रत्ययमाधातुमुत्सहते, अन्यथा यत्किञ्चिदेवैकैकमनुभूय सर्वः सर्वं जानीयादिति । न च प्रत्येकवर्णानुभवजनितसंस्कारपिण्डलब्धजन्मस्मृतिदर्पणसमारोहिणो वर्णाः समधिगतसहभावा वाचका इति सांप्रतम्, क्रमाक्रमविपरीतक्रमानुभूतानां तत्राविशेषेणार्थधीजननप्रसङ्गात् । नचैतत्स्मरणज्ञानं पूर्वानुभववर्तिनीं परापरतां गोचरयितुमर्हति । तस्माद् वर्णेभ्योऽसम्भवन्नर्थप्रत्यय एकपदानुभवमेव स्वनिमित्तमुपकल्पयति, नचैष पदेऽपि प्रसङ्गः, तद्धि प्रत्येकमेव प्रयत्नभेदभिन्ना ध्वनयो व्यञ्जयन्त परस्परविसदृशतत्तत्पदव्यञ्जकध्वनिभिस्तुल्यस्थानकरणनिष्पन्नाः सदृशाः सन्तोऽन्योन्यविसदृशैः पदैः पदमेकं सदृशमापादयन्तः प्रतियोगिभेदेन तत्तत्सादृश्यानां भेदात् तदुपधानादेकमप्यनवयवमपि सावयवमिवानेकात्मकमिवावभासयन्ति । यथा नियतवर्णपरिमाणसंस्थानं मुखमेकमपि मणिकृपाणदर्पणादयो विभिन्नवर्णपरिमाणसंस्थानमनेकमादर्शयन्ति न परमार्थतः । सादृश्योपधानभेदकल्पिता भागा एव निर्भागस्य पदस्य वर्णाः, तेन तद्बुद्धिर्वर्णात्मना पदभेदे स्फोटमभेदमेव निर्भागमेव सभेदमिव सभागमिवाऽऽलम्बते । अतो गोपदस्फोटभेदस्यैकस्य गकारभागो गौरादिपदस्फोटसादृश्येन न निर्धारयति स्वभागिनमित्योकारेण विशिष्टो निर्धारयत्येवमोकारोऽपि भागः शोचिरादिपदसदृशतया न शक्तो निर्धारयितुं स्वभागिनं गोपदस्फोटमिति गकारेण विशिष्टो निर्धारयति । असहभाविनामपि च संस्कारद्वारेणास्ति-

सहभाव इति विशेषणविशेष्यभावोपपत्तिः । इति ।

वेदान्तिनस्तु—वर्णानामेव वाचकत्वं स्वीकुर्वन्ति, तेषां मते स्फोटाभावात् । इदं तेषामभिप्रेतम् यदि वर्णानां वाचकत्वं न संभवेत् , स्फोटश्चानुभवपद्धतिमध्यासीत , तदैव वर्णातिरिक्तः स्फोटोऽभ्युपेयेत । वर्णानामवाचकत्वं क्षणिकत्वेनाशक्यसंगतिग्रहत्वात् व्यस्तसमस्तप्रकारद्वयाभावाद्वा, वर्णानां क्षणिकत्वे मानाभावेन प्रथमः कल्पस्तावन्निरस्तः । ननु वर्णानां प्रत्युच्चारणमन्यत्वं सर्वजनप्रसिद्धमिति चेन्न, प्रत्यभिज्ञायमानत्वात् । नचासत्यप्येकत्वे ज्वालादिवत् सादृश्यनिबन्धनमेतत् प्रत्यभिज्ञानमिति साम्प्रतम्, सादृश्यनिबन्धत्वमस्य बलवद्बाधकोपनिपाताद्वा स्थीयते, क्वचिज्ज्वालादौ व्यभिचारदर्शनाद्वा । नचेदं प्रत्यभिज्ञानं गत्वादिजातिविषयं न गादिव्यक्तिविषयं, तासां प्रतिनरं भेदोपलम्भात् । अत एव शब्दभेदोपलम्भाद् वक्तृभेद उन्नीयते, सोमशर्माधीते न विष्णुशर्मेति युक्तम् । यतो बहुषु गकारमुच्चारयत्सु निपुणमनुभवः परीक्ष्यताम् । यथा कालाक्षीं च स्वस्तिमतीं चेक्षमाणस्य व्यक्तिभेदप्रथायां सत्यामेव तदनुगतमेकं सामान्यं प्रथते, तथा किं गकारादिषु भेदेन प्रथमानेष्वेव गत्वमेकं तदनुगतं चकास्ति, किं वा यथा गोत्वमाजानत एकं भिन्नदेशपरिणामसंस्थानव्यक्त्युपधानभेदाद् भिन्नदेशमिवाल्पमिव महदिव दीर्घमिव वामनामिव तथा गव्यक्तिराजानत एकापि व्यञ्जकभेदात्तद्धर्मानुपातिनीव प्रथत इति भवन्त एव विदाङ्कुर्वन्तु । तत्र गव्यक्तिभेदमङ्गीकृत्यापि यो गत्वस्यैकस्य परोपधानभेदकल्पनाप्रयासः, स वरं गव्यक्तावेवास्तु किमन्तर्गडुना गत्वेनाभ्युपेतेन । सत्यपि समस्तवर्णप्रत्यवमर्शे यथा क्रमानुरोधिन्यः पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति, एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति । अतो जारा राजा कपिः पिक इत्यादौ पदविशेषप्रतिपत्तौ नास्ति काचनापि विप्रतिपत्तिः । वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसम्बन्धाः सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तंतमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना ।

स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च कर्त्तव्या भवति। वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति, स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात्। अतो वर्णा एव वाचका नित्या विभवश्चेति। अत्रेदं विचारणीयम्—स्वसिद्धान्तभङ्गभिया वर्णानां नित्यत्वं सापेक्षमेव स्वीकार्य-मिति, वस्तुतो वर्णानामनित्यत्वमेव सृष्टिप्रलयमध्ये विनाशित्वाभावरूपमेव तत्। एवञ्च सृष्टीनामानन्त्येनानन्तवर्णतद्ध्वंसप्रागभावादिकल्पनाया गले पतितत्वाल्लाघवं शशशृङ्गायमाणमेव। किञ्च गकारादिषु गत्वादिजाते रभावेन गकारादिज्ञानस्य निर्विकल्पकात्मकत्वेन प्रत्यक्षत्वानापत्तिः। ध्वनिगतगत्वादिभानस्वीकारे तु तदभाववति तत्प्रकारकज्ञानत्वेन भ्रमत्वा-पत्तिर्दुर्वारा। किञ्च गत्वादिजातिमस्वीकृत्य व्यक्तावेव स्वभेदकत्व-स्वीकर्त्तुस्तव गकारतो घकारादिभेदस्य स्वतःसिद्धतया स्फोटखण्डनाय प्रवृत्तेन त्वया वर्णैकत्वरूपमूलधनमप्यपहारितम्। तस्माद् ध्वनिभेदा एव वर्णाः, न तु ध्वन्यतिरिक्ता नित्याः। क्वचिद्भाष्ये "वर्णा नित्याः" इत्युक्तिस्तु स्फोटपरा। वर्णानामनित्यत्वे च तत्र वाचकत्वस्य दुरुपपादतया तदतिरिक्तस्फोटकल्पना वेदान्तिनोऽपि स्वीकार्या। वैयाकरणनये तु स्फोटस्य ब्रह्मरूपतया तत्रैव ध्वनिगतधर्माणामध्यस्तत्वाद् ब्रह्मणि प्रपञ्चा-ध्यासे भिन्नभिन्नरूपेण तत्प्रतीतिरिव वर्णभेदप्रतीतिर्नानुपपन्ना। न च त्वन्मतेऽपि स्फोटस्य ब्रह्मत्वेन निर्धर्मकतया तत्र गत्वादिप्रकारकप्रतीतेर्भ्र-मत्वं दुर्वारमेवेति वाच्यम्? तुरीयदशायां भ्रमत्वेऽपि तव ब्रह्मण एव प्रपञ्च-रूपेण प्रतीतिवद् व्यावहारिकदशायां बाधाभावेन भ्रमत्वस्य वक्तुमशक्य-त्वात्। एवञ्च मीमांसकादीनां स्फोटवादखण्डनं शाब्दिकनयानवगमावजृ-म्भणमात्रम्।

**सांख्यास्तु**—प्रत्येकवर्णेभ्योऽतिरिक्तं कलश इत्यादिरूपमखण्डमेकं पदं स्फोट इति योगैरभ्युपगम्यते, कम्बुग्रीवाद्यवयवेभ्योऽतिरिक्तो घटाद्य-वयवीव। स च शब्दविशेषः—पदाख्योऽर्थस्फुटीकरणात् स्फोट इत्युच्यते। स शब्दोऽप्रामाणिकः। कुतः? प्रतीत्यप्रतीतिभ्याम्। स स्फोटाख्यः शब्दः किं प्रतीयते, न वा? आद्ये येन वर्णसमुदायेनानुपूर्वी-विशिष्टेन सोऽभिव्यज्यते तस्यैवार्थप्रत्यायकत्वमस्तु, किमन्तर्गडुना तेन।

अन्त्ये त्वज्ञातस्य स्फोटस्य नार्थप्रत्यायनशक्तिरिति व्यर्था स्फोटकल्पना। "स एवायं गकारः" इति प्रत्यभिज्ञाबलात् वर्णनित्यत्वं न युक्तम्, 'उत्पन्नो गकारः' इत्यादिप्रत्ययेनानित्यत्वसिद्धेः। प्रत्यभिज्ञा च तज्जातीयताविषयिणी। अन्यथा घटादेरपि प्रत्यभिज्ञया नित्यतापत्तिरित्याहुः॥

**नैयायिकास्तु**—पदानामेव वाचकत्वम्। वर्णानां समूहः पदम्, पदानां समूहो वाक्यम्। वर्णाश्चानित्याः। ननु वर्णनामनित्यत्वे 'सोऽयं ककारः, इति प्रत्यभिज्ञाया उपपत्तिर्न स्यादिति चेन्न, सोऽयं धान्यराशिरितिवत् जातिनिबन्धना, सादृश्यनिबन्धना वा प्रत्यभिज्ञेति वक्तुं शक्यत्वेनादोषात्। ननु तथापि क्रमोत्पन्नविनष्टानां वर्णानां सहभावाभावात् तत्समूहस्य पदस्य, पदसमूहस्य वाक्यस्य च विलयापत्तिरिति चेन्न, संस्कारद्वारा तदुपपादयितुं शक्यत्वात्। यथा क्रमोत्पन्ना अपि प्रत्येकग्रासाः समुदितास्तृप्तिमुत्पादयन्ति, तथा क्रमवर्तिनोऽपि वर्णाः समुदिता एवार्थाभिधायिनो भवन्ति। न तावदनुमानमहिम्ना स्फोटस्वरूपमुपपादयितुं पार्यते, परिदृश्यमानविशिष्टानुपूर्वीकवर्णकलापकरणेनार्थप्रतीतेर्घटमानत्वात्। नापि प्रत्यक्षतः, वर्णानामेव प्रत्यक्षत्वादित्याहुः। अधिकं जयन्तभट्टकृतायां न्यायमञ्जर्यां द्रष्टव्यम्।

**वैयाकरणास्तु**—स्फोट एव वाचको न तु वर्णाः, स्फोटानुभवानन्तरं विदितसंगतेरर्थधीसमुत्पादात्। नच वर्णातिरिक्तस्य तस्यानुभवो नास्ति, गौरित्येकं पदं, गामानय शुक्लामित्येकं वाक्यमिति नानावर्णपदातिरिक्तैकपदवाक्यावगतेः सर्वजनीनत्वात्। न चायमसति बाधके एकपदवाक्यानुभवः शक्यो मिथ्येति वक्तुम्। नाप्यौपाधिकः। उपाधिः खल्वेकधीग्राह्यता वा स्यात्, एकार्थधीहेतुता वा? न तावदेकधीगोचराणां धवखदिरपलाशानामेकनिर्भासः प्रत्ययः समस्ति। तथा सति धवखदिरपलाशा इति न जातु स्यात्। नाप्येकार्थधीहेतुता, तद्धेतुत्वस्य वर्णेषु व्यासेधात्। तद्धेतुत्वेन तु साहित्यकल्पनेऽन्योन्याश्रयप्रसङ्गः—साहित्यात्तद्धेतुत्वं तद्धेतुत्वाच्च साहित्यमिति। तस्मादयमबाधितोऽनुपाधिश्च पदवाक्यगोचर एकनिर्भासो वर्णातिरिक्तं वाचकमेकमवलम्बते स स्फोट इति।

तञ्च ध्वनयः प्रत्येकं व्यञ्जयन्तोऽपि न द्रागित्येव विशदयन्ति येन द्रागर्थधीः स्यात्। अपि तु रत्नतत्त्वज्ञानवद् यथास्वं द्वित्रिचतुष्पञ्चषड्दर्शनजनितसंस्कारपरिपाकसचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति विशदं पदवाक्यतत्त्वमिति प्रागुत्पन्नायास्तदनन्तरमर्थधिय उदय इति नोत्तरेषामानर्थक्यं ध्वनीनाम्। नापि प्राचां, तदभावे तज्जानितसंस्कारतत्परिपाकाभावेनानुग्रहाभावात्। अन्त्यस्य चेतसः केवलस्याजनकत्वात्। न च पदप्रत्ययवत् प्रत्येकमव्यक्तामर्थधियमाधास्यन्ति प्राञ्चो वर्णाः, चरमस्तु तत्सचिवः स्फुटतरामिति युक्तम्, व्यक्ताव्यक्तावभासितायाः प्रत्यक्षज्ञाननियमात्, स्फोटज्ञानस्य च प्रत्यक्षत्वात् अर्थधियस्तत्र प्रत्यक्षाया मानान्तरजन्मनो व्यक्त एवोपजनो न वा स्यान्न पुनरस्फुट इति न समः समाधिः। तस्मान्नित्यः स्फोट एव वाचको न वर्णाः। अस्य च स्फोटस्योपाधिभेदादष्टौ भेदाः वर्णपदवाक्यरूपरूषितस्य भानाद् वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटश्चेति त्रयः, अत्रैव जातिव्यक्तिभेदेन वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोट इति त्रयः। पदवाक्ययोः सखण्डाखण्डत्वभेदात् सखण्डपदस्फोटः, सखण्डवाक्यस्फोटश्चेति द्वौ। एवं संकलनयाऽष्टौ स्फोटा इति नागेशादयः।

श्रीरामाज्ञापाण्डेयास्तु—'व्याकरणदर्शनभूमिकायां षोडश स्फोटानाहुः। तथाहि—'अस्यां स्थितौ वाक्यार्थज्ञानामस्माकं कृते वाक्यस्फोटस्य विलय एव स्यात्'। नापि 'पचति' इत्यादौ पदस्फोटव्यवहारः। तथा चायं विभागो नहि युक्तियुक्तः। अत एव नागेशभट्टो नहि अष्टौ स्फोटान् मञ्जूषायां निरदिक्षत्। किन्तु केवलमान्तरबाह्यभेदेन द्वौ स्फोटौ प्रदर्श्य बाह्यस्फोटस्य जातिव्यक्तिभेदेन द्वावेव भेदौ प्रादर्शयत्। तथा च व्यवहारदृष्ट्या बाह्यस्फोदप्रदर्शने प्राप्ते वक्ष्यमाणरीतिरेवास्माभिरवलम्बनीया। तथाहि—व्यक्तिः पदार्थ इति व्याडिमते व्यक्तिस्फोटः। जातिपदार्थवादिनो वाजप्यायनस्य मते जातिस्फोटः, इत्येवंरूपेण द्वौ स्फोटावभ्युपगन्तव्यौ। यदि चावान्तरस्फोटप्रतिपादने आग्रहस्तर्हि कल्पितानि पदानि कल्पितपदेषु कल्पितौ प्रकृतिप्रत्ययावादाय वक्ष्यमाणपद्धत्या

स्फोटः स्वीकार्यः। एवं सति (१) प्रकृतिस्फोटः (२) प्रत्ययस्फोटः (३) प्रकृतिजातिस्फोटः (४) प्रत्ययजातिस्फोटः (५) पदस्फोटः (६) पद–जातिस्फोटः (७) वाक्यस्फोटः (८) वाक्यजातिस्फोटः (९) अखण्डपद-स्फोटः (१०) अखण्डपदजातिस्फोटः (११) अखण्डवाक्यस्फोटः (१२) अखण्डवाक्यजातिस्फोट इति द्वादश स्फोटा भविष्यन्ति। तत्तदवयव-विवक्षाविवक्षाभेदेन प्रकृतिप्रत्ययादिकल्पनाकल्पनाभ्यां सर्वेषां कृते एते द्वादश स्फोटा युक्तियुक्ता भवेयुः। एतदेव विचार्य मञ्जूषायां नागेशभट्टो द्वावेव स्फोटौ प्रत्यपादयत्।

यच्च भट्टनागेशो लघुमञ्जूषायाम् (पृ० ४५७)—"तत्र 'प्रकृति-प्रत्ययनिपातानामेकवर्णानामर्थवत्त्वदर्शनात्' इत्यादिना प्रत्याहाराह्निके भाष्ये उक्तः प्रकृतिप्रत्यययोर्वाचकत्वमित्येवंरूपो वर्णस्फोटः शास्त्रीय-प्रक्रियोपयोग्येव न वास्तवः" इत्याद्यवोचत्, तद् वक्ष्यमाणभाष्यविरोधा-द्धेयमेव।

वस्तुतस्तु वर्णस्फोटोऽप्यधिकस्तत्र निवेशयितुं शक्यते, प्रत्याहाराह्निके 'ऐऔच्' सूत्रोपरि "अथत्रोभयतः स्फोटमात्रं निर्दिश्यते" इति भाष्योक्त्या शुद्धेषु ऋकारादिवर्णेषु स्फोटसत्ताया अभ्युपगमात्। तथा च जातिव्यक्तिभेदेन द्वौ वर्णस्फोटावधिकौ तत्र सन्निवेश्याविति चतुर्दश स्फोटाः सम्पन्नाः। प्रकृतिप्रत्ययविषयेऽपि अखण्डसखण्डभेदेन द्वयोर-परयोरपि सम्मेलने षोडश स्फोटाः सम्पद्यन्ते। एते सर्वेऽपि स्फोटा नित्याकाशसदृशनित्यस्फोटमूलकवर्णपदवाक्यकल्पनया कल्पिता एव मन्तव्याः। स्फोटं विहाय पदवाक्यकल्पनायाः खपुष्पायमाणत्वात्। यद्यपि सूत्रे वार्तिके भाष्ये वा सृष्टिक्रमो नोक्तस्तथापि श्रुतिप्रामाण्यात् वक्ष्यमाणनिरुक्तसंदर्भाच्च सोऽभ्युपगम्यते इत्याहुः।

महाराजसयाजिरावविश्वविद्यालय-
संस्कृतमहाविद्यालयः,
बड़ौदा

कालिकाप्रसादशुक्लः,
एम्. ए. व्याकरणाचार्यः

# संक्षिप्तविषयविवरणम् ।

## प्रतिप्रकरणं विशिष्टो विषयो विमृश्यते।

### शक्तिविचारः ।

शब्दस्य प्रमाजनकत्वे सर्वैः शब्दैः सर्वेषां श्रोतॄणां श्रवणमात्रेण बोधः स्यादिति तन्निष्ठप्रकारतानिरूपिततन्निष्ठविशेष्यताकबोधं प्रति तन्निष्ठ-प्रकारतानिरूपिततन्निष्ठविशेष्यतावन्निरूपितवृत्तिज्ञानं कारणं स्वीक्रियते। यथा घटत्वप्रकारकघटविशेष्यकबोधे घटत्वप्रकारकघटविशेष्यकवृत्तिज्ञानस्य हेतुत्वेन घटपदान्न पटादिबोधः, नापि घटप्रकारकघटत्वविशेष्यको बोधः, नाप्यज्ञातवृत्तिकात्तस्माद् बोधः । एतादृशकार्यकारणभावस्वीकारेण गुडत्वप्रकारकगुडविशेष्यकवृत्तिज्ञानेन मधुरत्वप्रकारकबोधो न भवति ।

सा च वृत्तिः शक्तिलक्षणाव्यञ्जनान्यतमरूपा । तत्र ईश्वरेच्छारूपा शक्तिरिति प्राचीनतार्किकाः । तेषां नये आधुनिकसंकेतेऽपि शक्तिरस्त्येव, 'एकादशेऽहनि पिता नाम कुर्यात्' इति ईश्वरेच्छायाः तत्रापि सत्त्वात्। सम्प्रदायविदस्तु–आधुनिकसंकेते न शक्तिरिति मन्यन्ते। नवीनतार्कि-कास्तु–इच्छामात्रं शक्तिर्नत्वीश्वरेच्छा। एवञ्चाधुनिकसंकेतेऽपि शक्तिरस्त्ये-वेति स्वीकुर्वन्ति। तत्र शक्तिस्तावन्न ईश्वरेच्छारूपा, इच्छारूपा वा, शक्तेः पदपदार्थयोः सम्बन्धरूपत्वेन इच्छायाः सम्बन्धिनोराश्रयतानियमकत्वा-भावेन सम्बन्धत्वासम्भवात्। अस्माच्छब्दादयमर्थो बोद्धव्यः, इदं पदममुमर्थं बोधयत्वित्याकारकेच्छाया विषयता बोधे, तद्विषयता पदेऽर्थे चास्ति। नहि पदं पदार्थो वा इच्छाविषयः। स्वविषयविषयत्वसम्बन्धेनेच्छायाः पदपदार्थयोः सत्त्वेऽपि तेन सम्बन्धेनायमर्थ इच्छावान् शब्दो वा इच्छावान् इति प्रतीत्यभावात्। एवञ्च सम्बन्धिनोः पदपदार्थयोराश्रयतानियामक-त्वस्य इच्छायामभावादिच्छायाः शक्तित्वमपि नास्तीति पदपदार्थयोः सम्बन्धान्तरमेव वाच्यवाचकभावापरपर्याया शक्तिरिति मञ्जूषाकाराः।

प्राचीनवैयाकरणास्तु बोधंजनकतां शक्तिमाहुः। तथा चोक्तं भूषणे—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता [1]तथा॥

(शक्तिनि०, ३७ का.)

नवीनानां वैयाकरणानां वाच्यवाचकभाव एव शक्तिः। तादात्म्यञ्च सम्बन्धः। योऽर्थः स शब्दः, यः शब्दः सोऽर्थ इत्याकारक इतरेतराध्यासात्मकसङ्केतः शक्तिग्राहकः। पदपदार्थयोरितरेतराध्यासश्च शब्दार्थयोस्तादात्म्यादेवेति निष्कर्षः। वन्ध्यासुतादीनामर्थवत्त्वात्प्रातिपदिकत्वानुरोधेन बौद्धार्थस्फोटात्मकपदयोस्तादात्म्यस्वीकारेण नैयायिकनयैरुद्भावितो दोषो निराकृतः। तदनु शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वेन साधुषु अपभ्रंशेषु च शक्तिं स्वीकृत्य साधुष्वेव शक्तिमातिष्ठमानास्तार्किकाः प्रत्याख्याताः। उक्तरूपायाः शक्तेस्त्रैविध्यं प्रदर्श्य नानार्थेषु तस्या नियामकत्वेन संयोगादयः संगृहीताः।

इति शक्तिनिरूपणप्रकरणस्य सारांशः।

## अथ लक्षणाविचारः।

अत्र नैयायिकाः—शक्यसम्बन्धो लक्षणा। लक्षणायाञ्च तात्पर्यानुपपत्तिरेव बीजम्। स्वनये वाक्ये शक्तेरभावात् शक्यसम्बन्धरूपा लक्षणापि नास्ति। यत्र 'गभीरायां नद्यां घोषः' इत्युक्तं, [2]तत्र नदीपदस्य नदीतीरे लक्षणा, गभीरपदार्थस्य नद्या सहाभेदेनान्वयः, क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात्। यदि तत्रैकदेशान्वयो न स्वीक्रियते तदा नदीपदस्य गभीरनदीतीरे लक्षणा, गभीरपदं तात्पर्यग्राहकम्। सा च गौणी, शुद्धा चेति द्विधा। प्रकारान्तरेणापि सा द्विधा जहत्स्वार्था, अजहत्स्वार्था च। सा च तात्स्थ्यादिनिमित्तिका इत्याहुः, मीमांसकास्तु—

---

१ इन्द्रियाणां=चक्षुरादीनां, स्वविषयेषु=चाक्षुषेषु घटादिषु यथाऽनादिर्योग्यता =तदीयचाक्षुषादिकारणता, तथा शब्दानामपि अर्थैः सह तद्बोधकारणतैव योग्यता सैव शक्तिरित्यर्थः, इति।

वाक्यशक्तिस्वीकारेण 'गभीरायां नद्यां घोषः' इत्याद्यनुरोधेन 'स्वबोध्य-सम्बन्धो लक्षणा'। गभीरायां नद्यामिति वाक्यस्य बोध्या गभीराभिन्ना नदी, तत्सम्बन्धस्तीरे इति वाक्येऽपि लक्षणा। अत्र प्रकृतिभागस्य गभीरत्वविशिष्टनदीतीरस्य निष्ठत्वसम्बन्धेन सप्तम्यर्थाधिकरणतायां, तस्या निरूपितत्वसम्बन्धेनाधेयतायां, तस्याश्च स्वरूपसम्बन्धेन घोषे। एवञ्च गभीरत्वविशिष्टनदीतीरनिष्ठाधिकरणतानिरूपिताधेयताश्रयो घोष इति बोधः। परम्परासम्बन्धरूपा लक्षणा लक्षितलक्षणा। स च सम्बन्धः स्ववाच्यरेफद्वय-घटितपदवाच्यत्वंरूपः। तथा च द्विरेफपदवाच्यरेफद्वयघटितभ्रमरपदवाच्य-मधुकरे लक्षणा। प्रयोजनवती, रूढा चेति द्विधा लक्षणा, इत्याहुः।

परमलघुमञ्जूषाकारश्च लक्षणां पृथग्वृत्तिं नाङ्गीकरोति। लक्षणाङ्गी-कारे वृत्तिद्वयमवच्छेदकद्वयञ्च कल्पनीयं भवति। शाब्दबोधे लक्षणाजन्यो-पस्थितेः पृथक् कारणत्वं वक्तव्यम्। एवं पदार्थोपस्थितावपि तज्ज्ञानस्य हेतुत्वं स्वीकार्यम्। परस्परजन्यबोधे परस्पराभावमादाय व्यभिचारवारणाय अव्यवहितोत्तरत्वनिवेशे महद्गौरवम्। अतो गङ्गापदात्तीरप्रत्ययार्थं गङ्गापदे एव शक्तिद्वयं स्वीकार्यम्। एका—प्रसिद्धा, अपरा—अप्रसिद्धा। भगीरथरथखातावच्छिन्नपयःप्रवाहनिरूपिता प्रथमा शक्तिः। सामीप्यसम्बन्धा-वच्छिन्नतीरत्वावच्छिन्नविषयकत्वावच्छिन्नार्थनिरूपिता शक्तिर्द्वितीया। एवञ्च लक्षणया प्रतिपिपादयिषितस्यार्थस्याप्रसिद्धशक्त्यैव बोधनिर्वाहे कोऽभि-निवेशो लक्षणायां प्रेक्षावताम्।

इति लक्षणाविचारप्रकरणस्य सारांशः।

## अथ व्यञ्जनाविचारः।

अत्र व्यञ्जनां लक्षणायामन्तर्भावयन्तो नैयायिका निराकृताः सन्ति। व्यञ्जनास्वीकारे प्रमाणं 'निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च' इति हरिमतमुपन्यस्तम्। द्योतकत्वस्य व्यञ्जकत्वरूपत्वात्, वैयाकरणाना-मपि व्यञ्जनास्वीकार आवश्यकः। लक्षणायाः पदवृत्तित्वेन व्यञ्जनायाश्च पदतदेकदेशवृत्तित्वेन मुख्यार्थबाधानिरपेक्षबोधजनकत्वेन च लक्षणायामन्त-र्भावो भवितुं नार्हति। निपातानां स्वशक्यार्थाभावाल्लक्षणाया असम्भवात्

व्यञ्जकतारूपैव द्योतकता । आदौ व्यञ्जनाया लक्षणन्निरूपितमस्ति ।

इति व्यञ्जनाविचारसारांशः ।

## अथ वृत्त्याश्रयविचारः ।

प्रकरणत्रयेण शक्तिलक्षणाव्यञ्जनावृत्तीर्निरूप्य तासामाश्रयनिरूपणार्थं प्रकरणमिदमारब्धम् । आदौ प्रत्येकं वर्णानां वाचकत्वं द्वितीयादि-वर्णोच्चारणवैयर्थ्येन निराकृतम् । वर्णसङ्घातस्य च उच्चरितप्रध्वंसित्वेन यौगपद्यासम्भवाद् वाचकत्वं दूषितम् । पुनः पदप्रत्यक्षत्वे तार्किकाभिमतं सरणीत्रयं प्रदर्श्य निराकृत्य च स्वमते स्फोटात्मकस्य शब्दस्य वृत्त्याश्रयत्वं व्यवस्थापितम् । स्फोटस्तु विस्तरेण **भूमिकायां** साधकबाधकयुक्तिभ्यां निरूपितः ।

इति वृत्त्याश्रयस्फोटविचारसारांशः ।

## अथ आकाङ्क्षाविचारः ।

शाब्दबोधे वृत्तिज्ञानाधीनोपस्थितपदपदार्थधियः कारणत्वेन तद्घटक-वृत्त्यादीन् निरूप्य सहकारिकारणनिरूपणाय आकाङ्क्षायोग्यताऽऽसत्तिता-त्पर्यप्रकरणानि प्रारब्धानि । सह करोतीति व्युत्पत्त्या कारणविशेषलाभेन केन सह करोतीत्याकाङ्क्षायां कारणेनेति वाच्यम् । एवञ्च सहकारिकारणं गौणकारणमिति लभ्यते । तथा च मुख्यकारणजन्यकार्यजनकत्वे सति मुख्यकारणभिन्नत्वमिति लक्षणं पर्यवसितम् । घटकार्यं प्रति कपालस्य मुख्यं कारणत्वम् । एवं यागादेः स्वर्गं प्रति मुख्यकारणत्वम् अपूर्वस्य तु सहकारिकारणत्वम् । प्रकृते पदज्ञानं शाब्दबोधे मुख्यकारणं, पदार्थोपस्थि-त्यादीनान्तु सहकारिकारणत्वम् । यद्वा स्वावच्छिन्नासमवधानप्रयुक्तफलोप-धायकत्वाभाववत्स्वावच्छिन्नकत्वं सहकारिकारणत्वम् । अत्र स्वपदेन सह-कारित्वेनाभिमतं विवक्षितम् । तथा च दण्डत्वावच्छिन्नासमवधानप्रयुक्तफलो-पधायकत्वाभाववत्कपालत्वावच्छिन्नकत्वं दण्डादिष्विति लक्षणसमन्वयः । वाक्यशक्तिग्राहकत्वेनाकाङ्क्षाया उपयोगः । घटपटादिरूपार्थज्ञानानन्तरं तदर्थान्वययोग्यार्थस्यानयनादेर्यज्ज्ञानं तद्विषयिणीच्छा आकाङ्क्षा । विषय-

तासम्बन्धस्य विशिष्टबुद्धिनियामकत्वाभावेन समवायसम्बन्धेन चेच्छाया अर्थे विरहेऽपि अयमर्थोऽर्थान्तरमाकाङ्क्षतीति व्यवहारात् तस्या अर्थे आरोपः। पदे नारोपः।

इत्याकाङ्क्षाविचारप्रकरणस्य सारांशः।

## अथ योग्यताविचारः।

शाब्दबोधसहकारिकारणस्य योग्यताया निर्वचनाय प्रकरणमिदमारब्धम्। अत्र नैयायिकाः—बाधाभावो योग्यता। सा च तात्पर्यविषयीभूतपदार्थसम्बन्धेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वाभावः। यथा पयसा सिञ्चतीत्यत्र तात्पर्यविषयीभूतजलकरणकत्वसम्बन्धे सेकनिष्ठात्यन्ताभावप्रतियोगित्वाभाव इत्याहुः, तन्न, विशिष्टधीमात्रे बाधाभावस्यैकरूपेण कारणत्वासम्भवात् पृथग्रूपेण शाब्दबोधे कारणत्वकल्पने तु तदपेक्षया योग्यताज्ञानस्यैव कारणत्वौचित्यात्।

केचित्तु शाब्दबोधं प्रति योग्यताज्ञानस्य कारणत्वं नाङ्गीकुर्वन्ति किन्तु वह्निना सिञ्चतीत्यादौ बोधादर्शनेनायोग्यतानिश्चयः प्रतिबन्धकः। तदभावश्च कारणमिति मन्यन्ते। तदपि न, यद्विषयकानुमित्यादिज्ञानं न जातं शाब्दबोध एव जातः, तद्विशिष्टबुद्धौ अयोग्यताज्ञानाभावापेक्षया लाघवाद् योग्यताज्ञानत्वेनैव कारणतासिद्धेः।

प्रथमं नागेशेन योग्यता परिष्कृता, पयसा सिञ्चतीत्यादौ समन्वयोऽपि कृतः। 'वह्निना सिञ्चति' एतादृशस्थले नान्वयबोधः किन्तु प्रत्येकं पदार्थबोधमात्रमिति नैयायिकमतं दूषितम्। स्वोक्तौ हरिमतं प्रमाणत्वेनोपन्यस्तम्।

इति योग्यताविचारसारांशः।

## अथ आसत्तिविचारः।

अत्रादौ आसत्तेः स्वरूपं प्रदर्शितम्। सा च प्रकृतान्वयबोधाननुकूलपदाव्यवधानरूपाऽवसेया, यथा 'गिरिरग्निमान्' इतिवाक्ये आसत्तिरस्ति, 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यत्र तु नासत्तिरिति पुनस्तस्या मन्दबुद्धेरविलम्बेन शाब्दबोधे हेतुतायां "न पदान्त०" (१।१।५८)

इति सूत्रस्थं भाष्यं प्रमाणत्वेनोपन्यस्तम्। अन्यत् किमपि वैशिष्ट्यन्नास्ति प्रकरणेऽस्मिन्।

इत्यासत्तिविचारसारांशः।

## अथ तात्पर्यविचारः।

प्रथमं स्वमतेन तात्पर्यं लक्षितं, तत्र चोपात्तमीश्वरपदं वक्तुरुपलक्षणम्। एवञ्च वक्तुरिच्छा तात्पर्यमिति पर्यवसन्नम्। अन्ये तु तदितरमात्रबोधेच्छयाऽनुच्चरितत्वे सति तत्तदर्थबोधजननयोग्यत्वम् इति परिष्कुर्वन्ति। केचित्तु, न शाब्दबोधमात्रे तात्पर्यस्य कारणत्वम्, अपि तु सैन्धवमानयेत्यादिनानार्थकेषु शब्देष्वेव। तत्र च तात्पर्यनिर्णायकप्रकरणादेवार्थनिर्णयसम्भवे तात्पर्यस्यातिरिक्तं शाब्दमतौ कारणत्वं नेच्छन्ति। पुनः स्वमते नागेशः प्रमाणमुपन्यस्तवान्। शक्तया तात्पर्यस्य निर्वाह्यत्वं युक्तया निराकृत्य प्रकरणमिदं समापयद् ग्रन्थकारः।

इति तात्पर्यविचारसारांशः।

## अथ धात्वर्थविचारः।

सर्वेषां शब्दानां धातुत एव जायमानत्वात् धात्वर्थनिरूपणाय प्रकरणमिदं प्रारब्धम्। तत्र फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः। कर्त्तृकर्मसंख्याकाला आख्यातार्थः। फलत्वञ्चात्र-तद्धात्वर्थजन्यत्वे सति कर्त्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम्। व्यापारत्वञ्च–धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम्। अनुकूलत्वञ्च संसर्गः। व्यापारमुख्यविशेष्यको बोधः।

अत्र प्राचीनवैयाकरणाः—"फलव्यापारयोर्धातुः" इति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक् शक्तिः। अत एव फले स्तोकादिरूपकर्मणोऽभेदेन ग्रामादिरूपकर्मणश्च भेदेनान्वयः। विशिष्टे शक्तिस्वीकारे पदार्थैकदेशत्वेन फले कर्माद्यनन्वयापत्तिः। नैयायिकानामाख्यातपदोपस्थापितयोः कृतिवर्तमानयोरिव, वैयाकरणानां कर्त्तृसङ्ख्योरिव च व्युत्पत्तिवैचित्र्येण धातुपदोपस्थापितयोः फलव्यापारयोः परस्परान्वयबोधः स्यादेवेति वदन्ति।

नागेशभट्टस्तु-फलावशिष्टव्यापारे, व्यापारविशिष्टफले च धातूनां शक्तिः। अन्यथा व्यापारोद्देश्यकफलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य बोधापत्तिः, उद्देश्यविधेयभावेनान्वयप्रयोजिकायाः पृथगुपस्थितेः सत्त्वात्। फलावच्छिन्नव्यापारबोधे कर्त्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्। एवं व्यापारावच्छिन्नफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति न सर्वत्र सर्वबोधप्रसङ्ग इत्याह। वस्तुतस्तु—विशिष्टे शक्तिर्नास्ति, फलावच्छिन्नव्यापारत्वस्य, व्यापारावच्छिन्नफलत्वस्य च शक्यतावच्छेदकत्वे गौरवात्। फलव्यापारयोरेकदेशत्वेन तत्र कर्त्तृकर्मादीनामन्वयासम्भवाच्च। प्राचीनमते एकवृन्तावलम्बिफलद्वयवत् उभयांशे एका खण्डशश्शक्तिरिति न शक्तिद्वयकल्पनं, न वा बोधजनकत्वसम्बन्धद्वयकल्पनम्। प्रत्युत नव्यानामेव तत् कल्पनीयं भवेदिति तत्त्वविदः।

ततो मण्डनमिश्रस्य मीमांसकस्य "फलमेव धात्वर्थः, अनुकूलव्यापारस्तु=आख्यातार्थः, लडाद्यर्थवर्त्तमानत्वादीनां व्यापारेऽन्वयः, एकपदोपात्तत्वात्। फलस्याख्यातार्थव्यापारं प्रति विशेषणत्वम्" इति मतं 'यत्तु' इत्यादिनाऽनूद्य तन्नेत्यादिना प्रत्याख्यातम्। अन्ये मीमांसकास्तु—व्यापारमात्रं धात्वर्थः, फलञ्च द्वितीयार्थ इति मन्यन्ते। तन्न शोभनम्। तथा हि व्यापारो व्यापारत्वेन धातुवाच्य उत क्रियात्वेन तत्तद्रूपेण वा? नाद्यः, निखिलधातूनां पर्यायतापत्तेः। न द्वितीयः, त्यजिगम्योः पर्यायतापत्तेः। पूर्वदेशविभागानुकूला क्रिया त्यजेरर्थः। सैवोत्तरदेशसंयोगानुकूला क्रिया गमधात्वर्थः। क्रिया चात्र पादसञ्चारादिरूपा। तस्याश्चोभयधातुवाच्यत्वात्। नापि तृतीयः, उक्तदोषात्। एवं फलस्य द्वितीयार्थत्वेऽपि उक्तविकल्पदोषो बोध्यः। तत्तद्धातुसमभिव्याहृतद्वितीयाया एव संयोगादिफलवाचकत्वम् इत्यङ्गीकारे तु महद्गौरवम्।

नव्यमीमांसकास्तु—फलव्यापारौ धात्वर्थौ। उभयत्र खण्डश एका शक्तिः। अत एव पदार्थैकदेशान्वयशङ्कापि न। तत्र जन्यजनकभावः संसर्गः। व्यापारमुख्यविशेष्यकश्च बोधः। तत्रैव कर्मातिरिक्तकारकाणामन्वयः। कर्मकारकस्य च कर्त्तृपदसमभिव्याहारे फलेऽन्वय इत्याहुः।

पुनः क्रियास्वरूपघटकसिद्धत्वसाध्यत्वे कौण्डभट्टरीत्या परिष्कृत्य 'वस्तुतः' इत्यादिना स्वमतं प्रदर्शितवान् 'साध्यत्वं निष्पाद्यत्वमेव' इति । अस्त्यादीनां धातुत्वसम्पादनार्थं तेषामर्थविशेषः प्रदर्शितः । सकर्मकाकर्मकत्वे च परिष्कृते । 'अध्यासिता भूमय' इत्याद्यनुरोधेन सकर्मकत्वं प्रकारान्तरेण परिष्कृत्य जानातीच्छतीत्यादीनां सकर्मकत्व-सम्पादनाय स्वाभिमतोऽर्थः प्रदर्शितः ।

फलव्यापारौ धात्वर्थः, आख्यातार्थः कृतिः, प्रथमान्तार्थमुख्यविशेष्य-कश्च शाब्दबोधः, इति तार्किकमतमनूद्य निराकृतं ग्रन्थकृता ।

इति धात्वर्थविचारसारांशः ।

## अथ निपातार्थविचारः ।

प्रकरणस्यास्यायं निष्कर्षः—निपातार्थविषये पक्षत्रयं दृश्यते । निपातार्थानां प्रकर्षादीनां धातुमात्रतो बोधाभावेन उपसर्गसम्बन्धात्तदवगम इति उपसर्गाणां विशेषार्थद्योतकत्वमेव । यथा 'अनुभवति,' इत्यत्र अनुभवरूपस्यार्थस्य अनुशब्दो द्योतकः । तदुक्तं हरिणा—

"क्वचित्सम्भविनो भेदाः केवलैरनिदर्शिताः ।
उपसर्गेण सम्बन्धे व्यज्यते प्रपरादिना ।" इति प्रथमः पक्षः ।

क्वचिच्च उपसर्गाणां वाचकत्वमपि । यथा 'प्रतिष्ठते' इत्यादौ धातोर्ग-तिनिवृत्तिवाचकत्वं प्रशब्दस्य तु गतिवाचकत्वम् । तदुक्तं 'स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा' इति द्वितीयः पक्षः । तृतीयस्तु—सम्भूय धातूपसर्गौ अर्थमाहतुः । उपसर्गस्तु शक्तिमात्रं कुरुते इति अर्थाभिधाने सहकारिण उपसर्गाः । उक्तञ्च वाक्यपदीये—'शक्त्या-धानाय धातोर्वा सहकारी प्रयुज्यते' इति ।

उक्तेषु त्रिषु पक्षेषु कतमः पक्षः श्रेष्ठ इति विचारावसरे उपसर्गाणां द्योतकत्वमेव समुचितम् । प्रतिष्ठते इत्यत्र धातूनामनेकार्थत्वात् स्थाधातोरेव गतिरर्थः, प्रशब्दस्तु द्योतकः । तदुक्तं "स्थादिभिः केवलैर्यच्च गमनादिर्न गम्यते । तत्रानुमानाद् द्विविधात् तद्धर्मा प्रादिरुच्यते" इति । अयम्भावः

तिष्ठतिर्गतिनिवृत्तिं प्रसिद्धया अभिदधाति। अतः केवलेन तेन गमनं न प्रतिपाद्यते। अनेकार्था धातव इति कृत्वा अनुमानाद् गतिवाचकत्वमपि तस्य व्यवस्थाप्यते। उपसर्गस्तु तद्द्योतक एव। धातूनामनेकार्थत्वमुपसर्गाणाञ्च द्योतकत्वमनुमानेन साधयन्नाह—तत्रेति। अनुमानप्रकारश्च—धातुः अनेकार्थः धातुत्वात् उभयवादिसम्मतानेकार्थयजधातुवत्। प्रशब्दो द्योतकः प्रशब्दत्वात् प्रपचतीत्यादिदृष्टप्रशब्दवदिति।

एवं चादिनिपातेष्वपि पक्षत्रयं बोध्यम्। तदुक्तं हरिणा 'निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः। आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः" इति। अत्रापि द्योतकत्वपक्ष एव न्याय्यः, केवलानां चादीनामप्रयोगात्। यदि वाचकाः स्युस्तदा गवादिवत् केवला अपि प्रयुज्येरन्। तस्मान्न वाचकाः केवलानामप्रयोगात् प्रत्ययवदित्यनुमानं फलितम्। तदुक्तं वाक्यपदीये 'चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः। प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते' इति। एवञ्च प्रादीनां चादीनाञ्च निपातानां द्योतकत्वमेवेति हरीणां हृदयम्। नागेशस्यापि अयमेव पक्ष इष्टः, प्रकृतप्रकरणे पुनः पुनः तस्यैव समर्थनात्। भट्टोजिदीक्षितप्रभृतयः प्राचीनवैयाकरणास्तु—निपातत्वावच्छिन्नानां सकलनिपातानां द्योतकत्ववाचकत्वे मन्वते, न तु प्रादीनां द्योतकत्वं, चादीनां वाचकत्वमेवेति नैयायिकरीतिः साध्वी, वैषम्ये बीजाभावात्। अत एव द्योतकत्वपक्षं समर्थ्य 'निपातानां वाचकत्वमन्वयव्यतिरेकयोः' इत्यादिना वाचकत्वपक्षोऽपि समर्थितो भूषणादौ।

इति निपातार्थविचारसारांशः।

## अथ लादेशार्थविचारः।

'उच्चारित एव शब्दोऽर्थप्रत्यायको भवति नानुच्चारितः' इति भाष्याल्लोके तथैवानुभवाच्च लादेशानां तिङामर्थनिरूपणाय प्रकरणमिदं प्रारब्धम्। 'वर्तमाने लट्' इत्यादिविधायकानां 'लः कर्मणि' इत्यादिशक्तिग्राहकसूत्राणाञ्चादेशार्थे स्थानिन्यारोप्य प्रवृत्तिः। तत्र सङ्ख्याविशेषकालविशेष-कारकविशेष-भावा लादेशमात्रस्यार्थाः। धातूनां फलव्यापारौ

अर्थौ, तिङर्थाः—कर्त्तृकर्म—सङ्ख्या—कालाः। तत्र संख्या कर्त्तृप्रत्यये कर्त्तरि, कर्मप्रत्यये तु कर्माणि विशेषणम्। कालस्तु धात्वर्थव्यापारे विशेषणम्। फलव्यापारयोः फलं विशेषणम्, व्यापारः प्रधानम्। इदमत्र रहस्यम्—'क्रियाप्रधानमाख्यातम्' इति निरुक्तात्, "भूवादयो धातवः" इति सूत्रस्थक्रियाप्राधान्यबोधकभाष्याच्च कर्त्राख्याते कर्माख्याते वा सर्वत्र व्यापारमुख्यविशेष्यक एव बोधः। अत एव 'फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्, इति सङ्गच्छते। एवञ्च 'ग्रामं गच्छति चैत्रः' इत्यत्र ग्रामाभिन्नकर्मनिष्ठसंयोगानुकूल एकत्वावच्छिन्नचैत्राभिन्नकर्त्तृको वर्तमानकालिको व्यापारः। 'ग्रामो गम्यते चैत्रेण' इत्यत्र तु चैत्राभिन्नकर्त्तृवृत्तिः वर्तमानकालिक एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठसंयोगानुकूलो व्यापार इति प्राचीनवैयाकरणाः। नव्यास्तु—कर्त्राख्याते व्यापारमुख्यविशेष्यकः, कर्माख्याते तु फलमुख्यविशेष्यको बोधः। 'फले प्रधानं व्यापारः' इत्यादिना व्यापारस्य प्राधान्यबोधनं तु कर्त्राख्याताभिप्रायेण। अथवा तत्र प्रधानाप्रधानोभयपदच्छेदः। प्रधानं कर्त्तृप्रत्ययसमभिव्याहारतात्पर्यकम्। अप्रधानन्तु कर्मप्रत्ययसमभिव्याहारतात्पर्यकम् इति न काप्यनुपपत्तिः। अत एव "सुप आत्मनः क्यच्" इति सूत्रस्थं भाष्यं सङ्गच्छते।

वर्तमानत्वादिकालो लडादिद्योत्यः, वाच्योऽपि। पक्षद्वयस्यापि भाष्यादावभिहितत्वात्, युक्तियुक्तत्वाच्च। तथाहि तत्तद्धातूनामेव वर्तमानोऽर्थः। लट् तु तद्द्योतकः। न च बहूनां धातूनां तत्र शक्तिकल्पने शक्ततावच्छेदकनानात्वात् गौरवमिति वाच्यम्। व्यापारसन्तानस्यैव कालत्वेनाभ्युपगमात्। तस्य च धात्वर्थत्वात्। कालस्य व्यापारसन्तानातिरिक्तत्वे प्रमाणाभावात्। तथा च तस्मिन् द्योत्ये लडादय इति 'वर्तमाने लट्' इति सूत्रार्थः। तस्माद् द्योतकत्वमेव लटः। एवं वाचकत्वमपि, 'वर्तमाने लट्' इति सूत्रात् वर्तमानकाले लड्विधानात्' व्यापारसन्तानस्य कालात्मकत्वाभावाच्च। तथा चोक्तं हरिणा—'क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका' इति। अनेन स्पष्टमेव क्रियापरिच्छेदकत्वं कालस्योक्तम्। नहि स्वपरिच्छेदकत्वं स्वस्य सम्भवति। तस्मात् वाचकत्वमेव लटः। नैयायिकास्तु—लकाराणां कृतौ शक्तिः, कृतित्वजातेः शक्यतावच्छेदकत्वे

लाघवात् । रथो गच्छतीत्यादौ व्यापारे लक्षणा । शक्ततावच्छेदकञ्च लकारसाधारणं लत्वमेव । तिप्त्वादीनां शक्ततावच्छेदकत्वे गौरवम् । अयमत्र विशेषः लत्वेन यत्ने शक्तिः, आत्मनेपदत्वेन च फले । अन्यूनानतिप्रसक्तस्य धर्मस्यैवावच्छेदकत्वनियमेनात्मनेपदत्वस्य तथात्वादित्याहुः ।

इति लकारार्थविचारसारांशः ।

## अथ कारकविचारः ।

क्रियाजनकत्वं कारकत्वमिति कारकसामान्यलक्षणम् । तच्च जनकत्वं कारणत्वरूपम् । कारणत्वञ्चान्यथासिद्धिशून्यत्वे सति कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । एवञ्च चैत्रस्य तण्डुलं पचतीत्यादौ चैत्रस्यान्यथासिद्धत्वेन क्रियाजनकत्वाभावान्न कारकत्वम् । सम्प्रदानस्य तु अनुमतिप्रकाशनद्वारा क्रियाजनकत्वम् । अनुमतिसत्त्वे दानस्य प्रवृत्तिः, तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्याम् । एवं कटे आस्ते इत्यादौ अधिकरणकारकस्यापि स्थितिं प्रति कारणत्वात् क्रियाजनकत्वमक्षुण्णमेव । न च घटं करोतीत्यादौ घटस्यानुत्पन्नत्वेन क्रियाजनकत्वाभावात् कारकत्वानापत्तिरिति वाच्यम् । कपालनिष्ठजनकत्वस्य घटे आरोपेणादोषात् । बौद्धार्थकर्मत्वाद्वा । एवमपादानस्यापि क्रियाजनकत्वम्, वृक्षाभावे पर्णविभागस्यैवासम्भवात् ।

नैयायिकास्तु-विभक्त्यर्थद्वारा क्रियान्वयित्वं कारकत्वम् । क्रियाविषयतानिरूपितविभक्त्यर्थविषयतानिरूपितविषयताश्रयत्वमिति निष्कर्षः । स्तोकं पचतीत्यत्र क्रियाविशेषणस्य स्तोकस्य कारकत्ववारणाय विभक्त्यर्थद्वारेति । चैत्रस्य तण्डुलं पचतीत्यादौ तु चैत्रस्य विभक्त्यर्थद्वारा क्रियान्वयित्वाभावान्न कारकत्वमिति परिष्कुर्वन्तीत्याहुस्तन्न । कटे आस्ते, स्थाल्यां पचतीत्यादौ कटस्थाल्योः कर्त्तृकर्मद्वारा क्रियान्वयित्वेन विभक्त्यर्थद्वारा क्रियान्वयित्वाभावात् कारकत्वानापत्तेः, कर्त्तुरपि कारकत्वानापत्तेश्चेति ।

कर्त्तृत्वञ्च—प्रकृतधातुवाच्यव्यापाराश्रयत्वम् । तेन प्रयोज्यप्रयोजकानुक्तकर्त्तॄणां सर्वेषां संग्रहः । माषेष्वश्वं बध्नातीत्यत्र तु गलबिलाधःसंयोगानुकूलव्यापाराश्रयत्वेनाश्वस्य कर्त्तृत्वेऽपि प्रकृतधातुवाच्यव्यापाराश्रयत्वाभावान्न

कर्त्तृत्वापत्तिरिति। कर्मत्वञ्च—प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृत-धात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्। इदमेव कर्मलक्षणे ईप्सिततमत्वम्। 'गां पयो दोग्धि' अत्र पयसः कर्मत्वसिद्धये प्रयोज्यत्वनिवेशः। 'प्रयागात् काशीं गच्छति' अत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेति। नैयायिकास्तु—धात्वर्थतावच्छेदकव्यापारव्यधिकरणफलशालित्वं कर्मत्वम्। तादृशं च फलं गमेस्संयोगः, त्यजेर्विभागः, पतेरधोदेशसंयोगः। अधो-देशरूपकर्मणो धात्वर्थनिविष्टत्वादकर्मत्वेन 'पर्णं वृक्षाद् भूमौ पतति, संयोगमात्रफलपक्षे वृक्षाद् भूमिं पतति' इति प्रयोगः इत्याहुः।

करणत्वञ्च—स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वम्। इदमेव साधकतमत्वम्। 'रामेण बाणेन हतो वाली' इत्यत्र बाणव्यापारा-व्यवहितोत्तरफलनिष्पादकत्वं बाणस्येति लक्षणसमन्वयः।

क्रियामात्रकर्मसम्बन्धाय क्रियायामुद्देश्यं यत् कारकं तत्त्वं सम्प्रदानत्वम्। यथा ब्राह्मणाय गां ददातीत्यादौ दानक्रियाकर्मीभूतगोसम्बन्धाय ब्राह्मणो दानक्रियोद्देश्यः। गोब्राह्मणयोः स्वस्वामिभावः सम्बन्धः।

तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वमपादान-त्वम्। तदेवावधित्वम्। विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव, किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिपरिकल्पितोऽपि। माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिपरिकल्पितापायाश्रयणेनैव भाष्ये पञ्चमीसाधनात्।

अधिकरणत्वञ्च — कर्त्तृकर्मद्वारकफलव्यापाराधारत्वम्। यथा स्थाल्यामोदनं गृहे पचतीत्यादौ कर्मद्वारकविक्लित्तिरूपफलाधारः स्थाली, कर्त्तृद्वारकव्यापाराधारो गृहमिति।

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः षष्ठ्या वाच्यः। राज्ञः पुरुष इत्यादौ षष्ठीवाच्यसम्बन्धस्याश्रयाश्रयिभावसम्बन्धेन पुरुषेऽन्वयः, राजनिरूपितसम्बन्धवान् पुरुष इति बोधात्। अत्र सम्बन्धत्वेन रूपेण तत्तत्सम्बन्धे शक्तिः। एवञ्च शक्यतावच्छेदकस्य सम्बन्धत्वस्य कर्त्तृत्वकर्मत्वादिषु विद्यमानत्वात् सम्बन्धत्वेन रूपेण षष्ठ्यर्थ-

ताऽस्त्येव। अत एव सम्बन्धत्वाविवक्षायां सतां गतं, सर्पिषो जानीते, इत्यादौ षष्ठी साधिता सिद्धान्तकौमुद्याम् इति प्राचीनानां हृदयम्।

नवीनास्तु—न सम्बन्धत्वेन रूपेण स्वस्वामिभावादिसम्बन्धः षष्ठ्या वाच्यः। अत एव 'एकशतं षष्ठ्यर्थाः' इति षष्ठी स्थानेयोगा इति सूत्रस्थं भाष्यं सङ्गच्छते। राज्ञः पुरुष इत्यत्र स्वत्वस्वामित्वरूपः समूहः षष्ठ्यर्थो न तु स्वत्वं स्वामित्वं वा, तस्यैकमात्रवृत्तित्वात्, सम्बन्धस्य च द्विष्ठत्वनियमात्। षष्ठ्यर्थसम्बन्धस्तु संसर्गविधयैव भासते न तु प्रकारविधया। एवञ्च राज्ञः पुरुष इत्यत्र स्वस्वामिभावसम्बन्धेन राजविशिष्टः पुरुषः इति बोधः। मूलोक्तं तु प्रकारविधया भानानुरोधेनेत्याहुः।

इति कारकविचारसारांशः।

## अथ नामार्थविचारसारांशः।

अत्र मीमांसकाः—शब्दानां जातौ शक्तिर्लाघवात्, व्यक्तीनामानन्त्येन तत्र शक्तौ गौरवात्। जातेः शब्दशक्यत्वे 'जात्याख्यायामेकस्मिन्०' (पा० १।२।५८) इति सूत्रं, "सवर्णेऽण्ग्रहणमपरिभाष्यम्, आकृतिग्रहणात् सिद्धम्" इति वार्तिकम्, 'सरूप०' (१।२।६४) सूत्रस्थम् 'आकृतिं वाजप्यायनः' इति भाष्यञ्च प्रमाणम् इत्याहुः तन्न; व्यक्तीनामानन्त्येऽपि शक्यतावच्छेदकजातेरुपलक्षणत्वेन तदैक्येन च तादृशजात्युपलक्षितव्यक्तौ शक्तिस्वीकारेणानन्तशक्तिकल्पनाविरहेणागौरवात्। वस्तुतस्तु 'न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः' इति सरूपसूत्रभाष्याद् विशिष्टमेव वाच्यं तथैवानुभवात्। अनुभवसिद्धस्यापलापानर्हत्वाच्च। लिङ्गं, सङ्ख्या, कारकञ्च प्रातिपदिकार्थः। 'एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा। नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः' इत्यनेन जातिव्यक्तिलिङ्गसङ्ख्याकारकाणां नामार्थत्वबोधनात्। प्रत्ययानां द्योतकत्वेन प्रकृतेर्वाचकत्वं युक्तम्। धातुप्रत्ययप्रत्ययान्ततदादिभिन्नो योऽर्थवान् शब्दः, तत्त्वं प्रातिपदिकत्वमिति अनुगतस्य प्रातिपदिकत्वस्य शक्ततावच्छेदकतया नानन्तशक्ततावच्छेदकत्वकल्पनं, न वा शक्त्यानन्त्यम्।

शक्त्यानन्त्येऽपि फलमुखगौरवस्यादोषत्वान्न दोषः । यद्यपि अन्वय-व्यतिरेकाभ्यां विभक्तीनामेव सङ्ख्यावाचकत्वकल्पनमुचितं तथापि दधि, मधु चानयेत्यादौ विभक्तिं विनापि संख्याकारकप्रतीत्या व्यतिरेकव्यभि-चारात् हेयमेवेति । वस्तुतस्तु न वा संख्यावाचिका प्रकृतिः, विभक्तिर्वा । किन्तु 'घटः' इति विभक्त्यन्तसमुदायः संख्याविशिष्टघटवाचकः । तदुक्तं "वाचिका द्योतिका वा स्युर्द्वित्वादीनां विभक्तयः" शक्ततावच्छेदिका तत्तदानुपूर्वीति न कश्चिद् दोषः । विशेषणतया शब्दोऽपि शाब्दबोधे भासते । युधिष्ठिर आसीदित्यादौ युधिष्ठिरशब्दवाच्यः कश्चिदासीदिति बोधात् । तथा चोक्तम्--

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इति ।

इति नामार्थविचारसारांशः ।

## अथ समासादिवृत्त्यर्थविचारः ।

अत्र समासकृत्तद्धितैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः सन्ति । अयं विभागः प्राचीनमतानुसारेण । नवीनास्तु—एकशेषस्य वृत्तित्वं नेच्छन्ति। परार्थान्वितस्वार्थोपस्थापकस्यैव वृत्तित्वात्, तस्य च तत्राभावात्। अत एव 'समर्थः पदविधिः' (पा० २ । १ । १) इति सूत्रस्याधिकार-त्वपक्षे एकशेषासङ्ग्रह उक्तो भाष्ये। वृत्तिर्द्विधा—जहत्स्वार्थाऽजहत्स्वा-र्था च । अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वं जहत्स्वार्थात्वम् । अवयवार्थसंवलितसमुदायार्थबोधिकात्वमजहत्स्वार्थात्वम्। रथन्तरं सामवेदः, शुश्रूषा सेवा इति पूर्वस्या उदाहरणम्। राजपुरुष इत्यादावन्त्या ।

समासादिपञ्चसु विशिष्टे एव शक्तिर्नत्ववयवे, रथन्तरं, सप्तपर्णः शुश्रूषेत्यादौ अवयवार्थानुभवाभावात् । नैयायिकमीमांसाकादयस्तु—समासे शक्तिं न स्वीकुर्वन्ति। राजपुरुष इत्यादौ सम्बन्धभानार्थमेव समुदायशक्तिः स्वीक्रियते। तत्र च समुदायशक्तिमन्तरापि राजपदस्य राजसम्बन्धिनि लक्षणायां सम्बन्धभानसम्भवे तदर्थं समुदायशक्तिर्न स्वीकार्या इत्याहुः। तन्न, समासे शक्त्यस्वीकारे विशिष्टस्यार्थवत्त्वाभावेन प्रातिपदिकत्वं न

स्यात्, एवञ्च दशदाडिमादिसमुदायस्य वृत्तिमत्त्वरूपार्थवत्त्वाभावान्न प्रातिपदिकत्वं भवति ।

भट्टमतानुयायिनस्तु–समासेषु न शक्तिः, न वा लक्षणा, किन्तु समासोपस्थापितविग्रहवाक्यादेव बोधः श्लोकादावन्वयवाक्यादिवत् । अत एव 'रामस्तत्पुरुषं प्राह बहुव्रीहिं महेश्वरः । अन्ये तु ऋषयः सर्वे कर्मधारयमूचिरे' इत्यादौ विग्रहवाक्योपस्थित्यैव बोधः । एवं विग्रहसंदेहे बोधसन्देहोऽप्युपपद्यते इति वदन्ति, तदपि न, विग्रहवाक्यमजानतामपि समासतोऽर्थबोधदर्शनाच्छक्तिमन्तरा तद्बोधानुपपत्तेः । किञ्च "अन्यपदार्थे च संज्ञायाम्" (पा० २ । १ । २१) इत्यादिना उन्मत्तगङ्गम्, लोहितगङ्गम्, अरण्ये तिलका इत्यादौ वाक्येन संज्ञानवगमादिह नित्यसमास इत्युक्तम् । अत्र विग्रहवाक्यात् संज्ञावगमाभावेन समासशक्तिस्वीकारमृते न निर्वाह इत्यवश्यं विशिष्टशक्तिः स्वीकार्या ।

इति समासादिवृत्त्यर्थविचारसारांशः ।

---

## उपकारस्मरणम् ।

सर्वप्रथमं तेषां कैरवकोविदकुलकलाधराणां विपश्चिदपश्चिमानां सर्वतन्त्रस्वतन्त्राणां श्रीमतां सभापतिशर्मोपाध्यायगुरुवर्याणां चरणयोः प्रणतितितिपुष्पाञ्जलिं समर्पयामि, येषां पादपद्मादेव कञ्चन परागं समवाप्य षट्पद इवात्रोपयुक्तवानस्मि ।

अस्मिन्नवसरे बड़ौदाविश्वविद्यालयस्य उपकुलपतिचरश्रीहंसामहेतामहोदयानामुपकारं कथं विस्मरामि, यासां भूयो भूयः प्रवर्तनया कार्येऽस्मिन्नहं व्यापृतोऽभूवम् ।

प्राच्यप्रतीच्योभयविद्याविशारदानां गुर्जरसाहित्यसम्राजां बड़ौदाविश्वविद्यालय-प्राच्यमान्दिराध्यक्षाणां ( Director, Oriental Institute ) श्रीमतां भोगीलाल जे. सांडेसरामहोदयानां कृतेऽनेके साधुवादाः सन्ति,

यतो हि तेषां सौजन्येनैवाहं पुस्तकनिमित्तं धन्यवादं प्रदातुमवसरं समासादितवानस्मि ।

बड़ोदा म. स. विश्वविद्यालय-संस्कृतमहाविद्यालयस्य प्रधानाचार्याः श्रीहरिप्रसाद छगनलालमहेतामहोदया अपि अनेकैः साधुवादैः संयुज्यन्ते । तेऽपि कार्यस्यास्य सम्पादने महत्साहाय्यमाचरितवन्तः सन्ति ।

पुस्तकस्यास्य इङ्गलिशभूमिकानिर्माणे भृशमुपकुर्वतां वाराणसेय-संस्कृतविश्वविद्यालयाध्यापकानाम् एम. ए. व्याकरणाचार्य—साहित्यरत्नोपाधिविभूषितानां श्रीमतां रामावधपाण्डेयमहोदयानां पौनः पुन्येन कृतज्ञतां प्रकाशयामि ।

बड़ोदा म. स. विश्वविद्यालय-संस्कृतमहाविद्यालयव्याकरणोत्तमकक्षाध्यापकेन व्याकरणन्यायाचार्यलब्धस्वर्णपदक-पं. श्रीशोभितमिश्रमहाभागेन संशोधनमुद्रणसम्पादनादिकार्ये कृतभूरिसाहाय्येन भृशमुपकृतोऽस्मि ।

प्रतिलिप्यादिसौविध्यसम्पादनेन भृशं साहाय्यमर्पितवत आयुष्मते साहित्यव्याकरणाचार्य्यश्रीरत्नचन्द्रमहोदयायानेक आशीर्वादा वितीर्यन्ते ।

विश्वविद्यालयानुदानायोग-( University Grants Commission ) वड़ौदाविश्वविद्यालययोस्तु कृतज्ञतामाविष्करोमि, यौ प्रकाशनस्याखिलमपि व्ययमर्धमर्धं विभज्य प्रदत्तवन्तौ, संस्कृतसाहित्यं माञ्च भृशमुपकृतवन्ताविति ।

विदुषां वशंवदः

कालिकाप्रसादशुक्लः

# सहायकग्रन्थाः ।

## परमलघुमञ्जूषाटीकाया विशिष्टानां सहायकग्रन्थानां नामानि

१ ऋग्वेदः
२ यजुर्वेदः
३ शतपथब्राह्मणः
४ गोपथब्राह्मणः
५ कठोपनिषद्
६ ऋक्तन्त्रम्
७ ऋक्प्रातिशाख्यम्
८ महाभाष्यम्—प्रदीपोद्द्योतसहितम्
९ वाक्यपदीयम्—हेलाराज—पुण्यराज—श्रीसूर्यनारायणशुक्लटीका-सहितम्
१० शब्दकौस्तुभः—भट्टोजिदीक्षितकृतः
११ प्रौढमनोरमा—शब्दरत्न—रत्नप्रकाशिका—रत्नप्रभासंवलिता
१२ वैयाकरणभूषणसारः—काशिका—दर्पण—परीक्षा-प्रभाटीकासहितः
१३ काशिका—पदमञ्जरीसहिता
१४ वैयाकरणसिद्धान्तलघुमञ्जूषा—रत्नप्रभा—कलाकुञ्जिकासहिता
१५ शब्देन्दुशेखरः—अभिनवचन्द्रिका—चिदस्थिमाला—तिलक—ज्योत्स्ना—विषमपदविवृति—विजया-वरवर्णिनी-दीपकसहितः
१६ परिभाषेन्दुशेखरः—भूति—विजयासहितः
१७ स्फोटसिद्धिः—मण्डनमिश्रः
१८ स्फोटसिद्धिः—भरतमिश्रः
१९ स्फोटसिद्धिन्यायविचारः—गणपतिशास्त्रिसम्पादितः

२० स्फोटप्रतिष्ठा—केशवकविः
२१ स्फोटतत्त्वम्—शेषकृष्णकविः
२२ स्फोटचन्द्रिका—श्रीकृष्णभट्टः
२३ स्फोटनिरूपणम्—आपदेवः
२४ स्फोटवादः—कुन्दभट्टः
२५ परिभाषावृत्तिः—सीरदेवः
२६ भाषावृत्तिः—पुरुषोत्तमदेवः
२७ पाणिनीयशिक्षा—पाणिनिः
२८ ब्रह्मसूत्रम्—सशाङ्करभाष्यम्
२९ भामती—वाचस्पतिमिश्रः
३० मीमांसादर्शनम्—सशाबरभाष्यम्
३१ श्लोकवार्तिकम्—कुमारिलभट्टः
३२ तन्त्रवार्तिकम्— ,, ,,
३३ पातञ्जलयोगदर्शनम्—व्यासभाष्यसहितम्
३४ परमार्थसारः—आदिशेषः
३५ सर्वदर्शनसंग्रहः—माधवः
३६ योगदर्शनम्—सशाङ्करभाष्यम्
३७ साङ्ख्यदर्शनम्—विज्ञानभिक्षुटीकासहितम्
३८ साङ्ख्यकारिका—साङ्ख्यतत्त्वकौमुदीसहिता
३९ वैशेषिकदर्शनम्—प्रशस्तपादभाष्यसहितम्
४० न्यायकन्दली—श्रीधरः
४१ न्यायदर्शनम्—वात्स्यायनभाष्यसहितम्
४२ शब्दशक्तिप्रकाशिका—जगदीशतर्कालङ्कारः
४३ शास्त्रदीपिका—पार्थसारथिमिश्रः
४४ न्यायमञ्जरी—जयन्तभट्टः
४५ व्युत्पत्तिवादः—गदाधरभट्टः
४६ शक्तिवादः— ,, ,,
४७ प्रपञ्चसारः—शङ्कराचार्यः

४८ सूतसंहिता—( स्कन्दपुराणान्तर्गता )
४९ काशीखण्डः—( स्कन्दपुराणान्तर्गतः )
५० परमलघुमञ्जूषा—रत्नदीपिकाव्याख्यासहिता
५१ व्याकरणदर्शनभूमिका—पं॰ श्रीरामाज्ञापाण्डेयः
५२ ललितासहस्रनाम—भास्कररायभाष्यसहितम्
५३ शारदातिलकम्—लक्ष्मणदेशिकः
५४ शिवदृष्टिः—सोमानन्दः
५५ तत्त्वसंग्रहः
५६ निरुक्तम्—दुर्गाचार्यटीकासहितम्
५७ प्रकरणपञ्जिका—श्रीशालिकनाथमिश्रः
५८ कूर्मपुराणम्

---

# विषयसूची

| विषयः | | पृष्ठम् |
|---|---|---|
| १ | मङ्गलाचरणम् | १ |
| २ | स्फोटभेदप्रतिपादनम् | ८-९ |
| ३ | वाक्यस्फोटस्य मुख्यत्वप्रतिपादनम् | १० |
| ४ | तत्रैव प्रमाणत्वेन न्यायभाष्यकारस्य वचनोपन्यासः | ११-२१ |
| ५ | आप्तलक्षणम् | २५-२६ |
| ६ | शाब्दबोधे कार्यकारणभावप्रदर्शनम् | २७-३२ |
| ७ | वृत्तेस्त्रैविध्यम् | ३२-३३ |
| | अथ शक्तिविचारः । | |
| ८ | तार्किकमते शक्तिनिरूपणम् | ३४-३६ |
| ९ | तन्मतप्रत्याख्यानम् | ३६-३७ |
| १० | वैयाकरणमते शक्तिस्वरूपप्रतिपादनम् | ३७ |
| ११ | शक्तिग्राहकस्य प्रदर्शनम् | ३७ |
| १२ | तादात्म्यस्य सम्बन्धत्वप्रतिपादनम् तत्रैव हरिकारिकोपन्यासः | ३८-३९ |
| १३ | सम्बन्धस्याश्रयप्रतिपादनम् तत्र प्रमाणत्वेन न्यायभाष्यकारवचनोपन्यासश्च | ३९ |
| १४ | तादात्म्यस्याध्यासमूलकत्वे पातञ्जलभाष्योपन्यासः | ४० |
| १५ | ईश्वरसंकेतस्य शक्तित्वनिरासः तत्रैव श्रुत्यादिप्रामाण्यप्रदर्शनम् | ४१-४२ |
| १६ | तादात्म्यस्वरूपप्रतिपादनम् तत्रैव नैयायिकाक्षेपनिराकरणम् | ४२ |
| १७ | शब्दानां बौद्धार्थत्वप्रतिपादनम् | ४२-४४ |
| १८ | अपभ्रंशेषु शक्तिप्रतिपादनम् तार्किकमतखण्डनञ्च | ४५-४८ |
| १९ | शक्तेस्त्रैविध्यप्रतिपादनम् | ४९-५० |
| २० | संयोगादीनां शक्तिनियामकत्वम् | ५०-५३ |

ओम्

श्रीगणेशायनमः

# परमलघुमञ्जूषा

**शिवं नत्वा हि नागेशेनानिन्द्या परमालघुः ॥**
**वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते ॥ १ ॥**

---

श्रीः

मङ्गलमूर्तयेनमः ।

ज्योत्स्ना-प्रारम्भः

देवीं सरस्वतीं ध्यात्वा सर्वकामप्रदायिनीम् ॥
करोमि विशदां ज्योत्स्नां मञ्जूषार्थप्रकाशिनीम् ॥ १ ॥

श्रीमत्सभापतिगुरोश्चरणौ श्रयामि
शब्दानुशासन-महोदधि-पुण्यपोतौ ।
यत्सेवयाल्पमतयोऽपि विनेयवाराः
पारङ्गताः परमतत्त्वविभाविताशाः ॥ २ ॥

भूत्याविभूषितललाटतलावभासं
रुद्राक्षजालजटिलीकृतकम्बुकण्ठम् ।
श्रीमङ्गलामहितमङ्गलपादपद्मं
श्रीचन्द्रशेखरमहं पितरं नमामि ॥ ३ ॥

"प्रतिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिताऽवधेयवचनो भवति, यस्तु अप्रतिपित्सितं प्रतिपादयति नायं लौकिको नापि परीक्षक इति प्रेक्षावद्भिर्भृशमुपेक्ष्यते" "ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन कर्त्तव्यः सम्बन्धः सप्रयोजनः" इत्युभयविधं वचनमनुरुध्य प्रेक्षावत्प्रवृत्तयेऽनुबन्धचतुष्टयं निरूपयन् नागोजिभट्टः शिष्टाचारा-

नुमितवेदबोधितकर्त्तव्यताकं "मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युः" इति पातञ्जलोक्तिसमर्थितञ्च,—मङ्गलं व्याख्याताऽध्येतॄणामनुषङ्गतो मङ्गलाय विघ्नविघाताय शिष्यशिक्षायै च ग्रन्थे निबध्नाति-शिवमित्यादि शिवं-महेश्वरम्, 'विद्याकामः शिवं जपेत्' इति स्मरणात्, अस्य व्याकरणस्य शिवोपदिष्टचतुर्दशसूत्रमूलकत्वान्महेश्वरस्यैव नमनं न्यायः। अथवा शिवभट्टापितरम्।

ननु शिवस्य श्रुतौ निर्गुणत्वप्रतिपादनात् नमस्कारस्य च सगुणत्वप्रयोजकत्वात् शिवकर्मकं नमनमसङ्गतमितिचेन्न, शेते जगत् प्रलयकालेऽस्मिन्निति व्युत्पत्त्या शिवस्य सगुणत्वप्रतिपादनात्। नन्वेवमपि संहारशक्तिमतो द्वेषविषयत्वात् कथङ्कारं तस्य नमस्कारविषयतेतिचेन्न, तत्तत्प्राणिप्रारब्धकर्मवशात् तस्मिन् तस्मिन् काले संहारशक्तिमत्त्वेऽपि स्वभावत आशुतोषकरत्वात् नमस्कारः समुचित एवेति बोधात्। अथवा शिवं स्वपितरं शिवभट्टम्। उपाधिभट्टरहितस्य शिवशब्दस्य प्रयोगकरणमपि कश्चन सम्प्रदायः। **नत्वेति।**

नमधात्वर्थश्च— नमस्कर्तृनिष्ठापकृष्टतानिरूपितोत्कृष्टताविशिष्टबोधानुकूलोव्यापारः, वैशिष्ट्यञ्च स्ववृत्तिविषयतानिरूपकत्व, स्वविषयकबोधीयविषयताश्रयसमवायित्वैतदुभयसम्बन्धाभ्याम्, स्वमुत्कृष्टत्वं प्रथमसम्बन्धे प्रकारताख्या विषयता, द्वितीयसम्बन्धे च विषयः प्रकाररूपः, विषयता च विशेष्यताख्या ग्राह्या, बोधश्च नमस्कार्यस्य। व्यापारश्च—कराशिरःसंयोगकरसंवलनादिरूपः, नमधातूच्चारणरूपश्च। तथा च यत्र "देवदत्तो यज्ञदत्तं नमति" इति प्रयोगः, तत्र देवदत्तस्य करसंवलनकराशिरःसंयोगादिपूर्वकनमामीत्याकारकशब्दोच्चारणरूपव्यापारेण "देवदत्तापेक्षया अहमुत्कृष्टः" इत्याकारको बोधो यज्ञदत्तस्य जायते। अयञ्च बोध उत्कृष्टताविशिष्टो जातः, यतो हि "अहमुत्कृष्टः" इत्यत्रोत्कृष्टतायाः प्रकारीभूतत्वम्, "उत्कृष्टः" इत्यस्य उत्कृष्टताश्रय उत्कर्षाश्रयो वाऽर्थः,

ज्योत्स्ना

तल्प्रत्ययेनोत्कृष्टताया अभिधानम् "प्रकृतिजन्यबोधे प्रकारीभूतोऽर्थो भावप्रत्ययेनाभिधीयते" इति नियमात्। एवञ्च प्रकारताख्या विषयतोत्कृष्टतायां, तन्निरूपकं यज्ञदत्तस्य[1] ज्ञानमिति यज्ञदत्तीयज्ञाने स्ववृत्तिविषयतानिरूपकत्वरूपः प्रथमः सम्बन्धः समन्वितः, द्वितीयसम्बन्धघटको बोधश्च नमस्कर्तुर्ग्राह्यः। स च बोधः "मदपेक्षया यज्ञदत्त उत्कृष्टः" इत्याकारको देवदत्तस्य, अस्मिंश्च बोधे यज्ञदत्तो विशेष्यः, उत्कृष्टता प्रकारीभूता, तथा च स्वं– उत्कृष्टता, तत्प्रकारको बोधो "यज्ञदत्तो मदपेक्षया उत्कृष्टः" इत्याकारकः, एतादृशबोधीया विशेष्यता यज्ञदत्तनिष्ठा, विशेष्यताश्रयो यज्ञदत्तः, तत्समवायित्वं पूर्वोक्ते "देवदत्तापेक्षया अहमुत्कृष्टः" इत्याकारके यज्ञदत्तस्य बोधे वर्तत इति द्वितीयोऽपि सम्बन्धः समन्वितः, एवञ्चोभयसम्बन्धेनोत्कृष्टतावैशिष्ट्यं यज्ञदत्तीयबोधे सङ्गतम्। वैशिष्ट्यघटकाद्वितीयसम्बन्धदानेन यत्र "देवदत्तो यज्ञदत्तं नमति न मैत्रं" इति वाक्येन समीपे वर्त्तमानस्य मैत्रस्यापि बोधो जातो यत् मां नमतीति, तत्र अस्य बोधस्योत्कृष्टताप्रकारकत्वेऽपि "मदपेक्षयोत्कृष्टो यज्ञदत्तः" इत्याकारकदेवदत्तज्ञानीयविशेष्यताख्यविषयताश्रयत्वस्य यज्ञदत्ते एव सत्त्वेन प्रथमसम्बन्धस्य सत्त्वेऽपि द्वितीयसम्बन्धाभावात् "एकसत्त्वेऽपि द्वयं नास्ती"ति प्रतीत्योभयस्याभावात् नोत्कृष्टतावैशिष्ट्यं मैत्रीयज्ञाने।

यत्तु–"स्वाश्रयसमवेतत्व, स्वप्रकारकत्वैतदुभयसम्बन्धेन ज्ञाने उत्कर्षवैशिष्ट्यम्" इति, तन्न-यत्रोत्कर्षाश्रयत्वं बाधितं तत्र 'नमस्करोति' इति प्रयोगानुपपत्तेः। यत्रोदासीनो वस्तुत उत्कृष्टस्तत्र 'नमस्करोति' इति प्रयोगापत्तेश्च। न च 'स्थाणुं नमस्करोति' इति प्रयोगानुपपत्तिः,

---

[1] विषयताया निरूपकं ज्ञानम्भवति, यतो हि विषयस्य स्वरूपतोऽवस्थानेपि यदैव तद्विषयकं ज्ञानम्भवति तदैव विषयता प्रतीयते नान्यथेति विषयताया निरूकत्वं ज्ञानस्य वर्त्तते; इयमेव सरणी सविषयकेच्छादीनामपि विषये ऽवगन्तव्या।

स्थाणोरचेतनत्वेन स्वप्रकारकज्ञानसमवेतत्वस्याभावादिति वाच्यम्? तत्र चेतनत्वभ्रमेण चेतनत्वारोपेण देवतात्वारोपेण वा तादृशप्रयोगोपपत्तेः। इत्यभिनवचन्द्रिकाकाराः।

**विजयाकारास्तु**—स्वनिष्ठापकृष्टत्वप्रकारकबोधानुकूलव्यापाररूपनमस्कारो नमधात्वर्थः। स्वं-नमस्कर्त्ता, व्यापारश्च-कराशिरस्संयोगादिरूपो बोध्यः। ननु देवदत्तस्य स्वापेक्षयाऽपकृष्टत्वे 'देवदत्तं नमस्करोति' इति प्रयोगो न स्यात्, तादृशबोधस्य तत्रासम्भवात्। ननु तादृशबोधाभावेऽपि तदाश्रयत्वेनेच्छोद्देश्यत्वस्य तत्रापि सत्त्वान्न कर्मत्वानुपपत्तिः, न वा बोधानुपपत्तिः, बाधितस्यापि भ्रमात्मकबोधसम्भवादिति चेत्? न; अयं साम्प्रति हीनो विनीतश्च न मदीयव्यापारशतेनापि मामपकृष्टं ज्ञास्यति स्वापेक्षयेति निश्चयसद्भावेऽपि तादृशस्येष्टस्य प्रयोगस्यानुपपत्तेः, तत्र कर्त्तुस्तादृशेच्छाया अप्यसम्भवात्, अत्रोच्यते-स्वधर्मिकोऽपकृष्टत्वप्रकारकबोधाश्रयत्वप्रकारको यो बोधः 'अयं मदपेक्षयाऽपकृष्टमात्मानं जानाति' इत्याकारकः, तदनुकूलो व्यापारो नमस्कारः स च बोधो निरुक्तस्थलेऽपि सम्भवतीति नानुपपत्तिः।

न च सन्निहितशूद्रादेरपि तादृशव्यापारेण तादृशबोधसम्भवात् ब्राह्मणं नमति चैत्रे शूद्रं नमतीति प्रयोगापत्तिः। न च दैवात्तादृशबोधाश्रयत्वेऽपि तदाश्रयत्वेनेच्छोद्देश्यत्वाभावान्न शूद्रस्य कर्मत्वापत्तिः, 'कर्त्तुः-' इत्यस्य प्रवृत्त्यभावेऽपि "तथायुक्तम्" इत्यनेन तदापत्तेर्दुर्व्वारत्वादिति वाच्यम्। स्वावधित्वेन विवक्षितवृत्तित्व, स्वप्रकारकबोधाश्रयत्वप्रकारकत्वोभयसम्बन्धेनापकृष्टत्वविशिष्टो यो बोधः, तदनुकूलव्यापारस्यैव नमस्कारपदार्थत्वात्। शूद्रवृत्तिबोधे द्वितीयसम्बन्धसत्त्वेऽपि प्रथमसम्बन्धस्याभावान्नहि शूद्रोऽपकृष्टत्वावधित्वेन विवक्षितोऽस्ति नमस्कर्त्तुः। विवक्षितत्वनिवेशाद् वस्तुतः स्वापेक्षयाऽपकृष्टे उदासीने वाऽव्याप्त्यतिव्याप्त्योरभाव इति सर्वमवदातमित्याहुः।

**नागेशेनेति**—न च "आत्मनाम गुरोर्नाम नामातिकृपणस्य च।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः"॥ इति

ज्योत्स्ना

निषेधस्य वर्तमानत्वान्नागेश इति नामोच्चारणं प्रत्यवायजनकम्भवेदिति चेन्न ? स्मृतौ "न गृह्णीया" दित्यस्य "नोच्चारये"– दित्यर्थकत्वेनोच्चारणमन्तरापि लिखितुं शक्यत्वेन प्रत्यवायाभावात् । अत एव सर्वोऽपि व्यवहारकाण्डः सङ्गच्छते । यद्वा तस्य निषेधस्य वैखरी वाक् विषयः । ननु वैखरीविषयेऽपि "रामो द्विर्नाभिभाषते" इत्यादिप्रयोगाणां का गतिरिति चेत् ? "मनुरब्रवीत्" "इति शातातपोऽब्रवीत्" "कर्माण्यपि जैमिनिः–फलार्थत्वात्" (३।१।४ मी. सू.) इत्यादिप्रयोगाणां दर्शनेन प्रतिपादयितुमिष्यमाणस्यार्थस्य यत्र प्रतिज्ञा ग्रन्थकारैः क्रियते तत्र नामसङ्कीर्तनेऽपि दोषाभावकल्पनात्, अस्मदर्थनामार्थयोर्यत्र साक्षाद भेदसम्बन्धेनान्वयः यथा "मनुरहं ब्रवीमीति" तत्रैव तन्निषेधविषयकत्वस्य कल्पनाद् वा प्रकृते नामोच्चारणे दोषाभावः ।

कैश्चित्तु–कूपखानकन्यायेन स्वनामोच्चारणजः प्रत्यवायो नङ्क्ष्यति इति समाहितम्, तन्न, नान्तरीयकपापनाशस्यैव तन्न्यायविषयत्वात्, आत्मनामोच्चारणस्य ग्रन्थकरणनान्तरीयकत्वाभावात् । समाधाननिषेधयोरयमाशयः– यथा कश्चन मनुष्यः कूपं खनन् आदौ मृदा पांसुभिश्चोपलिप्तो भवति पश्चात् तन्निःसृतेन जलेन पुनः क्षालितो भवति तथैव श्रीनागेशभट्ट आदौ स्वनामोच्चारणजन्येन प्रत्यवायेन लिप्तः सन् पश्चात् ग्रन्थकरणजन्यपुण्येन शुद्धो भविष्यतीति समाधातुराशयः । मृत्पांसुसंसर्गमन्तरा कूपखननस्याशक्यत्वेन तत्र तथा कल्पनेऽपि अत्र नामोच्चारणमन्तरापि ग्रन्थस्य कर्त्तुं शक्यत्वेन तन्न्यायस्यात्र विषयाभावः इति खण्डयितुराशयः । **अनिन्द्या**–अत्र ग्रन्थे वैयाकरणसिद्धान्ता युक्त्या तथा समर्थिताः सन्ति येन दर्शनान्तरीयैर्मनागपि निन्दितुमशक्या इति सिद्धान्तस्यानिन्दनीयत्वेन ग्रन्थस्यापि अनिन्दनीयत्वात् । **परमा लघुः**–लघुत्वञ्च शब्दाल्पत्वम् । एवञ्चास्मिन् ग्रन्थे महानपि अर्थराशिरल्पैरेव शब्दैः प्रदर्शितोऽस्ति । **सिद्धान्तेति**–'इदमेवमस्ति' यथा 'आत्मानित्यः' इत्येवं स्वीक्रियमाणः प्रतिपाद्यमानपदार्थः सिद्धान्तो यथा 'आत्मनो

ज्योत्स्ना

नित्यत्वम्'। तथा चोक्तं वात्स्यायनेन "अस्त्ययम्" इत्यनुज्ञायमानोऽर्थः सिद्धान्तः"(आ. १ अ. १ सू. २)। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते' इति न्यायमनुसरद्भिर्बुधै र्ग्रन्थस्यास्य निर्माणे किमपि प्रयोजनमवश्यं कल्पनीयम्, तच्च प्रयोजनं कीर्त्युपकारौ विनान्यत् न स्यात् विदुषां तत्रैव पक्षपातात्। इदञ्च प्रयोजनं छात्रकर्तृकाध्ययनप्रवृत्त्यधीनं प्रवृत्तौ च बलवदनिष्टाननुबन्धीष्टसाधनत्वप्रकारकः कृतिसाध्यत्वप्रकारकश्च बोधः कारणम्। अयञ्च बोधोऽनुबन्धचतुष्टयेन साध्यते, अनुबन्धश्च विषयप्रयोजनसम्बन्धाधिकारिभेदेन चतुर्विध इत्यनुबन्धचतुष्टयमाह—**वैयाकरणसिद्धान्ते**त्यादिना। अत्र वैयाकरणसिद्धान्ता विषयाः, प्रकृतग्रन्थप्रयोज्याप्रामाण्यज्ञानानास्कन्दितज्ञानविषयस्यैवानुबन्धविशेषविषयत्वात्। अत एव "वैयाकरणसिद्धान्ता विषयाः" इति शेखरग्रन्थः सङ्गच्छते। एतेन 'वैयाकरणसिद्धान्ता विषयाः' इति प्रतीकमादाय 'चिन्त्यमिदं-प्रवृत्तौ वैयाकरणसिद्धान्तज्ञानस्योद्देश्यत्वेन प्रवृत्त्युद्देश्यस्यैव विषयरूपानुबन्धत्वौचित्येन वैयाकरणसिद्धान्तज्ञानं विषय इति लेखनस्यैवौचित्यात्" इति कैश्चिदुक्तमेव चिन्तनीयम्, प्रवृत्त्युद्देश्यस्यैव विषयत्वनियमने प्रमाणाभावात्। शास्त्रप्रतिपाद्यसिद्धान्तस्यैव विषयत्वात्। अन्येच्छानधीनेच्छाविषयत्वेन प्रवृत्त्युद्देश्यस्य प्रयोजनत्वेनोद्देश्यस्य विषयत्वप्रतिपादनस्य दुःशकत्वाच्च। अत एव न्यायभाष्ये वृत्तिकृता षोडशपदार्थस्यैव विषयत्वमगादि। मीमांसादावपि "धर्मो द्वादशलक्षण्याम्" इत्यनेन द्वादशाध्यायोपेतस्य शास्त्रस्य धर्मो विषयः, प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः क्रमाद् द्वादशाध्यायानां विषया इति शास्त्राध्यायानां विषयं प्रदर्शयता न ज्ञानस्य विषयत्वं निरचायि। वेदान्तादावपि न आचार्या ज्ञानस्य विषयत्वमवोचन्। अतः प्रवृत्तावुद्देश्यं प्रयोजनमेव स्यान्न विषयः। अत एव 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति सिद्धान्तोऽपि सङ्गच्छते। अत एव च 'ननु यदुद्देशेन श्रुतेर्लोकतो वा प्रवृत्तिरवगता तत्त्वं फलत्वम्—अन्येच्छानधीनेच्छाविषयत्वमिति यावत्, यदुक्तं हरिणा—

ज्योत्स्ना

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम् ॥

इति दर्पणोक्तिः सङ्गच्छते इत्यन्यत्र द्रष्टव्यम् ।

सिद्धान्तज्ञानं प्रयोजनम्, भाष्योक्तं-'रक्षोहागम' इत्यादि तु प्रयोजनप्रयोजनं न तु साक्षात्प्रयोजनमिति कैयटादौ स्पष्टम्। वस्तुतस्तु शब्दब्रह्मज्ञानं व्याकरणस्य मुख्यं प्रयोजनं भर्तृहरिणोक्तमेव। सम्बन्धश्च साध्यसाधनभावः। कैश्चित्तु तत्र तत्र वाच्यवाचकभावः सम्बन्धः उक्तः, परन्तु नैतद् विचारक्षमं यतो हि—सम्बन्धरूपानुबन्धज्ञानं प्रवृत्तौ प्रयोजकं भवति, वाच्यवाचकसम्बन्धज्ञानमन्तरापि प्रवृत्तिदर्शनात् ग्रन्थादौ तस्य वक्तुमनावश्यकत्वात् । अतः साध्यसाधनभावस्यैव सम्बन्धत्वं वाच्यम् । अधिकारी ग्रन्थज्ञाप्यवस्तुतत्त्वावगमधारणाशक्तिमान् ।

किमपि नवीनमधिकञ्च जिज्ञासूनामन्तेवासिनां मनोविनोदाय श्लोकस्य परिष्कृतः शाब्दबोधो लिख्यते—

उपपत्तिस्तु—शिवपदोत्तरद्वितीयायाः कर्मत्वशक्तिमानेकत्वञ्चार्थः। तत्र एकत्वस्य समवायसम्बन्धेन शिवपदार्थे, शिवस्य चाभेदसम्बन्धेन कर्मणि अन्वयः। नागेशपदोत्तरतृतीयायाः कर्तृत्वमेकत्वञ्चार्थः। अत्र एकत्वस्य समवायसम्बन्धेन नागेशे, नागेशस्य चाभेदसम्बन्धेन कर्त्तरि अन्वयः। नमधात्वर्थश्च स्वापकर्षप्रकारकबोधानुकूलोव्यापारः, अस्य च व्यापारस्य विपूर्वकरचधातुप्रतिपाद्ये शब्दग्रन्थनानुकूलव्यापारे स्वकर्तृकर्तृकत्व-स्वोत्तरकालिकत्वोभयसम्बन्धेनान्वयः। नागेशाभिन्नकर्तुश्च वृत्तित्वसम्बन्धेन तत्रैव व्यापारेऽन्वयः। शिवाभिन्नकर्मणो नमधात्वर्थफलभूते विशिष्टबोधे समवायसम्बन्धेनाऽन्वयः। अत्रैव रचधात्वर्थग्रन्थनरूपफले वैयाकरणसिद्धान्तमञ्जूषापदार्थस्य वृत्तित्वसम्बन्धेनान्वयः। वैयाकरणसिद्धान्तमञ्जूषापदार्थे च आख्यातार्थैकत्वस्य समवायसम्बन्धेन, आख्यातार्थकर्मणः, अनिन्द्यपरमलघ्वेतदर्थानाञ्चाभेदसम्बन्धेनान्वयः। वर्तमानकालस्यापि फलेऽन्वयः 'क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका' इत्यत्र क्रियापदेन फलव्यापारयोरुभयोरपि ग्रहणात्। नवीनमते

तत्र वर्णपदवाक्यभेदेन स्फोटस्त्रिधा ।

---

ज्योत्स्ना

कर्माख्याते फलविशेष्यक एव बोधः । एवञ्च समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्न प्रकारतानिरूपित शिवत्वावच्छिन्न विशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्न शिवत्वावच्छिन्न प्रकारतानिरूपित कर्मत्वावच्छिन्न विशेष्यत्वावच्छिन्न समवायसम्बन्धावाच्छिन्न कर्मत्वावाच्छिन्न प्रकारतानिरूपितस्वापकर्षप्रकारक बोधत्वावाच्छिन्न विशेष्यत्वावच्छिन्नानुकूलत्वसम्बन्धावच्छिन्न तादृशबोधत्वावच्छिन्नप्रकारतानिरूपित व्यापारत्वावच्छिन्न विशेष्यत्वावाच्छिन्न स्वकर्तृकर्तृकत्व, स्वोत्तरकालिकत्वोभयसम्बन्धावच्छिन्न व्यापारत्वावाच्छिन्न प्रकारतानिरूपिता अथ च समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्न प्रकारतानिरूपित नागेशत्वावाच्छिन्नाविशेष्यत्वावच्छिन्नाधेयत्वसम्बन्धावच्छिन्न नागेशत्वावच्छिन्न प्रकारतानिरूपिता च या व्यापारत्वावच्छिन्ना विशेष्यता, तादृशविशेष्यत्वावच्छिन्न जन्यत्वसम्बन्धावच्छिन्न व्यापारत्वावच्छिन्न प्रकारतानिरूपिता अथ च अभेदसम्बन्धावच्छिन्नानिन्द्यपरमलघुत्वावच्छिन्न प्रकारतानिरूपित वैयाकरणसिद्धान्तमञ्जूषात्वावच्छिन्न विशेष्यत्वावच्छिन्नाभेदसम्बन्धावाच्छिन्न वैयाकरणसिद्धान्तमञ्जूषात्वावाच्छिन्न प्रकारतानिरूपित—समवायसम्बन्धावच्छिन्नैकत्वत्वावाच्छिन्नप्रकारतानिरूपिताश्रयत्वावच्छिन्न बिशेष्यत्वावाच्छिन्नाधेयत्व सम्बन्धावाच्छिन्नप्रकारतानिरूपिता च या ग्रन्थत्वावाच्छिन्ना विशेष्यता, तादृशविशेष्यताशाली शाब्दबोध इति नवीनमते शाब्दबोधः । प्राचीनमते तु कर्माख्यातेऽपि व्यापारमुख्यविशेष्यक एव बोधः ।

ननु 'योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तियोग्यविभुविशेषगुणनाश्यत्वनियमः' इति सिद्धान्तात् प्रथमशब्दस्य द्वितीयशब्देन नाश आवश्यकः । एवञ्च वर्णात्मनां प्रकृतिप्रत्ययानामाशुतराविनाशित्वात् शक्तिग्रहस्य तत्रासम्भवात् प्रकृतिप्रत्ययादीनां वाचकत्वं दुर्घटमिति व्याकरणशास्त्रस्य शक्तिग्राहकत्वमपि सर्वथा दुःशकमिति शङ्कापनोदाय नित्यस्य स्फोटात्मकशब्दस्य वाचकत्वं सिद्धान्तयिष्यन् पूर्वं स्फोटविशेषलक्षणं लक्षयति-तत्रवर्णपदेति ।

तत्रापि जातिव्यक्तिभेदेन पुनः षोढा । अखण्डपदस्फोटोऽखण्ड-वाक्यस्फोटश्चेति सङ्कलनयाऽष्टौ स्फोटाः ।

---

ज्योत्स्ना

'तत्र' इति निर्धारणे सप्तमी, एवञ्च वैयाकरणसिद्धान्तघटकः स्फोट-स्त्रिधेत्यर्थः । यद्वा एक एव सिद्धान्तः सर्वेषाम्भवतीति पक्षे तत्रेति प्रथमार्थे सप्तमी 'अन्येभ्योऽपि दृश्यते' इति सूत्रात् । एवञ्च वैयाकरणसिद्धान्तभूतः स्फोटस्त्रिधेति वाक्यार्थः । **तत्रापीति**—अत्रापि निर्धारणे सप्तमी, तथा च त्रिविधेष्वपि स्फोटेष्वित्यर्थः । **अष्टौ स्फोटा** इति-(१) वर्णस्फोटः-(२) पदस्फोटः, (३) वाक्यस्फोटः, (४) वर्णस्फोटो द्विविधः—वर्णव्यक्तिस्फोटः, वर्णजातिस्फोटश्च । तत्र तत्तत्प्रकृतिप्रत्ययादिरूप-व्यक्तिव्यङ्ग्यस्फोटो वर्णव्यक्तिस्फोटो वर्णस्फोटो वा । प्रकृतिप्रत्ययादि-निष्ठसामान्यव्यङ्ग्यः स्फोटो वर्णजातिस्फोटः । प्रकृतिप्रत्ययघटकीभूता वर्णा अनर्थका इति न तत्र सखण्डस्फोटव्यवहारः । अर्थात् सखण्डवर्ण-स्फोटः, अखण्डवर्णस्फोट इत्येवं भेदो न स्वीक्रियते उक्तयुक्तेः । (५) (६) पदस्फोटस्त्रिविधः- पदजातिस्फोटः, सखण्डपदव्यक्तिस्फोटः, अखण्डपद-व्यक्तिस्फोटश्च । जातिरखण्डैव भवतीति न तत्र भेदद्वयं स्वीक्रियते । (७) (८) वाक्यस्फोटस्त्रिधा – सखण्डवाक्यव्यक्तिस्फोटः, अखण्डवाक्यव्यक्ति-स्फोटः, वाक्यजातिस्फोटश्च । एवञ्च सङ्कलनया अष्टौ स्फोटा भवन्ति । तदुक्तं-'तत्र इत्यादि स्फोटा' इत्येतत्पर्यन्तेन ।

स्फुटति-प्रकाशते-अवगम्यते अर्थोऽनेनास्माद्वेति व्युत्पत्त्या 'अर्थ-विषयकोपस्थितिजनकतावच्छेदकीभूतशक्तिमत्त्वं' स्फोटत्वम् । समन्वयश्च अर्थः- घटपटादिरूपः, तद्विषयकोपस्थितिः- घटत्वादिप्रकारकघटादि-विशेष्यकोपस्थितिः, तज्जनकता 'घटशब्दो घटत्वावच्छिन्नार्थनिरूपितशक्ति-मान्' इति ज्ञाने, अवच्छेदकत्वं शक्तौ । एवञ्च वर्णस्फोटशब्देन कल्पित-सुप्तिङन्ततदादिरूपपदतत्समुदायरूपवाक्येतरो यः प्रकृतिप्रत्ययादिः तद्व्यङ्ग्यस्फोटस्यैव ग्रहणं बोध्यम् । यथा "गच्छति", इत्यत्र 'गम्' इति

तत्र वाक्यस्फोटो मुख्यः, तस्यैव लोकेऽर्थबोधकत्वात्तेनैवार्थसमाप्तेश्चेति ।

---

ज्योत्स्ना

प्रकृतिव्यङ्ग्यः 'ति' इति प्रत्ययव्यङ्ग्यः स्फोटः वर्णस्फोटः । नैयायिकानां यत् 'शक्तं पदम्' तद्व्यङ्ग्यस्फोटस्यैव वैयाकरणनये वर्णस्फोटशब्देन व्यवहारः ।

**अयमत्र निष्कर्षः**—'पटः' इत्येकं पदम्, 'पटमानय' इत्येकं वाक्यमित्याकारकाबाधितप्रतीतिबलात् वर्णातिरिक्तं पदं, पदातिरिक्तं वाक्यमिति सर्वतन्त्रसिद्धान्तसिद्धम् । उत्तरकाले बाधकाभावेन नेयं प्रतीतिर्मिथ्याभवेत् । एकत्वप्रतीतिरपि एकार्थबोधकत्वोपाधिनिबन्धना न, तथासति एकार्थबोधकत्वस्य वर्णेषु प्रतिषेधेन समुदाये तत्प्रकल्पने 'समुदायात् तद्धेतुत्वं तद्धेतुत्वाच्च समुदायत्वमित्यन्योन्याश्रय आपद्येत । अतो वर्णपदातिरिक्तो य एकत्वप्रत्ययः स एव स्फोटः । तस्यैव च वाचकत्वम् । परमार्थतस्तु ब्रह्मैव स्फोटः । अविद्यावस्थायां यथा 'ममायं पिता, ममेयं माता' इत्यादिभेदव्यवहारः, तथा तस्यामवस्थायां 'वर्णो वाचकः, पदं वाचकम्' इत्यादिव्यवहारः काल्पनिकः । तथा च आविद्योपाधिकवर्णवाचकत्वं प्रतिष्ठाप्य स्फोटप्रत्याख्यानं वेदान्तिनां साहसमेवेति विभावयन्तु विपश्चिदपश्चिमाः ।

**वाक्यस्फोट** इति–शक्तिग्राहकेषु मुख्यतमेन वृद्धव्यवहारेण प्रथमं वाक्ये एव शक्तिग्रहे वाक्यस्यैव मुख्यत्वं बोधकत्वञ्च ।

**अर्थबोधकत्वादिति**—यद्यपि आन्तरस्यैव स्फोटस्य वाचकताया अग्रे सिद्धान्तयिष्यमाणतया वैखरीस्वरूपस्य वाक्यस्य बोधकत्वं नैव स्यात्, भवति च तस्मादपि बोधः, तथापि आन्तरस्फोटेन तादात्म्यापन्नस्य बाह्यस्य स्फोटस्य वाचकतास्वीकारे नास्ति काचनापि विप्रतिपत्तिः । तेनैव– वाक्येनैव । **अर्थसमाप्तेश्चेति**– वाक्यस्यैव निराकाङ्क्षार्थबोध-

तदाह न्यायभाष्यकारः- "पदसमूहो वाक्यमर्थसमाप्तौ" इति। अस्य समर्थमिति शेषः।

---

ज्योत्स्ना

कत्वेनार्थस्य पूर्णत्वान्निराकाङ्क्षत्वादिति। **न्यायभाष्यकार** इति वात्स्यायन इत्यर्थः।

**पदसमूह** इति- पदं-सुबन्तं, तिङन्तञ्च, तदाह भगवान् गौतमः "ते विभक्त्यन्ताः पदम्" इति। एवञ्च पदसमूहः-सुबन्तसमूहः, तिङन्तसमूहः, सुबन्तातिङन्तसमूहश्च ग्राह्यः। एतेन शक्तं पदमिति वदन्तो नैयायिकाः प्रत्युक्ताः। सुप्तिङन्तस्य पदत्वप्रतिपादनेन 'प्रकृतिप्रत्ययसमुदितस्य गच्छतीत्यादेर्वाक्यत्वं विवृण्वन्त आधुनिकनैयायिकाः पराहताः। आधुनिकनैयायिकसम्मते वाक्ये स्वीकरणीये अर्थसमाप्तेरभावेन न्यायभाष्यविरोधः, निरूप्यनिरूपकभावापन्नविषयताप्रयोजकसुप्तिङन्तसमुदाय एव वाक्यत्वव्यवहारदर्शनेन प्रसिद्धिविरोधोऽपि।

नन्वेवमपि 'द्वारम्' इत्यादेर्निराकाङ्क्षबोधजनकत्वेऽपि सुप्तिङन्तचयत्वाभावात् वाक्यत्वन्न स्यादिति चेत्? अत्रोच्यते- सुप्तिङन्तचयार्थनिष्ठप्रतिपाद्यतानिरूपितप्रतिपादकतावत्त्वरूपस्य वाक्यत्वस्य तत्राप्यक्षतेः। इष्टापत्तेश्च।

ननु पदसमूहो वाक्यमित्यसङ्गतं? सिद्धान्ते एकस्यैव निरवयवस्य स्फोटस्य वाक्यत्वप्रतिपादनात् प्रतिभायाश्च वाक्यार्थत्वप्रतिपादनाच्चेति चेन्न पदे प्रकृतिप्रत्ययादिकल्पनामिव वाक्येऽपि पदकल्पनामभ्युपेत्य तदुक्तत्वात्। तदाह हरिः—

यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः।
अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते॥ इति।

एतेन "सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता" इति सङ्गच्छते। अत्र सुप् च तिङन्तञ्च सुप्तिङन्ते, सुब्विशिष्टं तिङन्तं सुप्तिङन्तं द्वयोरेकशेषः, तथा च कारकान्वयविशिष्टक्रियाबोधकसुबन्तचय-तिङन्तचयं

ज्योत्स्ना

सुप्तिङन्तचयानां त्रयाणामपि वाक्यत्वं सिद्ध्यति, क्रमेणोदाहरणन्त्ववगन्तव्यम्, पचतिभवति, रामो गच्छति इति । एकतिङ् वाक्यमिति तु क्वाचित्कं कार्यविशेषविधानाय ।

ननु 'पदसमूहो वाक्यमर्थसमाप्ता' विति सूत्रे पदानां परस्परमनन्वितत्वात्कथं सूत्रार्थबोध इत्यत आह–"अस्य समर्थमिति शेषः" इति । एवञ्च–पदसमूहो वाक्यमर्थनिष्ठविषयतानिरूपकनिराकाङ्क्षबोधे समर्थमिति सूत्रार्थः, इदानीं यावत् वाक्यस्य निराकाङ्क्षबोधजनकताप्रदर्शनेन वाक्यस्फोटस्य प्राधान्यं, वाक्यस्फोटज्ञानार्थमेव प्रकृतिप्रत्यययोः कल्पितत्वं च सिद्धम् । परिष्कृतं वाक्यत्वं तु[१] धातुविशिष्टविषयताशालियत्किञ्चिद्बोधनिष्ठजन्यतानिरूपितजनकतावच्छेदकानुपूर्वीमच्छब्दत्वम् । वै० स्वप्रयोज्यविषयतानिरूपितत्व ; स्वसमभिव्याहृतपदप्रयोज्यत्वैतदुभयसम्बन्धाभ्याम् । समन्वयस्तु-'कुलालो घटं करोती'त्यत्र धातुविशिष्टविषयता-घटकर्मत्वावच्छिन्ना, कुलालत्वावच्छिन्ना, उत्पत्त्यनुकूलव्यापारत्वावच्छिन्ना, तादृशविषयताशाली यत्किञ्चिद्बोधः – कुलालकर्तृकघटकर्मकोत्पत्त्यनुकूलव्यापारविषयकः, तादृशबोधनिष्ठजन्यतानिरूपितजनकतावच्छेदकानुपूर्वी[२] कुलालो घटं करोतीत्यकारिका तादृशानुपूर्वीमच्छब्दत्वं 'कुलालो घटं करोती'त्यस्येति । घटस्य पठतीति निराकाङ्क्षस्य केवलस्य घटस्य वाक्यत्ववारणाय प्रथमः

---

१ अनेन लक्षणेन, 'पदसमूहो वाक्यम्' इति लक्षणे 'घटं पटो हरेः पचति गच्छति भवति' इत्यादिपदसमुदायस्यापि वाक्यत्वापत्तिः । 'एकतिङन्तघटितं वाक्यम्' इति लक्षणे 'घटः पटं हरिरस्ति' इत्यादीनां निराकाङ्क्षपदसमुदायानामपि वाक्यत्वापत्तिः, त्वया एधनीयम्, ग्रामंगतः, इत्यादीनां वाक्यत्वानापत्तिश्चेत्यादयो दोषाः परिहृताः ।

२ आनुपूर्वी च तद्वर्णोत्तरतद्वर्णस्वरूपा बोध्या, यथा घटशब्दे घकारोत्तराकारोत्तरटकारोत्तरात्वरूपा आनुपूर्वी, अथवा पूर्वत्वपरत्वान्यतरवत्त्वरूपा पूर्वापरीभावात्मकसमभिव्याहाररूपा साऽवसेया ।

तत्र प्रतिवाक्यं सङ्केतग्रहासम्भवाद् वाक्यान्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागान्प्रविभज्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः ।

---

### ज्योत्स्ना

सम्बन्धः, केवलस्य पचतीति तिङन्तस्य तत्त्ववारणाय द्वितीयः सम्बन्धः । अथवा धातुविशिष्टत्वं वाक्यत्वम् । वैशिष्ट्यञ्च स्वघटितपदघटितत्व; स्वघटितपदानिराकाङ्क्षपदाघटितत्वैतदुभयसम्बन्धाभ्याम् । भवतीतिपदस्य वाक्यत्ववारणाय प्रथमः सम्बन्धः । निराकाङ्क्षपदसमुदायस्य वाक्यत्ववारणाय द्वितीयः । तथा च कृदन्तघटितस्यापि वाक्यत्वं सिद्धम् ।

**जगदीशतर्कालङ्कारास्तु**—यादृशशब्दानां यादृशार्थविषयताकबोधं प्रति अनुकूला परस्पराऽऽकाङ्क्षा, तादृशशब्दस्तोम एव तादृशार्थे वाक्यम् । यथा घटमानयेत्यादिशब्दानां घटकर्मकानयनार्थविषयकबोधं प्रति अनुकूला परस्पराकाङ्क्षा, तादृशशब्दस्तोमो घटमानयेति शब्दस्तोमः तथाविधार्थे-घटकर्मकानयनार्थे वाक्यमिति लक्षणमाहुः ।

ननु सिद्धान्ते वाक्यस्याखण्डत्वे पदादिप्रतीतिर्नोपपद्येतेत्यतआह—**तत्रेति**— पूर्वोक्ते सिद्धान्ते इत्यर्थः । **सङ्केतग्रहासम्भवादिति**— सङ्केतग्राह्यशक्तिग्रहासम्भवादिति भावः । एतच्च रहस्यमग्रे स्फुटिष्यति । **कल्पनयेति**— वस्तुतस्तत्त्वाभावेऽपि तद्विषयकबोधकल्पनयेत्यर्थः ।

वाक्ये पदानि, पदे च प्रकृतिप्रत्ययभागं परिकल्प्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थाः कल्पिता इति भावः ।

इदमत्र तात्पर्यम्— गामानयेत्यादौ गोशब्दसत्त्वे सास्नादिमानर्थः प्रतीयते, गोशब्दाभावे च न सोऽर्थः प्रतीयते इति गोशब्दस्यैव सास्नादिमानर्थो नान्यस्येति निश्चीयते । एवमम्विभक्तिसत्त्वे कर्मत्वस्य बोधो भवति तदभावे न भवतीत्यमविभक्तिरेव कर्मत्वबोधिका इत्येवं कल्पनया ।

ज्योत्स्ना

नन्वेवमप्यन्वयव्यतिरेकाभ्यामेव कार्यकारणभावो निश्चीयते पदार्थानाम्, अन्वयव्यतिरेकौ च-तत्सत्त्वे तत्सत्त्वमन्वयः, तदभावे तदभावो व्यतिरेक इति, एवञ्च यत्रैक एवार्थ उभाभ्यां प्रत्ययाभ्यामभिधीयते तत्र व्यभिचारो यथा कर्त्तेत्यादौ ण्वुलोऽभावेऽपि आश्रयार्थस्य प्रतीतिः, कारक इत्यादौ च तृचोऽभावेऽपि आश्रयस्य प्रतीतिरिति कारणाभावेऽपि कार्यसत्त्वेन व्यतिरेकव्यभिचारः, कारणस्य च कार्यापेक्षया व्यापकत्वमपेक्ष्यते व्यापकत्वञ्च स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। अत्र स्वपदेन व्याप्यत्वेनाभिमतः पदार्थो ग्राह्यः, व्याप्यत्वञ्च स्वाभाववदवृत्तित्वम्, अत्र स्वपदेन स्वव्यापकत्वेनाभिमतः पदार्थो ग्राह्यः। लक्षणसमन्वयश्च-घटत्वापेक्षया पृथिवीत्वस्य व्यापकत्वं सर्वसम्मतम्- तथाहि व्यापकलक्षणे स्वपदेन व्याप्यत्वेनाभिमतं घटत्वं गृह्यते तदधिकरणे घटे वर्त्तमानोऽभावः पटाद्यभावो न पृथिवीत्वाभावः पृथिवीत्वस्य तत्र वर्त्तमानत्वात्, अभावीया प्रतियोगिता पटे, तस्या अवच्छेदकं पटत्वम्, अनवच्छेदकं पृथिवीत्वत्वं तादृशधर्मवत्पृथिवीत्वम् इति पृथिवीत्वस्य व्यापकत्वम्[1]। एवं व्याप्यलक्षणे स्वपदेन व्यापकत्वेनाभिमतं पृथिवीत्वं गृह्यते तदभाववति जले घटत्वस्यावर्तमानत्वात् घटत्वस्य पृथिवीत्वापेक्षया व्याप्यत्वम्, इति चेन्न अव्यवहितोत्तरत्वनिवेशेनैतादृशस्य व्यभिचारस्य शक्यवारणत्वात्, तथा च तृच्प्रत्ययश्रावणप्रत्यक्षाव्यवहितोत्तरक्षणजायमानाश्रयत्वावच्छिन्नविषयतानिरूपितविषयितावन्निष्ठजन्यतानिरूपितजनकतावत्त्वं तृचीति निवेशेनादोषः। एवमेव ण्वुलि बोध्यम्। **कल्पिताभ्यामिति**-प्रकृतिप्रत्ययादेः कल्पितत्वेनान्वयव्यतिरेकयोरपि कल्पितत्वात्। **तत्तदर्थविभागमिति**-प्रकृतिप्रत्ययतदर्थविभागमिति। **शास्त्रमात्रविषयमिति**-शास्त्रीयप्रक्रियानिर्वाहायेत्यर्थः। लोके तु बोधनिष्ठजन्यतानिरूपितजनकतावत्त्वं वाक्यस्यैव। शास्त्रप्रक्रियाविषयत्वमेवादाय "विभाषा सुपो बहुच् पुरस्तात्तु" (५।३।६८) इति सूत्रे कैयटः

---

१ वस्तुतस्तु स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वमेव व्यापकत्वं नातः प्रमेयत्वादिकेवलान्वयि धर्ममादाय सर्वत्र व्यापकत्वलक्षणातिप्रसङ्गः।

तत्र शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः । प्रकृतिप्रत्ययास्तत्तदर्थवाचका एवेति तदर्थः । उपसर्गनिपातधात्वादिविभागोऽपि काल्पनिकः । स्थानिनो लादय आदेशास्तिबादयः कल्पिता एव । तत्र ऋषिभिः स्थानिनां कल्पिता अर्थाः कण्ठरवेणैवोक्ताः । आदेशानां तु स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति भाष्यात्तेऽर्थाः, एवं च स्थानिनां वाचकत्वमादेशानां वेति विचारो निष्फल एव । कल्पितवाचकत्वस्योभयत्र सत्त्वात् । मुख्यं वाचकत्वं तु कल्पनया बोधितसमुदायरूपे पदे वाक्ये वा, लोकानां तत एवार्थबोधात् ।

---

ज्योत्स्ना

"अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रेऽर्थवत्तापरिकल्पनात्" इत्याह,

यदि वाक्यस्फोटस्यैव वास्तविकत्वं तदा 'अष्टौ स्फोटा' इति प्रतिपादनमाकाशकुसुमायितं स्यादित्यत आह– **तत्र शास्त्रेति** । अयमाशयः– 'एधवृद्धौ' इत्यनेन एधरूपप्रकृतेर्वृद्ध्यावर्थे, तिप्प्रत्ययस्य च 'लः कर्मणीति' कर्त्तरि च शक्तेर्बोधेन प्रकृतिप्रत्ययानामपि वाचकत्वं सिद्ध्यति । वर्णस्फोट इत्यत्र च वर्णपदं पदावयवपरमित्येतत्सर्वं मनासि निधायाह– **प्रकृतिप्रत्यया** इत्यादि । तथा च वर्णस्फोट इत्यस्य पदावयवस्फोट इत्यर्थः । स चावयवः प्रकृतिरूपः प्रत्ययरूपश्च । प्रकृतित्वञ्च प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकाक्रान्तत्वम् । प्रत्ययत्वञ्चार्थबोधकत्वे सति पाणिनीयसङ्केतसम्बन्धेन प्रत्ययपदवत्त्वम् । केचित्तु प्रक्रियते प्रत्ययात्पूर्वं क्रियत इति केषाञ्चित्प्रकृतिलक्षणं प्रत्याचक्षाणाः "बहुपटव" इत्यत्राव्याप्तिमुद्भावितवन्तः । परन्तु तदुद्भावनमात्रमेव, 'असति विशेषानुशासने (अथवा असति प्रतिबन्धके) यदनुशासनेन प्रत्ययात्पूर्वम् विधीयते, उद्दिश्यते सा प्रकृतिरित्यर्थे तत्तात्पर्यविषयत्वात् ।

**तदर्थः**—वर्णस्फोटार्थः । **तत्र**–प्रकृतिप्रत्ययमध्ये । कण्ठरवेणेति श्रोत्रेन्द्रियजन्यप्रत्यक्षाविषयतावच्छेदकधर्मसमानाधिकरणपाणिनिकर्तृकोच्चारणविषयतावच्छेदकधर्मावच्छिन्न—'लः कर्मणि चे'त्यादिरूपेणेति भावः ।

ज्योत्स्ना

**स्थान्यर्थाभिधानेति**—'स्थानेऽन्तरतम' इति परिभाषणात् यदुच्चारणप्रसङ्गे यदुच्यते तत्तदर्थं बोधयतीति सिद्धान्तादित्यर्थः। यथा दन्तशब्दस्य स्थाने ददादेशः। **तेऽर्था** इति। अस्यादेशानामित्यत्र सम्बन्धः। यद्यपि स्थान्यर्थाभिधानसमर्थस्यैवादेशतेत्युक्त्या स्थानिन एव वास्तविकमर्थवत्त्वं नागेशाभिमतं प्रतीयते तथापि स्थानिनां लोके प्रयोगाभावादादेशानामेव तत्त्वम्। **एवञ्चेति**—मुख्यवाचकत्वस्य पदे वाक्ये च व्यवस्थापितत्वे चेत्यर्थः। शक्तिग्राहकशिरोमणिव्यवहारेण वाक्ये एव शक्तिग्रहात्। कल्पनया [तथा [1]कल्पनया] कल्पितान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययकल्पनयेत्यर्थः।

बोधितसमुदाये=प्रकृतिप्रत्ययसमुदाये, अत्र च 'भूवादयो धातवः' (१।३।१) इति सूत्रस्य भाष्यम्मानम्। तत्र हि सूत्रार्थविचारप्रसङ्गे "भुवं जायमानं क्रियारूपमर्थं येऽभिदधति ते धातुसञ्ज्ञकाः" इत्यर्थमुपक्रम्य शिश्ये इत्यत्र दोषमुद्घाट्य "इतरेतराश्रयञ्च भवति केतरेतराश्रयता? प्रत्यये भाववचनत्वं भाववचनाच्च प्रत्ययः" धातूद्देश्यकप्रत्ययविधायकशास्त्रव्यापारात्प्राक् 'शिश्ये' इति समुदाय एव नास्ति कुतोऽन्वयव्यतिरेकाभ्यामर्थस्य प्रविभाग इति 'शिश्ये' इत्यस्य प्रयोगसत्त्वेऽन्वयव्यतिरेकाभ्यां भाववचनत्वकल्पनम्। भाववचनत्वे च धातुसञ्ज्ञायां तदुद्देश्यकप्रत्यये शिश्ये इत्यस्य प्रयोग इति भाष्यतात्पर्यान्योन्याश्रयशङ्कायाम् "अनाश्रित्य भाववचनत्वं प्रत्ययो नित्यत्वाच्छब्दानाम्" इत्युक्तम्। कैयटस्तु "व्यवस्थिता एव पचत्यादयः समुदायाः संसृष्टार्थाभिधायिनः केवलमुत्प्रेक्ष्योत्प्रेक्ष्य प्रक्रियायामर्थविभागः शब्दविभागश्चापोद्ध्रियते" इति। अपोद्ध्रियते—कल्प्यत इत्यर्थः। ननु "अनाश्रित्य भाववचनत्वं प्रत्यय उत्पद्यते नित्यत्वाच्छब्दानाम्" इति भाष्येऽभिहितं तच्च न सङ्गच्छते, शब्दनित्यत्वप्रत्ययोत्पत्त्योर्विरोधात्। अतोऽनाश्रित्य भाववचनत्वं प्रत्यय इत्यस्य "पारमार्थिकं नाश्रीयते कल्पितं त्वाश्रीयत एव" इति कैयटेन तात्पर्यं वर्णितम्।

---

१ कोष्ठान्तर्गतः पाठो लघुमञ्जूषायां वर्त्तते।

'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः'

---

ननु यद्यखण्डस्फोटस्यैव वाचकत्वमङ्गीक्रियते तर्हि व्याकरणशास्त्रस्याप्रामाण्यप्रसङ्गः, प्रकृतिप्रत्ययाभ्यां व्युत्पादनद्वारा तत्तदर्थप्रतिपादनपरत्वेन पदवाक्ययोर्निरवयवत्वादित्यतआह-**उपेयप्रतिपत्त्यर्था** इत्यादि। पञ्चकोशादिवत्तस्मात्कल्पनैषा समाश्रिता इति कारिकायाः पूर्वार्धः, तस्मात्—'पदे न वर्णाः' इति पूर्वकारिकया पदस्य वाक्यस्य चाखण्डत्वप्रतिपादनेनाखण्डपदादिरूपस्य स्फोटस्य निरूपयितुमशक्यत्वात् पञ्चकोशादिवत् उपेयप्रतिपत्त्यर्था एषा कल्पना समाश्रिता। **एषा कल्पना** — असतोऽपि प्रकृतिप्रत्ययादेरुपग्रहः। 'उपेयप्रतिपत्त्यर्था' इत्यस्यैकवचनेन स्त्रीत्वरूपलिङ्गेन च विपरिणमय्य 'उपेयप्रतिपत्त्यर्था' इति योन्तस्तेनान्वयः कार्यः। अथवा उत्तरत्र यत इत्यध्याहार्यं यतो हेतोरुपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः। **तस्मात्**-अव्यवस्थितत्वात् पञ्चकोशादिवदेषा कल्पना समाश्रितेत्यन्वयः। **उपेयस्य**—प्राप्तुं योग्यस्यार्थस्य प्रतिपत्तिः = प्राप्तिः, ज्ञानं वा। समाश्रितेत्यस्य पाणिनिमुनिनेति शेषः, इदमत्राकूतम्—

तैत्तिरीयोपनिषदि सङ्गृहीता अनुवाक्समवायात्मिका भृगुप्रश्नाश्रिता भृगुवल्ली, तत्र वरुणपुत्रो भृगुः स्वपितरं वरुणं ब्रह्म पृष्टवान्। वरुणश्च तस्मै "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति" ब्रह्मोपलब्धौ द्वाराण्युक्तवान्। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व तद् ब्रह्मेति" इति ब्रह्मलक्षणञ्चोक्तवान्। स च भृगुः पितुर्ब्रह्मोपलब्धिद्वाराणि ब्रह्मलक्षणञ्च श्रुत्वा तपोऽतप्यत। तपसि प्रवृत्तौ चेदं कारणं यद् भृगुणा विचारितं यत् पिता स्वरूपतो ब्रह्म नोपदिष्टवानतोऽवगम्यते नूनं तत्प्रापकं साधनान्तरमप्यपेक्षते पिता। सर्वेषां हि साधनानां तप एव साधकतमं साधनमिति तपश्चचार भृगुः। तच्च तपोऽन्तःकरणसमाधानम्, तद्द्वारकत्वाद् ब्रह्मप्रतिपत्तेः। प्रतिपादितञ्च

"मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परमं तपः।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते॥ इति॥"

ज्योत्स्ना

भृगुश्च तपस्तप्त्वा 'अन्नं ब्रह्मेति व्यजानात्' यतो ऽन्नाद् जायन्ते। तेन जीवन्ति तत्राभिसंविशन्ति इति ब्रह्मलक्षणदर्शनात्।

अस्मिन् प्रसङ्गे अद्यते=भुज्यते=उपलभ्यते सर्वैरिति सर्वप्रतिपत्तृसाधारणं स्थूलदेहकारणं भूतपञ्चकं विराट्सञ्ज्ञकमन्नशब्देनोच्यते। अन्नपदवाच्यस्य भूतपञ्चकस्य विराज उत्पत्त्यादिदर्शनात्पुनः तपस्तप्त्वा 'प्राणो ब्रह्मेति व्यजानात्' अत्र प्राणशब्देन लक्षणया प्राणकरणं क्रियाशक्तिविशिष्टतया हिरण्यगर्भ उच्यते। तस्याप्युत्पत्त्यादिदर्शनात् 'मनो ब्रह्मेति व्यजानात्'। अत्र मनःशब्देन सङ्कल्पात्मकशक्तिविशिष्टं चैतन्यमुच्यते। ततस्तस्याप्युत्पत्त्यादिदर्शनात् 'विज्ञानं ब्रह्मेति व्यजानात्' तपसैव तस्यापि ब्रह्मलक्षणानाक्रान्तत्वं बुद्ध्वा 'आनन्दं ब्रह्मेति व्यजानात्' एवं तपसा विशुद्धात्मा प्राणादिषु ब्रह्मलक्षणमपश्यन् शनैः शनैरन्तरनुप्रविश्यान्तरतमानन्दं ब्रह्म विज्ञातवान्। बाह्यान्तःकरणसमाधानलक्षणं परमं तपोऽनुष्ठेयमिति प्रकरणतात्पर्यम्। पञ्चकोशादिवत्तस्मादासिकोशवदात्माच्छादकत्वं कोशत्वम् १–पञ्चीकृतेभ्यो भूतेभ्य उत्पन्नः स्थूलो देहोऽन्नमयः कोशः। तदुक्तम्—'स्यात् पञ्चीकृतभूतोत्थो देहः स्थूलोऽन्नसञ्ज्ञकः' इति। २–कर्मेन्द्रियपञ्चकविशिष्टवायुपञ्चकरूपः प्राणमयाख्यः कोशः। तदुक्तम्—"लिङ्गे तु राजसैः प्राणैः प्राणः कर्मेन्द्रियैः सह" इति। ३–ज्ञानेन्द्रियपञ्चकविशिष्टमनोरूपो मनोमयः कोशः। 'सात्त्विकैर्धीन्द्रियैः साकं विमर्शात्मा (संशयात्मा) मनोमय इति। ४–ज्ञानेन्द्रियपञ्चकविशिष्टबुद्धिरूपो विज्ञानमयः कोशः। तदुक्तम्–'तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका' इति। ५-कारणशरीरभूतायामविद्यायां यन्मलिनसत्त्वं तदेव प्रियमोदप्रमोदाख्याभिः, इष्टदर्शनलाभभोगजन्यसुखात्मिकाभिरन्तःकरणवृत्तिभिः सममानन्दमयकोश इत्युच्यते। तदुक्तम्–'कारणे सत्त्वमानन्दमयो मोदादिवृत्तिभिः' इति तत्तत्कोशतादात्म्यापन्न आत्माऽपि अन्नमयादिशब्देनोच्यते। अत एव 'तस्माद् वा एतस्मादन्नरसमयादन्योऽन्तरात्मा प्राणमयोऽन्योऽन्तरात्मा मनोमयः' इति श्रुतिः सङ्गच्छते।

ज्योत्स्ना

एवञ्च पञ्चकोशात्मकमतात्त्विकं ब्रह्म यथा वरुणेन तात्त्विकब्रह्मज्ञानोपायतया उपदिष्टम्, तथैव शब्दानुशासने महर्षिपाणिनिना अखण्डनित्यस्फोटरूपपदवाक्यज्ञानोपायतया प्रकृतिप्रत्ययादय उपदिष्टा इति भावः। ततः परम् 'ब्रह्मपुच्छं प्रतिष्ठा' इत्युक्तम्। 'प्रतिष्ठा' इति 'द्व्यचोऽतस्तिङ' इति दीर्घः। सर्वस्याविद्याकल्पितस्य द्वैतस्य पुच्छम्=अवसानभूतम् आधारभूतं वा ब्रह्म प्रतिष्ठ' इत्येवमद्वैतं ब्रह्म उपदिष्टम्। वस्तुतस्तु वरुणेनोपदिष्टस्य कोशचतुष्कस्योत्पत्त्यादिकं बुद्ध्वा पुनः पृष्टो वरुणः 'तपसा ब्रह्म विजिज्ञासस्व' इत्युक्तवान्।

ततस्तपस्तप्त्वा 'आनन्दो ब्रह्मेति व्यजानात्' तदनन्तरं नापि प्रश्नो नाप्युत्तरम्। नापि 'पुच्छं ब्रह्म प्रतिष्ठा' इति वाक्यं भृगुवल्ल्यां वर्त्तते। अतस्तत्रानन्दपदं नानन्दमयकोशपरं, किन्तु शुद्धब्रह्मपरमेवेति। 'पञ्चकोशादिवत्' इति कारिकायां यो दृष्टान्तः स आनन्दवल्लीस्थकोशाभिप्रायेणैव। अत एव भृगुर्वारुणिर्वरुणं पितरं ब्रह्म पृष्टवान्। वरुण उवाच– 'अन्नम्' इति। अस्योत्पत्त्यादिकं समीक्ष्य पुनः पप्रच्छ। तत उत्तरितवान् 'प्राणो ब्रह्मेति'। तस्यापि अतथात्वावधारणानन्तरं पुनः प्रश्ने आह–'मन' इति। तस्यापि आशितमन्नं त्रेधा भवति–यत्स्थूलं तत्पुरीषं, यन्मध्यं तन्मांसम्। यदणीयस्तन्मनः, इति श्रुतावुत्पत्तिश्रवणात् पुनः प्रश्ने आह– 'विज्ञानमयामिति'। तस्यापि वृत्त्युपहितत्वेनातथात्वं बुद्ध्वा पुनः पृष्टवान्। ततः 'आनन्दो ब्रह्म' इत्युत्तरिते वस्तुतत्त्वं प्राप्तः स्थितो भृगुः। एवञ्च पञ्चमस्य शुद्धब्रह्मपरकत्वात्तज्ज्ञानोपायभूतकोशत्वाभावात् पञ्चपदोपादानं न सङ्गच्छेतेति। तस्माद्भृगुवल्ली नोदाहरणम्, किन्तु आनन्दवल्ल्येव। तत्र हि पञ्चापि कोशा उपाया एव। तत्र हि 'अन्नाद्वै प्रजायन्ते। याः काश्च पृथिवीश्रिताः अथैनदपि यन्त्यतः। सर्वे वैतेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्म उपासते॥ १॥' इति अन्नमयः कोशः। 'तस्माद् वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। प्राणदेवा अनुप्राणन्ति। मनुष्याः पशवश्च ये सर्वमेव ते आयुर्यन्ति ये

ज्योत्स्ना

प्राणं ब्रह्म उपासते ॥२॥' इति प्राणमयः कोशः। 'तस्माद् वा एतस्मात् प्राणमयादन्योन्तर आत्मा मनोमयः ॥ ३ ॥' इति मनोमयः कोशः । 'तस्माद् वा एतस्मान्मनोमयात् अन्योऽन्तर आत्मा विज्ञानमयः ॥ ४ ॥' इति विज्ञानमयकोशः। 'तस्माद् वा एतस्माद् विज्ञानमयात्, अन्योऽन्तर आत्मा आनन्दमयः ॥५॥' इति आनन्दमयकोशः।

नन्वानन्दवल्ल्यामपि यदानन्दपदं तदपि प्रधानब्रह्मपरमेव । अत एव 'आनन्दमयोऽभ्यासात्' (अ. १ पा. १ सू. १२) इत्यादिसूत्रकदम्बैस्तत्रत्यानन्दपदस्यानन्दमयकोशतादात्म्यापन्नजीवपरकत्वं ब्रह्मसूत्रकृता खण्डितमिति चेन्न ? यद्यप्यन्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्मेति न श्रूयते, तथापि नानन्दमयस्य ब्रह्मत्वम्, यत आनन्दमयं प्रकृत्य श्रूयते तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः । प्रमोदः उत्तरः पक्षः । आनन्द आत्मा। 'ब्रह्मपुच्छं प्रतिष्ठा' (तै. २।५) इति, तत्र यद्ब्रह्ममन्त्रवर्णे प्रकृतम्—

'सत्यं ज्ञानमनन्तं ब्रह्म' इति। तदिह 'ब्रह्मपुच्छं प्रतिष्ठा' इत्युच्यते। तद्विजिज्ञासाविषया एवान्नमयादय आनन्दमयपर्यन्ताः पञ्चकोशाः कल्प्यन्ते इति शारीरिकभाष्यकृतैव समाहितत्वात्, सूत्रे 'आनन्दमयपदस्य' तद्वाक्यशेषे श्रूयमाणब्रह्मपदे एव तात्पर्य्याच्चेत्यन्यत्र विस्तरः । इहाप्यन्नादिशब्देन पूर्वोक्त एव कोशो ग्राह्यः। आनन्दशब्देनात्र 'कारणे सत्त्वमानन्दमयो मोदादिवृत्तिभिः' इत्युक्त एव ग्राह्यः । उत्तरत्र शुद्धब्रह्मोक्तम् । ततो 'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्तम् । अत्र पुच्छमविद्याकल्पितस्य सर्वथावसानम्, 'सर्वाधारं वा ब्रह्म प्रतिष्ठा' इत्युक्त्यानेनैव वास्तविकं ब्रह्म उपदिष्टम् । अत्र श्रूयमाणं यद् ब्रह्मपदं तदेव प्रधानब्रह्मपरम् । अत एव जगदाधारार्थकपुच्छपदोपादानं सङ्गच्छते। लाङ्गूलात्मकमुख्यार्थस्य तत्र बाधादाधारे औपचारिकमत्र पुच्छपदम् । ब्रह्म तु पञ्चकोशतादात्म्यापन्नचैतन्यादन्यदेव । तदाह– 'अन्वयव्यतिरेकाभ्यां पञ्चकोशविवेकतः । स्वात्मानं तत उद्धृत्य परं ब्रह्म प्रपद्यते'। इति, तथा चाखिलाधारब्रह्मविवरणाय पञ्च-

इति न्यायेन व्याकरणभेदेन स्थानिभेदेऽपि न क्षतिः, देशभेदेन लिपिभेदवदिति दिक्।

तत्र "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति गौतमसूत्रे

---

कोशानां उपायत्वेन प्रतिपादनमित्रायथार्थभूतयोः प्रकृतिप्रत्यययोर्वाचकत्वव्युत्पत्तिः यथार्थस्फोटस्याभिधायकत्वज्ञापनायेति निष्कृष्टोऽर्थः। अत एव साधूक्तम्–'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।' इति,

ननु पचतीत्यादौ लभूतस्थानिनः सर्वत्र समानत्वात् लाघवादादेशिनां वाचकत्वमुचितमित्यत आह—व्याकरणभेदेनेति—एवञ्च व्याकरणानां भिन्नत्वेन स्थानिनामपि भिन्नत्वात् स्थानिनां वाचकत्वे लाघवकारणकल्पनं मनोरथमात्रमिति भावः। विनिगमनाविरहात् यथा तत्तद्देशलिपयः सर्वा एव शब्दाविषयकसंस्कारोद्बोधनद्वारा शब्दोद्बोधिका भवन्ति तथैव स्थानिनोऽपि। तत्र तत्र कल्पितवाचकत्वस्यैव सत्त्वात् कल्पनाया अनियतत्वेन गौरवस्योभयत्र तुल्यत्वादिति भावः।

वाक्यस्वरूपस्य शब्दस्य प्रतिपादकत्वं समासतः समर्थ्य तत्र प्रामाण्यमुपपादयति—तत्रेति—वाक्येषु। 'यतश्च निर्धारणम्' इति निर्धारणे सप्तमी।

**प्रत्यक्षेत्यादि**—इन्द्रियजन्यत्वे सति ज्ञानत्वं प्रत्यक्षप्रमाया लक्षणम्। अनुमित्यादावतिव्याप्तिवारणाय–इन्द्रियजन्यत्वे इति। इन्द्रियवृत्तिरूपादावातिव्याप्तिवारणाय ज्ञानमिति। यद्यपि मनः स्वरूपं यदिन्द्रियं तज्जन्यं सर्वमेव प्रत्यक्षानुमित्युपमितिशाब्दादिज्ञानं भवति, ज्ञानत्वावच्छिन्नं प्रति आत्मना सह मनःसंयोगस्य कारणत्वात्, अतोऽनुमित्यादौ तल्लक्षणस्यातिव्याप्तिः, तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने करणत्वं, तत्प्रत्यक्षमिति विवक्षितम्। इदन्तात्पर्यम्–मनसि धर्मद्वयं वर्त्तते इन्द्रियत्वं मनस्त्वञ्च। तत्र ज्ञानत्वावच्छिन्नम्प्रति मनसो मनस्त्वावच्छिन्नतया कारणत्वम्। नतु इन्द्रियत्वावच्छिन्नतया। प्रत्यक्षप्रमामात्रं प्रति तु मनस इन्द्रियत्वावच्छिन्नतया कारणत्वम्, चक्षुरादीन्द्रियाणामपीन्द्रियत्वावच्छिन्नतया कारणत्वं भवति। अतः प्रत्यक्षप्रमितिकरणतावच्छेदको धर्म इन्द्रियत्वम्, तेनेन्द्रियत्वेन रूपेण–

### ज्योत्स्ना

धर्मेणेन्द्रियाणां चक्षुरादीनां यत्र ज्ञाने–प्रत्यक्षप्रमित्यात्मकं प्रति, करणत्वं–व्यापारवदसाधारणकारणत्वं, तज्ज्ञानं प्रत्यक्षप्रमितिरित्यर्थः। इन्द्रियत्वावच्छिन्न-व्यापारवत्त्वसम्बन्धावच्छिन्नजनकतानिरूपितजन्यतावज्ज्ञानत्वमिति-लक्षणार्थो बोध्यः। अन्ये तु प्रत्यक्षं प्रति इन्द्रियाणामिन्द्रियत्वव्याप्य-घ्राणत्वादिना कारणत्वात्–घ्राणत्वाद्यन्यतमावच्छिन्नव्यापारवत्त्वसम्बन्धावच्छिन्नकारणतानिरूपितसमवायातिरिक्तसम्बन्धानवच्छिन्नावच्छेदकताश्रय – जातिमत्त्वमिति लक्षणं कल्पयन्ति।

ननु परमेश्वरे समवेता या नित्यज्ञानात्मिका प्रत्यक्षप्रमा सा नित्यत्वात् नेन्द्रियजन्या, तत्र परमेश्वरसमवेतप्रत्यक्षप्रमायामव्याप्तिः स्यादिति चेन्न? परमेश्वरसमवेता नित्या प्रमा तु न 'इन्द्रियजन्यं ज्ञान'मिति लक्षणस्य लक्ष्यं, किन्तु जन्यप्रत्यक्षमेव लक्ष्यमित्यभिप्रायात्। तथोक्तम्–"इन्द्रियार्थ-सन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" इति न्यायसूत्रम् ४, अध्यायः १, आह्निकम् १,

इन्द्रियस्य–चक्षुरादेः, अर्थेन–घटादिना सह, सन्निकर्षात् संयोगादि-षड्विधव्यापारात्, उत्पन्नम्–जन्यते यदव्यभिचारि ज्ञानं तत्प्रत्यक्षमिति सूत्रे लक्षणांशः।

'शुक्तौ इदं रजत'मिति जायमानं भ्रमज्ञानमपि इन्द्रियार्थसन्निकर्षोत्पन्नम्, अतस्तत्रातिव्याप्तिस्तद्वारणाय सूत्रे-अव्यभिचारीत्युक्तम्। व्यभिचारपदार्थोऽत्र भ्रमः। अव्यभिचारि-भ्रमभिन्नमित्यर्थः। तथाच–'इन्द्रियार्थ-सन्निकर्षोत्पन्नं भ्रमभिन्नं ज्ञानं प्रत्यक्षं, तच्च द्विविधम्–अव्यपदेश्यम्, व्यवसायात्मकञ्चेति सूत्रार्थः। 'अयं घटः' इति व्यपदेशः शब्दव्यवहारः तस्यायोग्यम्-अव्यपदेश्यम्-निर्विकल्पकमित्यर्थः। व्यवसायः 'अयं घटः' इत्यादिविशिष्टव्यवहारविषयकम् ज्ञानं सविकल्पकमित्यर्थः। ईश्वरप्रत्यक्षप्रमाया यदि लक्ष्यत्वं स्वीक्रियते तदा ज्ञानाकरणकत्वे सति ज्ञानत्वमिति लक्षणं बोध्यम्। ज्ञानन्नाम व्याप्तिज्ञानं, सादृश्यज्ञानं, पदज्ञानम्, अनुभवश्च न भवति करणं यत्र तत् ज्ञानं प्रत्यक्षमिति तदर्थः। अस्मत्प्रत्यक्षे परमेश्वर-

ज्योत्स्ना

प्रत्यक्षे च व्याप्तिज्ञानादीनामकरणत्वात् ज्ञानाकरणकत्वे सति ज्ञानत्व-स्योभयत्र सत्त्वाल्लक्षणसमन्वयः। ज्ञानाऽकरणकत्वानुपादाने अनुमित्यादौ सर्वत्र ज्ञानेऽतिव्याप्तिः स्यात्, तदुपादाने तु नातिव्याप्तिः। अनुमितिं प्रति व्याप्तिज्ञानम्, उपमितिं प्रति सादृश्यज्ञानं, शाब्दबोधं प्रति पदज्ञानं, स्मृतिं प्रति अनुभवः करणम्, प्रत्यक्षप्रमां प्रति तु न किमपि ज्ञानं करणम्, अतो ज्ञानाकरणकं ज्ञानमिति लक्षणस्यानुमित्यादौ नातिव्याप्तिः।

ननु निदिध्यासनद्वारा मननादिद्वारा ज्ञानकरणके योगप्रत्यक्षे लक्षणस्यास्याव्याप्तिरिति चेन्न, ज्ञानकरणकत्वाव्यभिचारिजातिशून्यज्ञानत्व-मिति तात्पर्यात्, तादृशी जातिरनुमितित्वादिरेव। अनुमानम्-अनुमितिः। परामर्शजन्यत्वे सति ज्ञानत्वमनुमितित्वम्। व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। भवति हि 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारकं ज्ञानं व्याप्तिविशिष्टपक्षधर्मताज्ञानम्, स एव परामर्शः, तज्जन्यं 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिः। प्रत्यक्षादावतिव्याप्तिवारणाय–सत्यन्तम्। परामर्श-ध्वंसादावतिव्याप्तिवारणाय ज्ञानत्वमिति।

ननु यथा घटस्य प्रत्यक्षं घटजन्यं, घटप्रत्यक्षे विषयविधया घटस्य कारण-त्वात्, कारणतावच्छेदकं विषयत्वं न तु घटत्वं, तद्वत् 'वह्निव्याप्यधूमवान् पर्वतः' इति यत् परामर्शात्मकं ज्ञानं तस्यापि मानसप्रत्यक्षं ज्ञानं 'परामर्शं जानामी'त्याकारकं जायते, तत्र परामर्शस्य विषयतया कारणत्वात्, विषय-तया परामर्शजन्यं यत् परामर्शात्मकज्ञानस्य प्रत्यक्षात्मकमानसज्ञानं तत्र 'परामर्शजन्यत्वे सति ज्ञानत्वमित्यनुमितिलक्षणस्यातिव्याप्तिः स्यात्? न च व्याप्यप्रकारकपक्षविशेष्यकनिश्चयत्वावच्छिन्न (परामर्श) जन्यत्वे सति ज्ञानत्वमिति लक्षणं वक्तव्यम्, परामर्शविषयकप्रत्यक्षे तु परामर्शस्य व्याप्यप्रकारकपक्षविशेष्यकनिश्चयत्वावच्छिन्नतया अकारणत्वाद् विषयत्वा-वच्छिन्नतयैव कारणत्वान्नातिव्याप्तिरिति वाच्यम्, 'वह्निव्याप्यधूमवत्पर्वत-वानयं देशः' इति विशिष्टवैशिष्ट्यावगाहिबोधे विशेषणविधया–व्याप्य-प्रकारकपक्षविशेष्यकनिश्चयस्य 'वह्निव्याप्यधूमवत्पर्वत' इत्यस्य कारण-

ज्योत्स्ना

त्वेनातिव्याप्तेर्वज्रलेपत्वादिति चेन्न ? परामर्शजन्यत्वे सति हेत्वविषयकत्वे सति ज्ञानत्वमित्यनुमितिलक्षणस्याभिप्रेतत्वात् परामर्शजन्यायां 'पर्वतो वह्निमानित्यनुमितौ' पर्वतो वह्निश्चेत्युभौ विषयौ भवतः, तत्र धूमात्मकहेत्वंशो नास्ति प्रविष्टः । परामर्शजन्ये प्रत्यक्षे वह्निव्याप्यधूमवत्पर्वतं जानामीत्यत्र, विशिष्टवैशिष्ट्यज्ञाने 'वह्निव्याप्यधूमवत्पर्वतवान् देश' इत्यत्र च धूमात्मकहेतोः प्रविष्टत्वात् ते ज्ञाने न हेत्वविषयके किन्तु हेतुविषयके भवतः इति तत्रातिव्याप्तेरभावात् ।

ननु कदाचित्काले–'वह्निव्याप्यधूमवान् पर्वत' इति परामर्शात् 'धूमवत्पर्वतो वह्निमान्' इत्याकारिका हेतुविषयिणी अधिकावगाहिन्यनुमितिरपि भवति, तत्र हेतोः धूमस्य पक्षांशे विशेषणतया विषयत्वात् 'परामर्शजन्यं हेत्वविषयकं ज्ञानमित्यनुमितिलक्षणस्याव्याप्तेरिति चेन्न, व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यानुमित्यात्मकज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य तात्पर्यविषयीभूतत्वात् । तादृशं ज्ञानं 'पर्वतो वह्निमान्' इति, तत्र वर्त्तमाना या अनुभवत्वव्याप्या जातिः–अनुमितित्वं, समवायेन तद्वत्त्वमित्यर्थः । तेन 'धूमवान् पर्वतो वह्निमान्' इत्याकारिकायामनुमितौ 'हेत्वविषयकत्वात्मकाविशेषणांशस्याऽसत्त्वेऽप्यनुमितित्वजातेः सत्त्वाल्लक्षणसमन्वयः । घटज्ञानेऽतिव्याप्तिवारणाय जन्यान्तम् । ध्वंसेऽनुभवत्वव्याप्यजातेरप्रसिद्धत्वादसम्भववारणाय द्वितीयं ज्ञानपदम् । सत्तामादाय प्रत्यक्षादावतिव्याप्तिवारणायानुभवत्वव्याप्येति । अनुभवत्वन्यूनवृत्तिकमिति तदर्थः, तेन न समव्याप्तमनुभवत्वमादाय प्रत्याक्षादावतिव्याप्तिः । जातिमत्त्वञ्च समवायेन बोध्यम्, तेन कालिकेन जातिमति काले नातिव्याप्तिः । एवञ्च व्याप्तित्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ननिष्ठजनकतानिरूपितजन्यतावत्–पक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नविधेयताकज्ञानवृत्त्यनुभवत्वन्यूनवृत्तिजातिनिष्ठाधेयतानिरूपितसमवायावच्छिन्नाधिकरणतावत्त्वमनुमितित्वमिति फ-

शब्दश्चाप्तोपदेशरूपः प्रमाणम् ।

आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान्, ....

---

लितोऽर्थः । अस्मिन् लक्षणे पक्षतावच्छेदकावच्छिन्नविशेष्यताघाटिततया निश्चयत्वघटकतदभावाप्रकारकत्वघाटिततया च गौरवमतो लघुलक्षणमाह-हेतुमन्निष्ठात्यन्ताभावाऽप्रतियोगिसाध्यसामानाधिकरण्यात्मकधर्मरूपाया व्याप्तेर्धूमे प्रकारतया जायमानं यत् प्रत्यक्षज्ञानं—'यत्र २ धूमस्तत्र २ वह्नि' रित्याद्याकारकं तदेव करणं व्यापारवदसाधारणं कारणं यस्य ज्ञानस्य तज्ज्ञानमनुमितिरित्यर्थः । उपमित्यादावतिव्याप्तिवारणाय – व्याप्तीति । व्याप्तिकरणके व्याप्त्यनुव्यवसायेऽतिव्याप्तिवारणाय–ज्ञानेति । व्याप्तिज्ञानजन्ये परामर्शेऽतिव्याप्तिवारणाय–करणकमिति । व्याप्तिज्ञानकरणके परामर्शजन्यसंस्कारेऽतिव्याप्तिवारणाय द्वितीयं ज्ञानपदम् । उपमानम्-उपमितिः । सादृश्यज्ञानं करणं यस्य तज्ज्ञानम् उपमितिः । प्रत्यक्षादावतिव्याप्तिवारणाय–सादृश्येति । सादृश्यकरणके सादृश्यानुव्यवसायेऽतिव्याप्तिवारणाय ज्ञानेति । वाक्यार्थस्मरणात्मके व्यापारेऽतिव्याप्तिवारणाय करणकमिति । सादृश्यज्ञानकरणके–वाक्यार्थस्मरणजन्यसंस्कारेऽतिव्याप्तिवारणाय ज्ञानमिति विशेष्यपदम् । शाब्दबोधत्वञ्च-पदज्ञानकरणकत्वे सति ज्ञानत्वम् । प्रत्यक्षादावतिव्याप्तिवारणाय–पदेति । पदकरणके पदानुव्यवसायेऽतिव्याप्तिवारणाय-ज्ञानेति । पदार्थस्मरणेऽतिव्याप्तिवारणाय करणकमिति । पदज्ञानकरणके पदार्थस्मरणजन्यसंस्कारेऽतिव्याप्तिवारणाय - ज्ञानमिति विशेष्यपदम् । अधिकमन्यतोऽवसेयं विस्तरभयान्नोच्यते ।

चतुर्विधप्रमाणेषु शब्दप्रमाणं निर्वक्ति–शब्दश्चेति । **आप्तोपदेशेति**–उपदिश्यते उच्चार्यतेऽसावुपदेशः,-आप्तोपदेशः-आप्तकर्तृकोच्चारणकर्मीभूत इत्यर्थः । अथवोपदेशनमुपदेशः भावेघञ् । एवञ्च आप्तोपदेशेनाप्तोच्चारणेन रूप्यते ज्ञायते इत्याप्तोपदेशरूपस्तथा चाप्तकर्तृकव्यवहारग्राह्य इति भावः । अथवाऽऽप्तश्चासावुपदेशश्चाप्तोपदेशः, युक्तोपदेश इति यावत् । उपदेशे युक्तत्वञ्च यथार्थज्ञानजनकत्वम् । एतेन वेदस्यापौरुषेयत्वेन नेदं लक्षणं सङ्गतमित्यपास्तम् । आप्तकर्तृकोपदेशत्वाभावेऽप्याप्तत्वविशिष्टोपदेशत्व-

रागादिवशादपि नान्यथावादी यः स इति चरके पतञ्जलिः।

---

सत्त्वात्। **प्रमाणमिति**—यथार्थज्ञानं प्रमा तत्करणं प्रमाणम्। एवञ्च भिन्नार्थकशब्दविषयकश्रावणप्रत्यक्षेण भिन्नार्थविषयकबोधेऽपि प्रमाणत्वाभावः सिद्ध्यति। आप्तलक्षणमाह—**आप्त इति, नामेति** वाक्यालङ्कारे। **कार्त्स्न्येनेति**—अनेनैकदेशिनिश्चयो व्यावर्त्यते। प्रकृते निश्चयशब्दस्य यथार्थज्ञानपरत्वेन निश्चयेत्युक्त्या भ्रमसंशययोर्निरासः। एवञ्च वीतरागत्वे सति निखिलतत्त्वविषयकानुभवप्रयोज्यनिश्चयवत्त्वमाप्तलक्षणं सिद्धम्।

ननु एतादृशस्याप्तत्वस्यास्मदादिष्वभावेन व्यवहारसाधनीभूतानां शब्दानामप्रामाण्यापत्तिरिति चेन्न, संवादिप्रवृत्तिप्रयोजकवाक्यप्रयोक्तृत्वेन हेतुनाऽऽप्तत्वस्यानुमानात्। अनुमानप्रयोगश्चेत्थम्-अयं पुरुष आप्तः संवादिप्रवृत्तिजनकवाक्यप्रयोक्तृत्वात् यन्नैवं तन्नैवमिति। **रागादीति**–रागो नाम इदं मदिष्टसाधनमित्याकारकज्ञानजन्यो धर्मविशेषः। आदिना द्वेषो गृह्यते। द्वेषश्च इदं मदनिष्टसाधनमित्याकारकज्ञानजन्यो धर्मविशेषः। आप्तलक्षणे अत्र रागादिवशत्वं लक्षणे घटकतया नास्ति प्रविष्टं, रागादिप्रतियोगिकप्रागभावस्य सत्त्वेऽन्यथावादित्वाभावस्य दुर्घटत्वात्, किन्तु अभ्युच्चयमात्रं तत्।

ननु शब्दस्य यथार्थज्ञानजनकत्वे सर्वेभ्यः शब्देभ्योऽपि निखिलश्रोतॄणां बोधापत्तिभिया तद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति अन्वयव्यतिरेकाभ्यां वृत्तिज्ञानजन्योपस्थितेः कारणत्वमवश्यमङ्गीकर्त्तव्यम्। वृत्तिश्च दाहं प्रति वह्न्यादिवन्न स्वरूपेण हेतुः, तस्याः स्वरूपतः सर्वत्र सत्त्वात् सर्वेषां बोधापत्तिरिति ज्ञाताया एव तस्याः हेतुत्वमभ्युपेयम्, तत्तत्पदनिष्ठवृत्तिज्ञानशून्यस्य पुरुषस्य तत्तत्पदश्रवणेऽपि बोधानुदयात्। यद्यपि शब्दश्रवणमात्रेण सर्वेषां बोधो माभूदिति तद्वद्विषयकशाब्दबोधं प्रति तद्वन्निरूपितवृत्तिज्ञानस्य कारणत्वं स्वीकर्त्तव्यं, तथा च पटत्ववद्विषयकबोधे पटत्ववन्निरूपितवृत्तिज्ञानस्य हेतुत्वान्न पटपदात् घटादिबोधो नाप्यज्ञातवृत्तिकाद् बोधः, इति सर्वं सुस्थं तथापि एतादृशकार्यकारणभावस्वीकारे गुडत्वादिधर्मवद्गुडनिरूपितवृत्तिज्ञानेन मधुरत्वादिप्रकारकबोधो मा

तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः। अत एव नागृहीतवृत्तिकस्य शाब्दबोधः। अत एव च "नहि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यते" इति समर्थसूत्रभाष्यं सङ्गच्छते। गुडादिशब्देन गुडत्वजात्यवच्छिन्नो गुडपदवाच्यं इत्येव बोधो जातिप्रकारकः।

---

भूदिति प्रकारीभूतधर्मनिरूपितत्वमपि वृत्तेरङ्गीकार्यम्। तथा च यद्धर्मप्रकारकवृत्तिज्ञानं तद्धर्मप्रकारक एव बोधः। गुडपदेन च गुडत्वप्रकारकबोधस्यैव दर्शनात् मधुरत्वाद्यनेकधर्मसत्त्वेऽपि गुडत्वप्रकारिकैव गुडपदे वृत्तिरिति न मधुरत्वादिप्रकारकबोधः इत्याशयं मनसि निधायोक्तं ग्रन्थकारेण–'तद्धर्मावच्छिन्ने'त्यादि 'सङ्गच्छत' इत्येतदन्तम्। ज्ञाने वृत्तिवैशिष्ट्यञ्चाग्रे मूल एव स्फुटीभविष्यति।

नैयायिकैः शाब्दबोधं प्रति वृत्तिज्ञानं पदज्ञानञ्च स्वातन्त्र्येण कारणमुक्तं, परन्तु पृथक् पृथक् तयोः कारणत्वस्वीकारे कार्यकारणभावद्वयकल्पने महद्गौरवं स्यादिति लाघवाद् विशिष्टस्य कारणत्वं शाब्दिकैः स्वीक्रियते, तदेवोक्तं **वृत्तिविशिष्टेति**– ज्ञाने वृत्तिवैशिष्ट्यस्योपपादनप्रकारस्त्वित्थम्–वृत्तिज्ञानं शक्तिग्राहकशिरोमणिवृद्धोपदेशव्यवहाराभ्यां भवति यथा प्रयोजकवृद्धेन प्रयोज्यवृद्ध आज्ञप्तः—'घटमानये'ति तदनु घटमानयन्तं प्रयोज्यवृद्धं प्रेक्षमाणेन पार्श्वस्थेनोदासीनेन बालेनानुमीयते यत् प्रयोज्यवृद्धस्य चेष्टा घटानयनप्रवृत्तिप्रयोज्या, चेष्टात्वात् मदीयचेष्टावत् इति चेष्टाहेतुभूतां प्रवृत्तिमनुमाय, प्रयोज्यवृद्धस्य प्रवृत्तिर्घटानयनं मत्कार्यमिति बोधजन्या मदीयतत्तत्कार्यविषयकप्रवृत्तित्वादिति प्रवृत्तिहेतुं कार्य्यताज्ञानमनुमाय घटानयनकार्यताज्ञानं यत्किञ्चित्कारणजन्यं कदाचित् जायमानत्वात् घटादिवदिति सामान्यरूपेण कारणमनुमीयते। तदनु प्रयोज्यवृद्धस्य कार्यत्ताज्ञानं प्रयोजकवृद्धवाक्यजन्यं तदन्वयव्यतिरेकानुविधायित्वाद् यो यदन्वयव्यतिरेकानुविधायी स तज्जन्यः, दण्डान्वयव्यतिरेकानुविधायी घटो यथा दण्डजन्यस्तथा घटमानयेति वाक्यान्वयव्यतिरेकानुविधायि कार्यताज्ञानं

ज्योत्स्ना

तद्वाक्यजन्यमिति वाक्यं कारणत्वेन निश्चीयते । ततश्च घटमानयेत्युक्ते घटानयनं दृश्यते न पटानयनमित्यन्वयव्यतिरेकाभ्यां पदमपि तत्तदर्थबोधे कारणमित्युक्तरीत्यानुमीयते । एवञ्च पदवाक्ययोस्तदर्थे बोधरूपकार्येण कश्च-नापि सम्बन्धो वाच्यः, कार्येणासम्बद्धात् कारणात् कार्यस्योत्पत्तेरसम्भवात् । एवञ्च नैयायिकैरेतादृशे स्थले ईश्वरेच्छारूपशक्तिः, मीमांसकैर्बोधजनक-तावच्छेदकशक्तिः, प्राचीनवैयाकरणैर्बोधजनकता,—सम्बन्धः स्वीक्रियते । नागोजिभट्टेन तु सर्वाण्यपि मतानि समालोच्य वाच्यवाचकभावापरपर्याय-रूपा शक्तिरङ्गीक्रियत इति अनुपदमेव स्फुटीभविष्यति । स च सम्बन्धो न हि किञ्चिन्निष्ठवाच्यतानिरूपितवाचकतारूपः किन्त्वखण्डो धर्मविशेषः, अन्यथा मतान्तराभिहितदोषाणां तदवस्थत्वात् । एवञ्चोक्तरीत्या तत्तत्पदा-दिनिष्ठशक्तिज्ञानं जायते तेन च शक्तिविषयकः संस्कारो जन्यते । स च संस्कारः श्रावणप्रत्यक्षविषयीभूतपदरूपोद्बोधकवशादुद्बुद्धः सन् स्वविषय-शक्तिविषयिणीं स्मृतिं जनयति । स्मृता च शक्तिः पदार्थविषयकं ज्ञान-मुत्पादयति सम्बन्धज्ञानाधीनसम्बन्धिज्ञानात्, तदेव ज्ञानं स्मृतिरूपोपस्थिति-र्ज्ञानान्तरं वाऽभिधीयते । उपस्थितिरूपज्ञानाच्छक्तिविषयकसंस्काराद् वाऽऽकाङ्क्षादिकारणान्तरसत्त्वे शाब्दबोधो जायते । तथाच यस्य यत्पदे वृत्ति-ज्ञानं जातं, तस्य तत्पदज्ञाने वृत्तिः, स्वविषयकसंस्कारद्वारा मूलोक्तोभयसम्ब-न्धेन वर्त्तत इति वृत्तिवैशिष्ट्यं ज्ञाने सुसङ्गतम् । वृत्तिनिष्ठविषयतानिरूपित-विषयिताकसंस्काराधिकरणवृत्ति-वृत्त्याश्रयपदविषयकज्ञानस्यैव शाब्दबोधे हेतुत्वमस्तु अलं वृत्तिवैशिष्ट्यनिवेशनेति तु न शङ्क्यम्, कारणतावच्छेद-कस्य गुरुभूतस्य कल्पनापत्तेः, सामानाधिकरण्यादीनां संसर्गविधया निवेशे तु प्रकारविधया कारणतानवच्छेदकतया लाघवात् । ननु शाब्दबुद्धित्वा-वच्छिन्नकार्यतानिरूपितकारणता न पदज्ञाने अपि तु वृत्तिप्रयोज्यपदज्ञान-जन्यपदार्थोपस्थितिरेव हेतुरिति चेन्न वृत्तिप्रयोज्यपदजन्यपदार्थोपस्थिति-त्वस्य कारणतावच्छेदकत्वापेक्षया स्वजन्यपदार्थोपस्थितिसम्बन्धेन पद-विषयकज्ञानस्य कारणत्वे पदज्ञानत्वस्य कारणतावच्छेदकत्वेन लाघवात् ।

मधुरत्वं तु 'गुडो मधुर ऐक्षवत्वाद्' इत्यनुमानरूपमानान्तरगम्यम्।

विशेष्यविशेषणभावव्यत्यासेन गृहितशक्तिकस्य पुंसो घटपदाद् घटत्वविशिष्टबोधवारणाय तद्धर्मावच्छिन्नेति।

---

ननु यदि गुडपदेन गुडत्वजात्यवच्छिन्नविषयक एव बोधः स्वीक्रियते न मधुरत्वविषयकः, तर्हि गुडपदश्रवणेनानुभूतगुडरसानां रसनाद्रवत्वमनुपपन्नं स्यादिति मधुरत्वप्रकारकोऽपि बोधोऽवश्यमभ्युपेय इत्यत आह–**मधुरत्वं त्विति**। अनुमानरूपमानान्तरगम्यमित्यस्य न तु शब्दगम्यामिति शेषः। नैयायिकानां नये ज्ञानलक्षणप्रत्यासत्त्या, आलङ्कारिकाणां व्यञ्जनाख्यवृत्त्या मधुरत्वप्रकारको बोधो भवति।

ननु तन्निष्ठप्रकारतानिरूपिततद्वद्वृत्तिविशेष्यताकवृत्तिविशिष्टज्ञानस्य हेतुत्वाङ्गीकारे इष्टस्याकाशपदात् 'शब्दाश्रय' इत्याकारकबोधस्यानापत्तिः, स्वरूपत आकाशे एव आकाशपदस्य शक्तिस्वीकारेण शक्तिज्ञाने शब्दाश्रयत्वरूपस्याकाशत्वस्य प्रकारविधयाऽप्रविष्टत्वादिति चेन्न, शाब्दिकैः आकाशत्वस्यापि जातित्वस्याग्रे सिद्धान्तयिष्यमाणत्वात् आकाशपदस्य आकाशत्वप्रकारकाकाशविशेष्यकशक्तेरभ्युपेयत्वात्। अथवा शब्दाश्रयत्वप्रकारकाकाशविशेष्यकोपस्थितिं प्रति निरवच्छिन्नशब्दाश्रयविषयकशक्तिबोधस्य हेतुत्वं स्वीकर्त्तव्यम्। तथा च न काचिदप्यनुपपत्तिः। नन्वेवमपि निरूप्यनिरूपकभावानापन्नविषयताकनिर्विकल्पकबोधस्य पदजन्यत्वं न स्यादिति चेन्न, इष्टापत्तेः, इन्द्रियविषयतातीतत्वात्तस्य।

ननु कारणदले विशेष्यविशेषणयोरुभयोरपि फलविशेषस्य सत्त्वादस्तु निवेशः, फलाभावेन कार्यदले तयोर्निवेशेनालं, तद्विषयकशाब्दबोधं प्रति, इत्येवास्तु इत्यत आह–**विशेष्येति**। **व्यत्यासेनेति**–घटपदं घटविशिष्टघटत्वे शक्तमित्येवं प्रकारेण व्यत्यासेन शक्तिग्रहे घटत्वावच्छिन्नविषयकबोधवारणाय तद्धर्मावच्छिन्नस्य निवेशः, तन्निवेशे तु घटत्ववृत्तिप्रकारतानिरूपितघटवृत्तिविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति घटत्ववृत्तिप्रकारतानिरूपितघटवृत्तिविशेष्यताकशक्तिज्ञानस्य हेतुत्वेन न तथाशक्तिग्रहात्

ज्ञाने वृत्तिवैशिष्ट्यं च स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यस्वाश्रयपदविषयकत्वोभयसम्बन्धेन बोध्यम् ।

---

तथाबोधः । घटपदं घटत्वावच्छिन्ने शक्तमिति शक्तिग्रहसत्त्वे घटविशिष्टघटत्वविषयकशाब्दबोधापत्तेरप्यु[१]पलक्षणमिदम् । कार्यतावच्छेदकीभूतस्य तद्विषयकशाब्दबुद्धित्वस्योभयविधशाब्दबोधस्थले अक्षतत्वात् ।

ननु यद्धर्मप्रकारकशक्तिग्रहस्तद्धर्मप्रकारकस्यैव शाब्दबोधस्य सिद्धान्तितत्वेन बुद्धिस्थत्वावच्छिन्नार्थनिरूपितायाः शक्तेरेव त्यदादिपदे स्वीकारात् तमानयेत्यादेः 'बुद्धिस्थत्वावच्छिन्नमानय' इत्येव बोधो न तु सर्वानुभूतं पटत्वावच्छिन्नमित्यादि, त्यदादिपदे तथाविधशक्तिस्वीकारे मानाभाव इति तु न शङ्कनीयम्, अनुमितिलक्षणातिव्याप्तिप्रसङ्गपरदीधितिग्रन्थस्यैव मानत्वात् । तत्र हि अनुमितिलक्षणनिरूपणावसरे परामर्शजन्यं ज्ञानमनुमितिरिति लक्षणे वह्निव्याप्यधूमवदर्थकतत्पदघटित 'स वह्निमान्' इति शब्दजबोधस्थले तच्छब्देन परामर्शे परामृश्य ज्ञाने विषयस्यापि कारणत्वात् शाब्दबोधस्य परामर्शरूपविषयजन्यत्वेनानुमितिलक्षणस्यातिव्याप्तिः स्यादित्युक्तम् । इति चेन्न, बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावच्छिन्नार्थनिरूपितशक्तेः त्यदादिपदेषु स्वीकारेण दोषाभावात् ।

नन्वेवं नानाधर्मनिष्ठनानावच्छेदकतानिरूपितशक्तिनिरूपकतावच्छेदकैकधर्मवत्त्वस्यैव नानार्थकत्वेन प्रकृते नानार्थत्वापत्तिरिति चेन्न, अननुगतनानाधर्मस्थले एव नानार्थकस्य स्वीकारात्, त्यदादिस्थले तु बुद्धिस्थत्वमेवानुगतीकृत्य तत्तद्धर्मावच्छिन्ने शक्तेः स्वीकारेण नोक्तनानार्थकत्वापत्तिः । त्यदादीनां बुद्धिस्थत्वावच्छिन्ने शक्तेः स्वीकारेऽपि विशेषरूपेणोपस्थितेः, उक्तनियमस्तु त्यदाद्यतिरिक्तस्थले एव । **स्वविषयकेति**–वृत्तिविषयकेत्यर्थः। यस्मिन् स्थले पदस्य श्रावणप्रत्यक्षं, वृत्तेश्च संस्कारजन्यं स्मरणात्मकं ज्ञानं जातं तत्र विषयतया वृत्तिविषयकोद्बुद्धसंस्कारः पद-

---

१ शक्यबोधकत्वे सति शक्येतरबोधकत्वमुपलक्षणत्वम् । यथा काकवन्तो देवदत्तस्य गृहा इति ।

अतो नागृहीतवृत्तिकस्य, नापि विस्मृतवृत्तिकस्य, नापि तत्पद-मजानतो, नापि घटपदाश्रयत्वेनोपस्थिताकाशस्य, नापि जनकतयोपस्थित-चैत्रादेश्च बोधः ।

---

ज्ञानञ्च पदरूपे विषये वर्त्तते, उभयोरपि पदविषयकत्वेन एकाधिकरण-वृत्तित्वस्य सुलभत्वात् । पटपदे गृहीतवृत्तिकस्य वस्त्रपदेन शाब्दबोध-वारणाय पदरूपप्रदेशमादाय सामानाधिकरण्यं बोध्यम् । ननु यदि पदरूप-देशमादाय सामानाधिकरण्यमित्युच्यते तर्हि पटपदेऽवगतवृत्तिकस्य देवदत्तस्य तादृशसंस्कारसामानाधिकरण्यं गृहीत्वाऽज्ञातवृत्तिकस्यापि यज्ञदत्तस्य पटपदज्ञानेन शाब्दबोधो दुरुद्धरः स्यादिति चेन्न, समवायेनापि सामाना-धिकरण्यघटितवृत्तिवैशिष्ट्यस्य ज्ञाने ग्रहणेन उक्तस्थले तादृशसामानाधि-करण्याविरहात् । सिद्धान्ते प्रकृते आत्मनिष्ठप्रत्यासत्त्यैवोक्तकार्यकारणभावस्य-पर्यवसानात् । अतः = पूर्वोक्तकार्यकारणभावात् । वैशिष्ट्यघटकप्रथम-सम्बन्धस्य फलमाह—**नागृहीतवृत्तिकस्य, नापि विस्मृतवृत्तिकस्येति**-उभयत्राप्युद्बुद्धसंस्काराभावात् । द्वितीयस्य फलमाह—**नापि तत्पदम-जानत इति**—तत्र पदे विषयतया पदज्ञानासत्त्वात् । तदात्मनि च समवायेन-पदज्ञानाभावात्, शरीरावयसञ्चालनादिनापि अर्थज्ञानसम्भवादातिव्याप्ति-वारणाय पदेत्युक्तिः । पदविषयकत्वमात्रोक्तौ यत्किञ्चित्पदविषयकत्व-मादायातिव्याप्तिवारणाय **स्वाश्रयेति** । स्वाश्रयविषयकत्वमात्रोक्तौ निरूपक-तासम्बन्धेन स्वाश्रयार्थविषयकत्वमादाय पदाज्ञानेऽपि बोधवारणाय **पदेति** । तद्धर्मावच्छिन्ननिरूपितत्वस्य कृत्यं दर्शयति—नापि **घटपदाश्रयत्वेनेत्यादि** । एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति सिद्धान्तात् घटपदात् सम-वायेन शब्दगुणाश्रयत्वात् सम्बन्धिन आकाशस्योपस्थितावपि घटपदे आकाशत्वावच्छिन्नार्थनिरूपितवृत्तेरभावात् । एतादृशकार्यकारणभावस्वी-कारादुच्चारणकर्तृत्वेन पदव्यञ्जकतयोपस्थितचैत्रादेर्न शाब्दे मानमित्याह-**नापि जनकतयेत्यादि** ।

ननु संस्कारस्यातीन्द्रियत्वेन तत्सत्त्वे मानाभावात् कुतस्तेन सह वृत्त्याश्रयपदविषयकज्ञानस्य सामानाधिकरण्योपपत्तिः, न च यथा

संस्कारकल्पिका च वृत्तिस्मृतिरेव शाब्दबुद्धिरेव वेत्यन्यदेतत् । सा च वृत्तिस्त्रिधा-शक्तिर्लक्षणा व्यञ्जना च ।

---

'स्वर्गकामो यजेते'ति श्रुत्या यागस्य स्वर्गसाधनत्वं बोध्यते, यागश्च "द्रव्यं देवता त्यागः" (१।२।२) इति कात्यायनश्रौतसूत्रात् "देवतोद्देशेन द्रव्यत्यागः" त्यागश्च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनमिति तस्य व्यापारविशेषत्वात् नाशात् मरणानन्तरभाविस्वर्गं प्रति साधनत्वं नोपपद्यते इति अगत्या श्रुतिसामञ्जस्याय यागजन्योऽदृष्टविशेषः कल्प्यते, तथात्रापि संस्कारः कल्पनीय इति वाच्यम्, अत्र तादृश्याः संस्कारकल्पिकायाः सामग्र्या अभावात् इत्यत आह—**संस्कारकल्पिका चेत्यादि**। वैयाकरणनये स्मृतिं प्रति संस्कारस्य कारणत्वेन कारणमन्तरा कार्यस्यानुत्पादात् व्याप्यभूतस्मृत्या व्यापकस्य संस्कारस्यानुमानमेव कल्पनमत्र बोध्यम्। ननु "संस्कारकल्पिके"त्यादिग्रन्थो निष्प्रयोजनः, संस्कारस्य स्वरूपत एव वह्न्यादिवत् हेतुत्वात् न तु ज्ञातस्येति चेन्न, संस्कारकल्पिकेत्यस्य स्मृतिनिष्ठकार्यतानिरूपितसंस्कारनिष्ठकारणताकल्पिकेत्याशयात् । उपेक्षात्मकानुभवेन स्मृतेरदर्शनात् स्मृतिं प्रत्यनुभवस्य कारणत्वोक्तिर्नैयायिकानां न विचारसहा। अत्राधिकं जिज्ञासुभिरस्मद्गुरुवर्योपाध्यायचरणैः कृता लघुमञ्जूषायाः टिप्पणी द्रष्टव्या। न चात्र वृत्तिस्मरणे एव किं गमकमित्याह—**शाब्दबुद्धिरेव वेति**, वा शब्दोऽत्र हेतुत्वज्ञापके चार्थे, एवञ्च शाब्दबोधरूपकार्येण साधनेन स्मृतिरनुमीयते, स्मृत्या च साधनेन संस्कारः साध्यते इति तात्पर्यम्।

**त्रिधेति**—ननु सामान्यधर्मप्रकारकज्ञानस्य सामान्यधर्मावान्तरधर्मप्रकारकज्ञानेच्छायां स्वतन्त्रान्वयव्यतिरेकशालित्वेन हेतुत्वात् वृत्तेः सामान्यलक्षणमनुक्त्वा तद्विभागोऽनुचितो नागेशस्य, नचेष्टसाधनताज्ञानानात्मकसामान्यधर्मप्रकारकज्ञानस्य विशेषजिज्ञासाहेतुत्वमप्रामाणिकम्, पृथक् सामान्यज्ञानं विनापि इष्टसाधनताज्ञानात् सामान्यधर्मावान्तरधर्मप्रकारकज्ञानेच्छोदयस्य सर्वसिद्धत्वादिति वाच्यम्,

ज्योत्स्ना

[1]इष्टसाधनताज्ञानधर्मितावच्छेदकज्ञानसम्पादकत्वेन तस्य हेतुत्वादिति चेन्न, पदार्थस्मृत्यनुकूलत्वे सति पदपदार्थसम्बन्धत्वरूपस्य वृत्तिसामान्यस्य प्रसिद्ध-तयानुल्लेखेनादोषात्। पदार्थस्मृत्यनुकूलत्वानुपादाने 'घट'पद — 'कम्बु-ग्रीवादिमदा'त्मकार्थयोः पृथिव्यादौ यः कालिकसम्बन्धस्तत्रातिव्याप्तिः, तदुपादाने तु वृत्त्यात्मकसम्बन्धातिरिक्ता ये कालिकादिसम्बन्धास्ते न शाब्द-बोधजनकपदार्थस्मरणानुकूला इति तद्वारणम्। अर्थस्मृत्यनुकूलत्वस्यादृष्टादौ सत्त्वादातिव्याप्तिः, तद्वारणाय पदपदार्थसम्बन्ध इति, अदृष्टादिकं न पदपदार्थसम्बन्ध इति तद्वारणम्।

त्रिधेति—अत्र 'धा' प्रत्ययस्य प्रकारोऽर्थः। प्रकारश्च सामान्य-व्यावर्त्तको विशेषधर्मः। एवञ्च शक्तिलक्षणाव्यञ्जनात्व-धर्मत्रयविशिष्टा वृत्तिरिति [2]निष्कर्षः। इदमत्राकूतम्—शाब्दबोधनिष्ठकार्यतानिरूपित-शक्तिज्ञाननिष्ठाकारणता एकरूपेणैव—शक्तिरूपसम्बन्धवृत्तिविषयतानिरू-

---

१ इष्टसाधनताज्ञानस्य = स्वप्रकारकत्वसम्बन्धेन तद्धर्मावान्तरधर्मविशिष्टज्ञानमिष्ट-साधनमित्याकारकज्ञानस्य, धर्मितायामवच्छेदकीभूतो यस्तादृशावान्तरधर्मः, तत्प्रकारकं यज्ज्ञानं तदुत्पादप्रयोजकतयेत्यर्थः। तथा च विशेषजिज्ञासां प्रति सामान्यधर्मप्रकारकज्ञानस्य तत्त्वेन पृथगेव साक्षात् कारणत्वम्, अथवा प्रथमं सामान्यधर्मप्रकारकं ज्ञानं, ततः सामान्यधर्मावान्तरधर्मरूपेष्टसाधनताज्ञानधर्मिता-वच्छेदकप्रकारकं ज्ञानं, ततस्तादृशेष्टसाधनताज्ञानं, ततो जिज्ञासेत्यादिरीत्या परम्परया कारणमतः सामान्यज्ञानं विना विशेषजिज्ञासोत्पादो न सम्भवत्येवेति तत्त्वम्।

२ वस्तुतस्तु उद्देश्यतावच्छेदकसमनियतवस्तुविशिष्टान्यसंख्यावान् धाप्रत्ययार्थो बोध्यः, तथा च वृत्तिर्वृत्तित्वसमनियतवस्तुमदन्यसंख्यावतीत्यर्थः अभिधात्व-लक्षणात्वव्यञ्जनात्वगतत्रित्वसंख्यामादाय लक्षणसमन्वयो विधेयः, वस्तु-विशिष्टत्वञ्च-स्ववृत्तित्व स्वविशिष्टवृत्तित्वोभयसम्बन्धेन, तत्र वैशिष्ट्यं स्वभिन्नत्व, स्वसामानाधिकरण्योभयसम्बन्धेन, तत्र वृत्तित्वाभिधात्वलक्षणात्वव्यञ्जनात्वगत चतुष्ट्वमादाय वृत्तेश्चतुर्विधत्वापत्तिवारणाय वस्तुविशिष्टान्यत्वमुक्तम्।

तत्र शक्तिः कः पदार्थ इति चेत्।

अत्र तार्किकाः—'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याकारा, 'इदं पदमिममर्थं बोधयतु' इत्याकारा वेश्वरेच्छा शक्तिः, लाघवात्। सैव सङ्केतः सम्बन्धः। शक्तेर्यद्यपि विषयत्वलक्षणः, सम्बन्धः पदेऽर्थे बोधे च तथाऽपि बोधनिष्ठजन्यतानिरूपितजनकतावत्त्वेन शक्तिविषयो वाचकः, पदजन्यबोधविषयत्वेन शक्तिविषयो वाच्य इति नातिप्रसङ्गः।

---

पितपदनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यतानिरूपकत्वेन पदप्रकारार्थविशेष्यकज्ञानस्य। "शक्तिसम्बन्धेन पदविशिष्टोऽर्थः" 'शक्तिनिरूपकत्वसम्बन्धेन पदविशिष्टोऽर्थः' इत्याकारकोयमत्र ज्ञाने शक्तौ संसर्गताख्यविषयताया अक्षतत्वात्। एवञ्च धर्मत्रयविशिष्टा वृत्तिः, इति वृत्तेः स्वरूपप्रदर्शनमात्रम्।

प्रथमं तावदुद्देशक्रमेण प्रत्याख्यानाय तार्किकाभिमतमुपाक्षिपति—**तत्रेति**। तार्किका ईश्वरेच्छारूपां शक्तिं मन्यन्ते। इच्छा च द्वेधा—पदप्रकारकार्थविशेष्यिका, अर्थप्रकारकपदविशेष्यिका च, तत्रेच्छायाः स्वरूपमाह—**अस्मादिति**—अस्माद्-घटशब्दाद् अयं पृथुबुध्नोदराद्यात्मको जात्याकृतिविशिष्टव्यक्तिरूपोऽर्थो ज्ञातव्य इति भावः। अत्र—सन्निकृष्टार्थबोधकेदम्शब्दार्थस्योच्चारणकर्मीभूतस्य[1] 'शब्द' पदार्थैकदेशेन शब्देन सहाभेदेनान्वयः, शब्दादित्यस्य लक्षणया शब्दज्ञानादित्यर्थः, 'शब्द'-पदोत्तरपञ्चम्या जन्यत्वमर्थः, तत्र 'शब्द'शब्दस्य निरूपितत्वसम्बन्धेनान्वयः, पञ्चम्यर्थजन्यत्वस्य च बोद्धव्यैकदेशे 'बुध'धात्वर्थे बोधे आश्रयत्वसम्बन्धेनान्वयः, कर्मणि विहितस्य तव्यत्प्रत्ययस्य विषयत्वरूपेऽर्थे 'बुध'धात्वर्थबोधस्य च निरूपितत्वसम्बन्धेनान्वयः, विषयत्वस्य च स्वरूपसम्बन्धेनार्थेऽन्वयः। एवञ्च 'इदं' निष्ठप्रकारतानिरूपित 'शब्द' निष्ठप्रकारतानिरूपितविशेष्यतावानर्थ' इति बोधः। 'इदमभिन्नशब्दजन्यबोधविषयतावानर्थो भवतु' इत्याकारिका शब्दप्रकारिकाऽर्थविशेष्यकेश्वरेच्छा

---

१ त्यदादीनां बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तत्वात्।

ज्योत्स्ना

शक्तिः । 'समानाधिकरणप्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभाव' इति गदाधरभट्टाचार्यमतं, 'समानाधिकरणयोस्तयोरभेद' इति जगदीशतर्कालङ्कारमतम्,–आद्ये– इदन्त्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितशब्दत्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नशब्दत्वावच्छिन्नप्रकारतानिरूपितजन्यतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नजन्यतात्वावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नबोधत्वावच्छिन्नप्रकारतानिरूपितविषयतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नविषयतात्वावच्छिन्नप्रकारतानिरूपितार्थत्वावच्छिन्नविशेष्यतानिरूपिकेश्वरेच्छा शक्तिः । द्वितीये— इदन्त्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितशब्दत्वावच्छिन्नविशेष्यताऽभिन्ननिरूपितत्वसम्बन्धावच्छिन्नशब्दत्वावच्छिन्नप्रकारतानिरूपितजन्यत्वावच्छिन्नविशेष्यत्वाऽभिन्नस्वरूपसम्बन्धावच्छिन्नजन्यतात्वावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यत्वाभिन्ननिरूपितत्वसम्बन्धावच्छिन्नविषयतात्वावच्छिन्नप्रकारतानिरूपितार्थत्वावच्छिन्नविशेष्यतानिरूपिकेश्वरेच्छा शक्तिरिति परिष्कृतः पन्थाः ।

ननु 'शक्तं पद'मिति व्यवहारानुपपत्तिः, उक्तबोधनिरूपिताविषयतावृत्तिप्रकारतानिरूपितेश्वरेच्छाया अर्थधर्मत्वादित्यत आह—**इदं पदमित्यादि** अत्र—इदमर्थस्याभेदेनार्थेऽन्वयः अर्थस्य च विषयत्वरूपे द्वितीयार्थे, वृत्तित्वसम्बन्धेनान्वयः ज्ञानार्थकधातुसमभिव्याहारे द्वितीयाया विषयत्वं विषयित्वं चार्थः, विषयत्वस्य च निरूपकत्वसम्बन्धेन 'बुध'धात्वर्थे ऽन्वयः, विषयताया ज्ञाननिरूपितत्वात्, बोधस्य च निरूपितत्वसम्बन्धेन जनकत्वरूपे णिजर्थेऽन्वयः, जनकत्वस्य चाश्रयत्वसम्बन्धेन पदेऽन्वयः प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्यैव तार्किकैरभ्युपगमात्, केचित्तु जनकत्वरूपे आख्यातार्थेऽन्वयमाहुस्तन्न, आख्यातस्य जनकत्वे तार्किकैरन्वयानभ्युपगमात् ।

यद्यपि प्रथमं शक्तिग्रहो वाक्य एव तथाऽप्यावापोद्वापाभ्यां शास्त्रकृत्कल्पिताभ्यां तत्तत्पदशक्तिग्रह इत्याहुः । तन्न । इच्छायाः सम्बन्धिनोराश्रयतानियामकत्वाभावेन सम्बन्धत्वासम्भवात् ।

---

'इदमर्थविषयकबोधजनकतावदिदं पदं भवतु' इत्याकारिका अर्थप्रकारकपदविशेष्यिकेश्वरेच्छा, इदमर्थनिष्ठप्रकारतानिरूपितविषयत्वनिष्ठप्रकारतानिरूपितबोधनिष्ठप्रकारतानिरूपितजनकत्वनिष्ठप्रकारतानिरूपित - विशेष्यताश्रयः पदमिति बोधः । एवं बोधविशेष्यिका विषयताविशेष्यिका नानाविधेश्वरेच्छा विनिगमनाविरहात्कल्पनीया । परिष्कृतञ्च रूपं पूर्वोक्तदिशावसेयम् ।

ज्ञानेच्छादीनां सविषयाणां विषयतासम्बन्धेन वर्त्तमानत्वात् विषयतासम्बन्धेनेच्छावत्त्वं वाचकत्वं, वाच्यत्वञ्च वक्तव्यम्, तादृशस्य वाचकत्वस्य वाच्यत्वस्य च पदे सम्बन्धेऽर्थे बोधे च सर्वत्र सत्त्वात् वाच्यवाचकभावस्य व्यवस्था न स्यादिति ईश्वरेच्छाविषयबोधनिष्ठजन्यतानिरूपितजनकताख्यविषयताश्रयत्वसम्बन्धेनेच्छावत्त्वं वाचकत्वम् । इच्छीयबोधनिष्ठविषयितानिरूपितविषयतावत्त्वसम्बन्धेनेच्छावत्त्वं वाच्यत्वमिति न सम्बन्धादौ वाचकत्वलक्षणातिव्याप्तिः, तदाह "शक्तेरित्यारभ्य नातिप्रसङ्गपर्यन्तम् ।

ननु पदेषु शक्तिग्रहो न स्यात्—शक्तिग्राहकस्य शिरोमणेर्वृद्धव्यवहारस्य वाक्ये एव दर्शनादित्यत आह—**यद्यपीति**—आवापः=निक्षेपः। उद्वापः—निष्कासनम् । यथा कलशमानय, पटमानय, इत्यादौ निक्षेपनिष्कासने । सिद्धान्तेऽखण्डवाक्यस्फोटस्य सिद्धान्तितत्वेनोभयमप्यसङ्गतमित्यत आह—**शास्त्रकृदिति**—शास्त्रकारैः प्रक्रियानिर्वाहायावापोद्वापौ कल्पितौ ताभ्यां च पदादिविभागः कल्पित इत्यर्थः ।

एतावता प्रबन्धेन नैयायिकमतमुपपाद्य तत्खण्डयितुमाह—**तन्नेति**—तार्किकाभिमतं शक्तेः स्वरूपं नेत्यर्थः । अयं भावः—ईश्वरेच्छायाः शक्तित्वं तदैव स्यात् यदा तस्याः सम्बन्धत्वं स्यात्, शाब्दबोधौपयिकत्वे सति सम्बन्धत्वस्यैव वृत्तित्वस्वीकारात् । सम्बन्धत्वञ्चाधाराधेयभावनियामकस्यैव दृष्टं, सर्व-

"सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामकः" इत्यभियुक्तव्यवहारात्। यथा घटवद् भूतलमित्यादौ संयोगरूपः सम्बन्धः सम्बन्धिभ्यां भिन्नो द्विष्ठो घटनिरूपितसंयोगाश्रयो भूतलमिति विशिष्टबुद्धिनियामकश्च, नात्र तथा घटशब्दः इच्छावान्, तदर्थो वा इच्छावानिति व्यवहारः।

तस्मात्पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः वाच्यवाचकभावापरपर्याया। तद्ग्राहकञ्चेतरेतराध्यासमूलकं तादात्म्यम्।

---

सम्मतञ्च। अत्र चेच्छीयविषयताश्रयबोधनिष्ठजन्यतानिरूपितजनकत्वाख्यविषयतासम्बन्धेन 'अयमर्थ', अयञ्च शब्द इच्छावानिति व्यवहारादर्शनात् तस्याः सम्बन्धत्वकल्पनं मनोरथमात्रमेव स्यात्। अत एव च तादात्म्यस्य सम्बन्धत्वखण्डनं ग्रन्थकृतैव कृतं वर्त्तते। **अनुमानप्रयोगस्तु**—ईश्वरेच्छा शक्तिः न सम्बन्धः आश्रयताया अप्रयोजकत्वात् तादात्म्यवत्। सर्वमेतन्मनसि निधायाह-**इच्छाया इति**। नन्वयं हेतुरसिद्धः, इत्यत आह-**सम्बन्धोहीत्यादि**, सम्बन्धिभ्याम्—प्रतियोग्यनुयोगिभ्याम्। उभयाश्रितः-प्रतियोग्यनुयोग्युभयनिष्ठः। **विशिष्टबुद्धीति**—विशेष्यविशेषणसम्बन्धैतत्त्रितयावगाहिनी बुद्धिः विशिष्टबुद्धिः। 'द्विष्ठः सम्बन्ध' इति हरेरुक्तिरत आह—**अभियुक्तेति**। अत्राभेदे सम्बन्धत्ववारणाय-सम्बन्धिभिन्नत्व इति। केवलजनकत्वादेर्वारणाय द्विष्ठत्व इति। वृत्त्यनियामकविषयत्वादिनिरासाय-विशिष्टबुद्धीति। व्यतिरेकिदृष्टान्तमाह—**यथेत्यादितः** व्यवहारपर्यन्तम्।

नन्वेवं शक्तिराकाशकुसुमायिता भविष्यतीति सिद्धान्ते शक्तेः स्वरूपमाह—**तस्मादिति**—नैयायिकनिकायस्य पूर्वोक्तदोषदूषितत्वादिति भावः। सम्बन्धान्तरम्—उक्तेश्वरेच्छादिभिन्नम्। **वाच्यवाचकभावेति**—वाच्यवाचकभावपदप्रतिपाद्येत्यर्थः, अत्र वाच्यत्वं वाचकत्वं च न बोधविषयत्वरूपं, बोधजनकत्वरूपं च नैयायिकपक्षोक्तस्य दोषस्य दुरुद्धरत्वात्, अपितु अखण्डोपाधिरूपं पदार्थान्तरमेव। तस्य च वाच्यवाचकभावरूपशब्दार्थोभयनिष्ठत्वात् सम्बन्धत्वं सुतरामुपपद्यते। **तद्ग्राहकश्चेति**—शक्तिबोधकश्च,

तदेव सम्बन्धः । उभयनिरूपिततादात्म्यवानुभय इत्यर्थपदयोर्व्यवहारात् । शक्तेरपि कार्यजनकत्वे सम्बन्धस्यैव नियामकत्वात् । दीपादिगतप्रकाशकत्वशक्तावपि आलोकविषयसम्बन्धे सत्येव वस्तुप्रकाशकत्वं नान्यथेति दृष्टत्वात् ।

---

अस्य तादात्म्यमित्यत्रान्वयः । एवञ्च तादात्म्यस्य शक्तिबोधकत्वमेव न तु शक्तित्वमिति सिद्धम् ।

**इतरेतराध्यासेति**—इतरेतराध्यासो मूलं ज्ञापकं यस्येत्यर्थः । यथा लोहितपदार्थस्फटिकपदार्थयोस्तादात्म्यमध्यासमूलकं, तथा पदपदार्थयोरपि 'अयं घटः' इत्याकारकं तादात्म्यमध्यासमूलकमेव न तु वस्तुतः । अनुमानप्रयोगस्तु-शब्दार्थौ परस्परतादात्म्यशीलौ, इतरेतराध्यासवत्त्वात् । अन्वयव्याप्तिस्तु यत्र यत्र इतरेतराध्यासस्तत्र तत्र तादात्म्यं यथा गुणगुणिनोः, नीलोघट इत्यादौ प्रत्यक्षादिप्रतीतौ दृष्टः, शब्दार्थयोरितरेतराध्यासोऽपि "शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करः" (यो. ३ सू. १७) इति सूत्रे "गौरिति शब्दो, गौरिति अर्थो, गौरिति ज्ञानम्" इतिस्पष्टीकृतः । अग्रे मूलेऽपि "रामेति द्व्यक्षरं नाम"-त्यादिना स्फुटीभविष्यति । तस्मादन्वयव्यतिरेकानुमानात् शब्दार्थयोस्तादात्म्यं सिद्धम् । व्यतिरेकव्याप्तिस्तु यत्र न तादात्म्यं न तत्राध्यासः यथा घटपटयोः । अध्यासो नाम–इतरस्मिन् इतरधर्मावभासः, यथा स्फटिके जपाकुसुमलौहित्यावभासः । **तदेव**—तादात्म्यमेवेत्यर्थः । तादात्म्यस्य सम्बन्धत्वञ्च रूपवान् घटः, जातिमान् पटः, इत्यादौ आश्रयताबुद्धिनियामकत्वात् प्रसिद्धम्, इदमेव भेदाभेदसंवलितं तार्किकैः समवायशब्देन व्यवह्रियते समवायस्य तादात्म्यातिरिक्तत्वाङ्गीकारश्चानवस्थादोषदूषित एव । तादात्म्यस्य सम्बन्धत्वनियामके द्विष्ठत्वे व्यवहारं प्रमाणयति–**उभयेति** । नन्वस्तु तादात्म्यस्य द्विष्ठत्वं तस्य शक्तेः सम्बन्धत्वकल्पने मानाभाव इत्यत आह–**शक्तेरपि कार्यजनकेत्यादि** । शक्तेर्भिन्न एव सम्बन्धः शक्तेः कार्यजनकत्वानियामकत्वेन दृष्टः । शक्तेरपि कार्यजनकत्वे सम्बन्धस्य नियामकत्वे दृष्टान्तं प्रदर्शयति–**दीपेति** । एवञ्च यथा दीपगतप्रकाशकत्वशक्तेः कार्योत्पादकत्वे दीप-

तदुक्तं हरिणा—

> उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते ।
> शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः ॥

उपकारः – उपकार्योपकारकयोर्बोधशक्त्योरुपकारस्वभावः सम्बन्धो यत्रास्ति तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वाऽनुमीयते । असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारकः गुणानामपि द्रव्याश्रितत्वनियामक इति हेलाराजः ।

स सम्बन्धः पदे वाक्ये च । तदाह न्यायभाष्यकारः–"समयज्ञानार्थं[1] चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं, वाक्यलक्षणाया वाचोऽर्थलक्षणम्" इति। अनेन पदेष्विव वाक्येष्वपीश्वरसमय इति स्पष्टमेवोक्तम् । तस्मादितरेतराध्यासः सङ्केतस्तन्मूलकं तादात्म्यञ्च सम्बन्ध इति सङ्क्षेपार्थः ।

---

वस्तुनोः प्रकाशकत्वशक्त्यतिरिक्तसंयोगादिसम्बन्धसत्त्वे एव वस्तुप्रकाशकत्वं नान्यथा तथा घटशब्दादिशक्तेरपि शाब्दबोधरूपकार्य्यजनने सम्बन्धसत्त्व एवार्थबोधकत्वं नान्यथा । स च न संयोगादिः, प्रमाणाभावात्, अतोऽनुमानेन च शब्दार्थयोस्तादात्म्यमेव सम्बन्धोऽङ्गीकर्त्तव्यः । अत्रार्थे हरिं प्रमाणयति– **तदुक्तमिति**—अनुमीयते इत्यस्य 'असम्बद्धानां शक्तिसत्त्वेऽपि कार्यजनकत्वाभावादिति शेषो बोध्यः । हेलाराजः-वाक्यपदीयस्य प्रसिद्धः टीकाकारः । 'समयज्ञानार्थं=सङ्केतज्ञानार्थम् । इदमिति पदस्य व्याकरणमित्यत्रान्वयः । पदलक्षणायाः पदस्वरूपायाः । अन्वाख्यानम्–प्रकृतिप्रत्ययतत्तदर्थप्रदर्शनपुरस्सरं बोधकम् । वाक्यलक्षणायाः–वाक्यस्वरूपायाः । अत्राप्यन्वाख्यानमित्यस्य सम्बन्धः । अर्थलक्षणं–वाक्यार्थबोधकं शास्त्रं तर्कमीमांसादि । अनेन=वाक्यलक्षणाया वाच इति कथनेन । **पदेष्विवेति**–शाब्दबोधोपकारिका शक्तिर्यथा पदे तथा वाक्येऽपीत्यर्थः । **इतरेतराध्यासः सङ्केत इति** । अत्र "अस्माच्छब्दादयमर्थो बोद्धव्य"

---

१ समयपालनार्थमिति पुण्यपत्तनप्रतौ ।

तदुक्तं पातञ्जलभाष्ये, "सङ्केतस्तु पदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः" इति । स्मृत्यात्मक इत्यनेन ज्ञातस्यैव सङ्केतस्य शक्तिबोधकत्वं दर्शितम् ।

---

इत्याकारकेच्छात्मकत्वेनैव सङ्केतस्य रूढ्या इतरेतराध्यासः सङ्केतोऽसङ्गत इति न भ्रमितव्यम्, शाब्दबोधोपपत्तये कल्प्यमानस्य सङ्केतस्य विनिगमनाविरहेण "इतरेतराध्यासरूपत्वस्वीकारात् ! सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूप" इति पतञ्जल्युक्तेश्च । अयं भावः सङ्केतो द्विविधः– भेदरूपोऽभेदरूपश्च । प्रथमः तार्किकाद्यभिमतः, अन्त्यः वैयाकरणमात्राभिमतः । नन्वेवमपि शब्दार्थयोरध्यासे सिद्धे एव अध्यासस्य सङ्केतत्वं स्यात् स एवाद्याप्यसिद्ध इति चेन्न, 'कः शब्दः' 'कोऽर्थः' इति द्विविधेऽपि शब्दार्थविषयके प्रश्ने "घट" इत्ययंशब्दः, 'घट' इत्ययमर्थः' इत्याकारकोत्तरदर्शनात्तयोरध्यासासिद्धेः । अन्यथा 'इति' शब्देन शब्दार्थाभ्यां 'घट' इति वर्णचतुष्टयस्याभेदबोधो नोपपद्येत। न केवलं शब्दार्थयोरेवाध्यासः, अपि तु 'घट' इत्याकारकं ज्ञानम्' इतिव्यवहाराच्छब्दज्ञानयोरपि अध्यासः, 'इति' शब्दस्य शब्दस्वरूपपरतातात्पर्यग्राहकत्वात् । **तदुक्तमिति**–तादात्म्यस्याध्यासमूलकत्वमित्यर्थः । **अध्यासरूप** इति ।

ननु 'रूप'पदोपादेन सङ्केतस्याध्यासत्वमेव लभ्यते नत्वध्यासमूलकत्वमिति चेन्न, रूप्यते-बोध्यते इति करणघञन्तरूपशब्देनाध्यासो रूपं बोधकं यस्येति बहुव्रीहिणाऽध्यासबोध्यत्वस्य लाभात् । वस्तुतः करणे घञोऽगतिकगतिकत्वात्, तावतापि बहुव्रीहिमन्तराऽभिमतार्थाऽसिद्धेशाऽन्यपदार्थकत्वकल्पनायां गौरवस्य दुरुद्धरत्वात् कर्मघञन्तरूपशब्दस्याध्यासशब्देन तृतीयातत्पुरुषेऽभिप्रेतार्थलाभः । **स्मृत्यात्मक** इति–स्मृतिविषय आत्मा स्वरूपं यस्येत्यर्थात् स्मृतिविषय इत्यर्थः । नायं विग्रहः किन्त्वर्थप्रदर्शनेतात्पर्यम्, अत्र विग्रहे समासविषयपदलोपाविधायकत्वात्, व्यधिकरणबहुव्रीहेरपि प्रमाणाधीनत्वात् स्मृतौ आत्मा यस्येत्यपि न, परन्तु स्मृतिपदस्य स्मृतिविषये लक्षणाभिप्रायेण स्मृतिः विषयो यस्य इति समानाधिकरणे विग्रहे बहुव्रीहिसमासः । वस्तुतः लक्षणाया अपि जघन्य-

उक्त ईश्वरसङ्केत एव शक्तिरिति नैयायिकमतं न युक्तम्। 'अयमेतच्छक्यः' 'अत्रास्य शक्तिः' इत्यस्य संकेतस्य शक्तितः पार्थक्येन प्रसिद्धत्वात्। अत एव न्यायवाचस्पत्ये उक्तम्—सर्गादि[1]भुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः संकेतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्संकेतः' इति। तस्य च तादात्म्यस्य निरूपकत्वेन विवक्षितोऽर्थः शक्यः, आश्रयत्वेन विवक्षितः शब्दः शक्त इत्युच्यते। शब्दार्थयोस्तादात्म्यादेव 'श्लोकमश्रृणोदथार्थं श्रृणोति अर्थं वदति' इत्यादिव्यवहारः।

---

वृत्तित्वात् विषयविषयिणोरभेदोपचारेण समासः। **उक्तः ईश्वरसङ्केत** इति—पदविशेष्यकोऽर्थविशेष्यको वेत्यर्थः। न युक्तम्—सङ्केतस्य शक्तिबोधकत्वेन शक्तिस्वरूपत्वाभावादिति भावः। पार्थक्येन—भेदेनेत्यर्थः, भेद एव षष्ठीविधानात्। **अत एव**—सङ्केतस्य शक्तित्वाभावात्, शक्तिग्राहकत्वाच्च। **तद्व्यवहाराच्चेति**—महर्षिदेवताव्यवहाराच्चेत्यर्थः। **तत्सङ्केत** इति—ईश्वरसङ्केत इत्यर्थः।

योगवाचस्पत्येऽप्युक्तम्—"सर्वे च शब्दाः सर्वार्थाभिधानसमर्था इति सर्वैरर्थैः सर्वेषां शब्दानां सम्बन्धः, ईश्वरसङ्केतस्तु प्रकाशकः। वैयाकरणैरपि—

> नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः।
> सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः॥
>
> वाक्य प. (१।२३)

इति कारिकायां शब्दार्थसम्बन्धस्य नित्यत्वं प्रतिपादितम्।

तादात्म्यस्य सम्बन्धत्वं समर्थ्य, तस्य निरूपकत्वेनाश्रयत्वेन च विवक्षितस्य सञ्ज्ञाविशेषं प्रदर्शयति—**तस्येत्यादि**—शब्दार्थयोस्तादात्म्ये लौकिकं प्रमाणं प्रदर्शयति—**श्लोकमित्यादि**—शब्दस्यैव श्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्वेनार्थे तदभावात् 'अर्थमशृणोत्', अर्थं वदति, इत्याकारको व्यवहारः शब्दार्थयोरध्यासमन्तरा नैवोपपद्येतेत्यर्थः। अध्यासादेव च

---

१ क्वचित् 'स्वर्गादिभुवाम्' इत्यपि न्यायवाचस्पत्ये पाठो दृश्यते।

"ओमित्येकाक्षरं ब्रह्म" "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः," "वृद्धिरादैच्" इति-शक्तिग्राहकश्रुतिस्मृतिविषये सामानाधिकरण्येन प्रयोगश्च । तादात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति भेदाभेदसमनियतम् । अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः । यत्तु तार्किकाः, शब्दार्थयोस्तादात्म्यस्वीकारे मधुशब्दोच्चारणे मुखे माधुर्य-रसास्वादापत्तिः, वह्निशब्दोच्चारणे मुखे दाहापत्तिरित्याहुः । तन्न । भेदाभेदस्योपपादितत्वात् । वस्तुतो बौद्ध एवार्थः शक्यः, पदमपि

---

शब्दस्य श्रावणप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वमर्थे प्रतीयते । श्रुत्यादितोऽपि तमेवार्थं प्रमाणयति-"**ओमिति**"।

ननु यदि शब्दार्थयोस्तादात्म्यं स्वीक्रियते तदा अस्यार्थस्यायं वाचक इत्यादिशब्दार्थयोर्भेदबोधकव्यवहाराणामनुपपत्तिः, तथा मधुशब्दोच्चारणे मुखे माधुर्यापत्तिः, अग्निशब्दोच्चारणे दाहापत्तिश्च स्यादिति तेषां दोषाणा-मुद्धाराय तादात्म्यस्य स्वरूपमाह-**तादात्म्यञ्चेति** । शब्दार्थयोर्विषये लक्षणे समन्वेतव्ये 'तत्'पदेन शब्दार्थयोरन्यतरो ग्राह्यः । एवञ्च वस्तुतो भेदात् अभेदस्य चारोपान्नोक्त दोषलेशः । वस्तुतस्तु दाहं प्रति अग्नि-रूपार्थः संयोगेन कारणम्, माधुर्यं प्रति संयोगेन मधुरपदार्थः कारणम् । तथा चात्र मुखादौ अर्थस्य तेन सम्बन्धेनाभावान्न पूर्वोक्तशङ्काया अवसरः ।

ननु भेदाभेदयोरत्यन्तं विरोधात् कथं भेदाभेदसमनियतत्वं तादात्म्य-स्येत्यत आह-**अभेदस्येति** । **अध्यस्तत्वाच्चेति**-आरोपितत्वादित्यर्थः । गङ्गायास्तटे भाक्तत्वेऽपि तत्र तटादौ यथा स्नानादिकार्यं न भवति तथात्रापि अभेदस्य आरोपितत्वेऽपि वास्तविकं कार्यं नैव भविष्यति । **यत्त्विति**-अत्र यद् वक्तव्यं तदनुपदमेवोक्तम् ।

शब्दार्थयोस्तादात्म्ये तार्किकाधिक्षिप्तान् दोषान् अभेदस्यारोपितत्वेन समाधाय वस्तुतोऽभेदेऽपि नास्ति दोषलेश इति प्रदर्शयन् वैयाकरणा-भिमतं पदार्थमाह-**वस्तुत इति** । अयं भावः-वैयाकरणानां नये द्विविधौ शब्दार्थौ, बौद्धौ, बाह्यौ च तत्र बौद्धार्थेन सह बौद्धशब्दस्य तादात्म्यम् ।

स्फोटात्मकं प्रसिद्धम्, तयोस्तादात्म्यम् । तत्र बौद्धे वह्नयादावर्थे दाहादिशक्तिमत्त्वाभावात् । अत एव "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति विकल्पसूत्रं सङ्गच्छते । शब्दज्ञानमात्रेणानुपाती बुद्धावनुपतनशीलो वस्तुशून्यः बाह्यार्थरहितः विशेषेण कल्प्यत इति विकल्पः, बुद्धिपरिकल्पित इति तदर्थः । अत एव-

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।
कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः ॥

इत्यत्र वन्ध्यासुतादीनां बाह्यार्थशून्यत्वेऽपि बुद्धिपरिकल्पितं वन्ध्यासुतशब्दवाच्यार्थमादायार्थवत्त्वात्प्रातिपदिकत्वम् ।

अन्यथाऽर्थवत्त्वाभावेन प्रातिपदिकत्वाभावात्स्वाद्युत्पत्तिर्न स्यात् । यत्तु शशशृङ्गमित्यत्र शृङ्गे शशीयत्वभ्रम इति तार्किकैरुक्तम् ।

---

बौद्ध इत्यस्य बुद्धिरूपाधिकरणदेशस्थ इत्यर्थो न बुद्धिविषयः, बाह्यस्यापि बुद्धिविषयत्वात् । **स्फोटात्मकमिति**-अस्य शक्तमिति शेषः । तयोः-बौद्धशब्दार्थयोः । **दाहादिशक्तिमत्त्वाभावादिति**- । दाहरूपकार्यादर्शनात् । दाहजनिकायाः शक्तेरपि अभावः कल्प्यते । **अत एवेति**-पदार्थस्य बौद्धत्वस्वीकारादेव । **शब्दज्ञानानुपातीति**-शब्दजन्यज्ञानानन्तरं वस्तुतत्त्वमनपेक्ष्य बुद्धावनुपतनशीलोऽध्यवसायो विकल्प इत्यर्थः । आगमप्रमाणान्तर्गतत्वनिरासायाह-वस्तुशून्य इति । "अस्य सूत्रस्य विशदविवेचनाय भाष्यमुद्ध्रियते-" एतदुक्तं भवति-क्वचिदभेदे भेदमारोपयति, क्वचित्पुनर्भिन्नानामभेदम् । ततो भेदस्याभेदस्य च वस्तुतोऽभावात् तदाभासो विकल्पो न प्रमाणम् नापि विपर्ययः व्यवहाराविसंवादादिति वाचस्पतिमिश्राः । अभेदे भेदारोपो यथा-"पुरुषस्य चैतन्यम्" इति । भेदेऽभेदारोपः—'अयो दहति' इति । व्यासभाष्यसम्मतं मिश्रमतानुसारिणश्चार्थमाह-**शब्दज्ञानमात्रेणेति** = शब्दजन्यज्ञानमात्रेणेत्यर्थः । पदार्थानां बौद्धत्वं दर्शनान्तरेण समर्थ्य स्वासिद्धान्तेनापि समर्थयते-'एष' इत्यादि । श्लोकार्थः स्पष्टः । अन्यथा-पदार्थानां बौद्धार्थत्वास्वीकारे । **'यत्तु'** इति । अयमाशयः-शशशृङ्गस्याप्रसिद्धत्वात् अप्रसिद्धप्रतियोगि-

तन्न। शशशब्दवाच्यजन्तुदर्शनरूपबाधे सति शशशृङ्गं नास्तीति वाक्ये शशशृङ्गमित्यस्य प्रातिपदिकत्वानापत्तेः।

अर्थपदयोस्तादात्म्यात्तत्तदर्थतादात्म्यापन्नः शब्दो भिन्न इति हेतोरर्थभेदाच्छब्दभेद इति व्यवहारः। समानाकारमात्रेण तु एकोऽयं शब्दो बह्वर्थ इति व्यवहारः।

---

काभावस्य तार्किकैरस्वीकारात् 'शशशृङ्गमि'त्यस्य प्रातिपदिकत्वं न स्यादित्याशङ्क्य, महिष्यादीनां शृङ्गमपि प्रतीतं शशोऽपि प्रतीतः, तत्र शृङ्गे शशीयत्वस्य भ्रमात् बाह्यार्थाभावेऽपि भ्रान्तमर्थमादाय प्रातिपदिकसंज्ञायां न किमपि बाधकमिति समाहितम्। अत एव "शशशृङ्गं नास्ति" इत्यत्राहार्यमेव प्रतियोगिज्ञानं कारणमि"त्युक्तं लीलावतीशिरोमणौ। स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानत्वमाहार्यत्वम्। भ्रान्तौ मूलं तु कश्चन प्राक्तनः संस्कारविशेषो, लोकेऽनैपुण्यं वेत्यन्यदेतत्। यत्त्वित्यादिना नैयायिकमतमनूद्य खण्डयति—**तन्नेत्यादि**। शशशब्दवाच्यस्य चतुष्पादजन्तुविशेषस्य दर्शनरूपबाधसत्त्वेन एकदेशस्यानर्थक्येन विशिष्टस्यार्थवत्त्वाभावेन प्रातिपदिकत्वं न स्यादिति समाधातुराशयः।

**अर्थपदयोरिति**—अर्थपदयोस्तादात्म्ये व्यवहारमुपपादयति—**अर्थपदयोरिति**। अर्थपदयोस्तादात्म्यात्—अर्थपदयोस्तादात्म्यादेवेत्यर्थः। तत्तदर्थतादात्म्यापन्नः तेन तेन अर्थेन तादात्म्याध्यस्तः स स शब्द इत्यर्थः। **शब्दभेद** इति।

नन्वेवं वेदे पठितस्य 'अग्नये त्वा जुष्टं निर्वपामि' अत्र अग्निशब्दस्य सूर्यरूपार्थे विनियोगकाले प्रयोगदर्शनात् शब्दभेदापत्त्या तस्य वेदत्वानापत्तिः स्यादिति चेन्न, तादृशामूहशब्दानां वेदान्तर्गतत्वस्वीकारात्। अतएवोक्तं हरिणा—

"मन्त्रास्तु विनियोगेन लभन्ते भेदमूहवत्।
तान्याम्नायान्तराण्येव पठ्यते कश्चिदेव तु "इति।

ननु अर्थभेदस्य शब्दभेदकत्वे 'एकः शब्दो नाना' इत्यभिप्रायकस्य

सा च शक्तिस्साधुष्विवापभ्रंशेष्वपि, शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात्। व्यवहारदर्शनेन च पूर्वजन्मानुभूतशक्तिस्मरणम्। अत एव बालानां तिरश्चां चान्वयबोधः। नहि तेषां तदैव तत्सम्भवः। यत्तु तार्किकाः—असाधुशब्देन साधुस्मरणद्वाराऽर्थबोध इत्याहुः। तन्न। साधुस्मरणं विनाऽपि बोधानुभवात्।

---

'अक्षाः,' 'पादाः,' माषाः, इति सरूपसूत्रस्थभाष्यस्यानुपपत्तिरत आह—**समानाकारेति**[1] आनुपूर्व्या ऐक्येन शब्दैकत्वव्यवहार इति तात्पर्यम्। वस्तुतोऽर्थभेदाच्छब्दभेद इत्ययुक्तम्—कुटीभार्य इत्यत्र समानायामाकृतौ भाषितपुँस्कत्वाभावान्नपुँवत् (महाभाष्य ६।३।३४) इत्याशयकभाष्यासङ्गतेः। सामर्थ्यादिना ऐक्योपपादने बीजाभाव इति चेत्सत्यम्! 'विप्रयेण तु नानालिङ्गकरणात् सिद्धम्' इत्यादिना भाष्यकृतैव शब्दैक्यस्य दर्शितत्वात्। "आन्यभाव्यं तु कालशब्दव्यवायात्" (महाभाष्य. मा. सू. १) इत्यादिना च शब्दभेदस्य दर्शितत्वात्।

एतावता प्रबन्धेन शक्तिस्वरूपं निरूप्य तस्या आश्रयमाह—**साचेत्यादि**—वाच्यवाचकभावापरपर्यायेत्यर्थः। **शिरोमणेः**—मुख्यस्य। ननु व्यवहारदर्शनं शक्तिग्राहकञ्चेत्तदोत्पत्तिकाले व्यवहारबोधकशब्दाभावात् शक्तिग्रहो न स्यात्? नच- तदा शक्तिग्रहे प्रमाणाभाव इति वाच्यम्, प्रवृत्तौ इष्टसाधनताज्ञानस्य कारणत्वेन तदभावे प्रवृत्त्यनापत्तेरित्यत आह—**व्यवहारदर्शनेनेति**—फलबलादत्र संस्कारद्वारा जन्मान्तरीयस्य व्यवहारदर्शनस्य शक्तिस्मारकत्वं कल्प्यते, जीवनादृष्टञ्च संस्कारोद्बोधकत्वेन कल्प्यते इति तात्पर्यम्। **अतएवेति**—प्राक्तनजन्मानुभूतशक्तिस्मरणादेवेत्यर्थः। तिरश्चां—पश्वादीनाम्। तेषां—बालानां तिरश्चां च। प्राकृतानां पश्वादीनां स्वजात्यनुसारेणैव निश्चिता काचन प्रतिभा दृश्यतेऽतस्तेषामप्यनादिवासनयैव शक्तिग्रहः। तदैव-जन्मकाले। तत्सम्भवः-शक्तिज्ञानसम्भवः। तार्किकैः साधुशब्देष्वेव शक्तिः स्वीक्रियते तेनासाधुषु यत्रासाधुशब्दाद्बोधो दृश्यते तत्रापि व्युत्पन्नानामसाधुशब्देन साधुशब्दस्य स्मरणं भवति,

---

१ समानाकारकत्वमात्रेति पाठः साधीयान्।

तद्वाचकसाधुशब्दमजानतां बोधानापत्तेश्च। न च शक्तिभ्रमाद् बोधोऽसाधुशब्देष्विति वाच्यम्। निस्सन्देहप्रत्ययस्य बाधकं विना भ्रमत्वायोगात्। अत एव स्त्रीशूद्रबालादीनामुच्चारिते साध्वावर्थसंशये तदपभ्रंशेनार्थनिर्णयः। अत एव "समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः" इति भाष्यम्,

---

ततो बोधो भवति। अव्युत्पन्नानान्तु शक्त्यभावेऽपि असाधुशब्दे शक्तिरस्तीति भ्रमाद् बोधोभवतीति तार्किकमतमनुवदति–असाधुशब्देनेति। खण्डयति–तन्नेति। **साधुस्मरणमिति**–'घड़ा, गगरी' प्रभृतिशब्दश्रवणसमकालमेव स्मरणबोधकाशिरश्चालनमन्तरापि बोधोऽनुभूयते, अनुभवश्च सर्वप्रमाणज्येष्ठः।

ननु तादृशेऽनुभवे प्रमाणाभावः इत्यत आह — **तद्वाचकेति** — असाधुशब्दबोध्यार्थप्रतिपादकसाधुशब्दमजानतां ज्योतिर्विदां वैदिकानांच बोधो न स्यात् भवति च बोधस्तेषामपीत्यर्थः। बाधकं-विपरीतबुद्धिजनकम्। **भ्रमत्वायोगादिति**–। यत्रोत्तरकाले बाधो भवति तत्रैव भ्रमः स्वीक्रियते, तद्वति तदभावप्रकारकज्ञानस्य भ्रमत्वात्। अत्र तु तथा तथा नास्ति, नहि 'गगरी' शब्दश्रवणानन्तरं 'गगरी' शब्दो वाचकत्वाभाववान् इति कस्यचिदपि बुद्धिरुदेति इत्यतो भ्रमो नात्र वक्तुं शक्यते। शक्तिभ्रमासम्भवस्थलं निर्दिशति—**अतएवेति**—असाधूनामपि शक्तत्वादेवेत्यर्थः। **स्त्रीशूद्रेति**–अयं भावः–अल्पाधीताः स्त्रियो बालकाश्च यदा कदाचित् संस्कृतं व्यवहरन्ति तदा अशक्त्या तेषामस्फुटोच्चारणात् तदुच्चारितशब्देभ्यो विदुषां बोधे संशयोभवतीति तैश्शब्दैरसाधूनां स्मरणं सम्पाद्य अर्थनिर्णयो भवति, अपभ्रंशस्यावाचकत्वे तथा निर्णेतुं न शक्यत इति भावः। केचित्तु—बालादीनामित्यस्य अर्थसंशय इत्यनेन सम्बन्धं कृत्वा साधौ प्रयुक्ते सति 'स्त्रीशूद्रबालादीनामर्थसंशये'इति तात्पर्यं वर्णयन्ति। 'निर्णय'इति प्रतीकं चादाय 'शक्तत्वेनोक्तसंस्कृतशब्दाज्ञानात्तदपभ्रंशेन निर्णय इत्यर्थ इति विवृतवन्तः। तन्न, पूर्वापरविरोधात्, संस्कृतशक्तशब्दज्ञानाभावात् तदर्थे शक्त्याऽपभ्रंशेन निर्णेतुमसामर्थ्यात्।

वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः।

इति हरिकारिका च सङ्गच्छते। अतएवार्यम्लेच्छाधिकरणं सङ्गच्छते। तत्र हि यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते, म्लेच्छास्तु प्रियङ्गौ

---

"अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः" (वाक्य० कां० १ का० १९३) इति हर्युक्तेः विरोधाच्च। अनेनैव पूर्वापरविरोधप्रदर्शनेन 'प्रयुक्ते' इत्यस्य अन्येनेति शेष इत्यपि ग्रन्थः परास्तः। पङ्क्तीनां यथायथं सम्बन्धं विहाय परिवर्त्यसम्बन्धानांविधाने मानाभावः। अत्र व्याख्याने 'ऋलृक्' सूत्रस्थं 'भाष्यममि प्रतिकूलम्। उक्तार्थे भाष्यमपि प्रमाणयति—**अतएवेति** अत्र विनापि चकारं चशब्दं संयोज्यापभ्रंशे शक्ति-स्वीकारादेव चेत्यर्थः इत्यर्थो वाच्यः। भाष्यमिति—अर्थप्रतीतौ साधुशब्दा-इवासाधुशब्दा अपि प्रभवः, परन्तु साधुशब्दप्रयोगे यज्ञादौ पुण्यं भवतीति साधव एव प्रयोक्तव्या इति भाष्याशयः। वाचकत्वाविशेषेऽपीति—वाचकत्व-शक्तेरुभयत्र तुल्यत्वेऽपि। **अतएव**—अपभ्रंशानां वाचकत्वादेव, अधिकरणं हि— विषयसन्देहपूर्वपक्षसिद्धान्तप्रतिपादको वेदवाक्यार्थनिर्णायको-वाक्यविशेषः। आर्यम्लेच्छावधिकृत्य प्रवृत्तमधिकरणमार्यम्लेच्छाधिकरणम्। अनेन हि अधिकरणेन वेदप्रतिपाद्यार्थनिर्णये आर्याणामेवाधिकारेण वैदिकशब्दार्थसंशये समुत्पन्ने यं शब्दं यत्रार्थे ते प्रयुञ्जते तेन शब्देन तदर्थ-एव गृह्यते इति आर्यम्लेच्छाधिकरणस्याशयः।

आर्याः—शिष्टाः। तथा च भाष्यम्—"के पुनः शिष्टाः। वैया-करणाः। कुत एतत्? शास्त्रपूर्विका हि शिष्टिः, वैयाकरणाश्च शास्त्रज्ञाः। यदि तर्हि शास्त्रपूर्विका शिष्टिः, शिष्टिपूर्वकञ्च शास्त्रम्, तदितरेतराश्रयं भवति, इतरेतराश्रयाणि च न प्रकल्पन्ते। एवन्तर्हि निवासतश्चाचारतश्च। सचा-चार आर्यावर्ते एव।

---

१—"अशक्तिजानुकरणार्थः—अशक्त्या कयाचिद् ब्राह्मण्या ऋतक इति प्रयोक्तव्ये लृतक इति प्रयुक्तम्। तस्यानुकरणं ब्राह्मण्यलृतक इत्याह कुमार्य लृतक इत्या-हेति" इतिभाष्येऽपि ब्राह्मण्या उच्चारिते साधावेव प्रयोजनमुक्तम्।

प्रयुञ्जते, तमेव च बुध्यन्ते, तथाऽप्यार्यप्रसिद्धेर्बलवत्त्वाद् वेदे दीर्घशूक-परतैवेति सिद्धान्तितम्। तव तु म्लेच्छबोधस्य शक्तिभ्रममूलकत्वेन भ्रान्ति-विषयरजतज्ञानस्येव म्लेच्छप्रसिद्धेर्वस्त्वसाधकतयाऽऽर्यम्लेच्छप्रसिद्ध्योः कस्या बलवत्त्वमिति विचारासङ्गतिः स्पष्टैव। साधुत्वं च व्याकरणान्वाख्येयत्वं पुण्यजनकतावच्छेदकधर्मवत्त्वं वा। तद्भिन्नत्वमसाधुत्वम्।

---

कः पुनरार्यावर्त्तः? प्रागादर्शात् प्रत्यगाकालकवनात्। दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्। एतस्मिन्नार्यावर्ते निवासिनो ये ब्राह्मणा कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गतास्तत्र भवन्तः शिष्टाः" (महाभाष्य ६।३।१०९) **दीर्घशूके**-दीर्घाः = लम्बमानाः शूकाः = यवस्योपरिवर्तमानाः कण्टका येषां ते। **प्रियङ्गाविति**-प्रियङ्गुः कश्चन धान्यविशेषः "चीना"इति उत्तरप्रदेशस्य कस्मिंश्चिद् भागे व्यवह्रियते। तव तु—अपभ्रंशे शक्तिमनङ्गीकुर्वतो नैयायिकस्य तु इत्यर्थः। **म्लेच्छबोधस्येति**—इदमत्राकूतम्—साधुष्वेव-शक्तिं स्वीकुर्वतां तार्किकाणां राद्धान्ते म्लेच्छसमवेतो बोधो यवशब्दात् प्रियङ्गुविषयकः शक्तिभ्रमजन्य एव स्यात्, एवञ्च यथा शुक्तौ रजतत्वभ्रमवतः पुरुषस्य तद्रजतं पात्राय भूषणाय वा न कल्पते। तज्ज्ञानञ्च यथा वस्तु साधकं न भवति तथैवात्रापि म्लेच्छप्रसिद्धेर्भ्रममूलकत्वात् वस्त्वसाधकत्वेन वस्तुसाधकयोर्द्वयोः समवधान एव एकस्य बलवत्त्वमपरस्य चाबलवत्त्वं भवति। अप्राधान्यएवापरस्य प्राधान्यं भवति नान्यथेति अत्र भ्रमजन्यायाश्च म्लेच्छप्रसिद्धेर्वस्तुत्वाभावेन बलाबलविचार एव काकदन्तदृष्टान्ततां गच्छतीति।

नन्वसाधूनां शक्तत्वे साधुत्वापत्तिः, शक्तस्यैव साधुत्वात्? न च तत्र तिष्ठतु शक्तत्वं, साधुत्वं माऽस्तु को दोष इति वाच्यम्, तथा कल्पने प्रमाणाभावादित्यत आह—**साधुत्वञ्चेति**। **व्याकरणान्वाख्येयत्वमिति**—। शब्दशास्त्रव्युत्पादनमार्गेणानुसन्धेयत्वमित्यर्थः। **पुण्यजनकतावच्छेदकेति**-। वस्तुतो "वा" शब्दश्चार्थे। अन्वाख्येयत्वमित्यस्य व्यङ्ग्यत्वमर्थः, एवञ्च समवायसम्बन्धावच्छिन्नपुण्यविशेषत्वावच्छिन्नजन्यता-

सा च शक्तिस्त्रिधा, रूढिर्योगो योगरूढिश्च। शास्त्रकल्पितावयवार्थ-भानाभावे समुदायार्थनिरूपितशक्ती रूढिः, यथा मणिनूपुरादौ। शास्त्र-कल्पितावयवार्थनिरूपिता शक्तिर्योगः, यथा पाचकादौ।

---

निरूपिततत्तद्वर्णाभिव्यञ्जककण्ठताल्वाद्यभिघातजनककृतिमत्त्वसम्बन्धा-वच्छिन्नशब्दशास्त्रप्रतिपादितापभ्रंशव्यवहनशब्दनिष्ठजनकतावच्छेदकधर्मवत्त्वं साधुत्वमिति फलितम्। उपपत्तिस्तु पुण्यस्य गुणविशेषत्वात् समवायेना-त्मनि वर्तमानता, शब्दोऽपि तादृशकृतिमत्त्वसम्बन्धेनात्मनि वर्तते। उभयोः सामानाधिकरण्यं सूपपादम्। समवायेन पुण्यविशेषं प्रति स्वाभिव्यञ्जककण्टताल्वाद्यभिघातजनककृतिमत्त्वसम्बन्धेन शब्दः कारणम्‌ शब्दश्च व्याकरणबोधितो भवेत् साक्षात् परम्परया वा शिष्टप्रयुक्तश्च भवेत्। तेन शिष्टैः साक्षादुच्चारितानां शब्दशास्त्रव्युत्पाद्यानामनुकरणानां परम्परया वाहुलकादिना बोधितानाञ्च संग्रहः। तदुक्तम्—एकः पूर्वपरयोः (पा० सू० ६-१-८४) इतिसूत्रे भाष्ये "एकः शब्दः सम्यग् ज्ञातः, शास्त्रा-न्वितः सुप्रयुक्तः स्वर्गेलोके च कामधुग् भवति" इति। सम्यग् ज्ञातः—सम्यक्त्वेन—साधुत्वेन ज्ञातः, शास्त्रान्वितः शास्त्रव्युत्पादनमार्गेणानुसंहितः, सुप्रयुक्तः—शिक्षोक्तरीत्या प्रयुक्तः। तस्य च शिष्टप्रयोगकोशव्याकरणानु-मापकम्, इति नागेशभट्टः। साधुत्वञ्च जातिविशेषः। अत्र साधुत्वस्य-जातित्वे कत्वादिना साङ्कर्यस्य शङ्का नैव कर्तव्या, ययोर्जात्योः परस्पर-सामानाधिकरण्येनैव सिद्धिः परस्परमाश्रयभेदकृता च लोकसिद्धा तयोरेव-साङ्कर्यस्य दोषत्वात्, आश्रययोर्भेदभङ्ग एव हि साङ्कर्यदूषकताबीजम्।

तादृशजात्योर्यत्र साङ्कर्यप्रसङ्गस्तत्रोभयवैलक्षण्यं स्वीकार्य्यम्, यथा-नृसिंहे, अश्वतरे वा। ययोस्तु सामानाधिकरण्येन सिद्धिः तयोः साङ्कर्यस्य-व्याप्यव्यापकभावापन्नजात्योः साङ्कर्यस्येवादोषत्वात्। **तद्भिन्नमिति**-पापजनकतावच्छेदकधर्मवत्त्वमित्यर्थः। **साचेति**—वैयाकरणसिद्धान्तासिद्धा चेत्यर्थः। **रूढिरिति**—शास्त्रकृतकल्पितावयवार्थप्रतीतौ यदर्थनिरूपितं प्रकृतिप्रत्ययसमुदायमात्रे बोधकत्वं तत्पदे सा तदर्थनिरूपिता शक्तिः रूढिः। **मणिरिति**—म्रादिगणस्थशब्दार्थकमण्धातोरौणादिकः इन् प्रत्ययः।

शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिर्योगरूढिः, यथा पङ्कजपदे । तत्र पङ्कजनिकर्तृ पद्ममिति बोधात् । पद्मेऽनुपपत्ति-प्रतिसन्धानं सम्बन्धप्रतिसन्धानं च विना न लक्षणावसरः, क्वचित् तात्पर्य्यग्राहकवशात्केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोधः, भूमौ पङ्कजमुत्पन्नं कह्लारकैरवमुखेष्वपि पङ्कजेषु ' इत्यादौ ।

स्पष्टं चेदम् " आर्हाद् " इति सूत्रे भाष्ये । अश्वगन्धादिपदमोषधि-विशेषे रूढम्, अश्वसम्बन्धिगन्धवत्तया वाजिशालाबोधे यौगिकम् । इदं यौगिकरूढमित्युच्यते । एवं मण्डपपदं गृहविशेषे रूढं, मण्डपानकर्त्तरि यौगिकम् । सैषा शक्तिः संयोगादिभिर्नानार्थेषु नियम्यते । तदुक्तं हरिणा—

---

" नू स्तुतौ " नुवनं नूः " सम्पदादिभ्यश्चेति " क्विपि " नूः " इति, " पुरअग्रगमने " इत्यस्मात् " इगुपध " इति कप्रत्यये ' पुर ' इति नुवः पुरो नूपुरः । अत्रेमौ शब्दौ शब्दकर्तृरूपार्थं स्तुतिसम्बन्ध्यग्रगमनकर्तारं वा बोधयतः परन्तु रत्नविशेषं भूषणविशेषं वेति रूढिशक्तत्वमनयोः ।

ननु पङ्कजपदादपि क्वचित् कुमुदादिबोध इष्यत एव तथा च सर्व-साधारणीशक्तिरेवास्तु, यत्र तु पद्मरूपविशेषस्य बोधः स्यात्तत्र लक्षणैव भवतु अलं समुदायशक्त्या ? अत आह—पद्मेऽनुपपत्तीति— । केवल-रूढ्यर्थबोधमाह **भूमौ पङ्कजमिति** अत्र योगार्थस्य बाधः ।

**केवलयोगार्थमुदाहरति—कह्लारेति**—कह्लारम्—सौगन्धिकं - ह्रस्वकमलम्, कैरवम्-कुमुदम् । मुखेषु—प्रभृतिषु । **भाष्यइति**—तत्र हि सर्वतोमानार्थक—" परिमाण " शब्दस्य प्रस्थादौ योगरूढिरित्युक्त्वा " तदस्य परिमाणम् " ( पा. सू. ५-१-५७ ) " संख्यायाः संज्ञा ( पा. सू. ५-१-५८ ) इति सूत्रयोर्विशेष्यविशेषणभावानुपपत्तिमाशङ्क्य " वचनादि-यती विवक्षा भविष्यति " इत्युक्तम् । रूढिपरित्यागेन परिच्छेदकत्वमात्र माश्रयिष्यत इति भावः ।

**नानार्थेष्विति**—ननु अर्थभेदेन शब्दानां भेदो भवतीति कुतो नानार्थकत्वसम्भव इति चेन्न आनुपूर्व्यैक्येन नानार्थकत्वव्यवहारात् ।

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ इति॥

एते संयोगादयो नानार्थेषु शब्देषु शब्दार्थस्यानवच्छेदे सन्देहे तदपाकरण-द्वारा विशेषार्थनिर्णायका इति तदर्थः।

---

**संयोग इति**—सम्यक्योगः प्रसिद्धसम्बन्धः। **विप्रयोगः**—प्रसिद्ध-सम्बन्धध्वंसः, विभागो वा। **साहचर्यम्**—एककालदेशावस्थायित्वम्, एकस्मिन् कार्ये परस्परसापेक्षत्वं वा। नागेशभट्टास्तु–साहचर्यम्–सादृश्यम्, सदृशयोरेव प्रायेण सहचरणदर्शनात्। शब्दयोरपि सदृशार्थयोरेव सह प्रयोग इत्युत्सर्गाच्चेत्याहुः। अत्रार्थे भाष्यमेव शरणम्। **विरोधिता**—वध्य-घातकत्वं सहानवस्थानञ्च। **अर्थः**—प्रयोजनापरपर्यायमनन्यथासाध्य-फलम्। **प्रकरणम्**—वक्तृश्रोतृबुद्धिस्थता।

**लिङ्गम्**-संयोगातिरिक्तसम्बन्धेन परपक्षव्यावृत्तो धर्म इति प्रदीप-काराः। "सशङ्खचक्रः" इत्यत्र शङ्खचक्रव्यावृत्त्यर्थं संयोगातिरिक्तेति। न च तत्रार्थान्तरव्यावृत्तत्वाभावान्नातिव्याप्तिरिति वाच्यम्, कोपस्यापि समुद्रे सत्त्वेन प्रसिद्धयैव कामलिङ्गताया आश्रयणीयत्वेन शङ्खचक्रयोरपि तत्प्रसक्ते-रित्याशयात्। चक्रशङ्खादेरर्थान्तरव्यावृत्तत्वपक्षे तु न कश्चिद् दोष इति प्रभायां स्पष्टम्। नरसिंहठक्कुरास्तु संयोगातिरिक्तसम्बन्धेन परपक्ष-व्यावर्तको धर्मः नत्वसाधारणो धर्मः, 'सशङ्खचक्र' इत्यत्रातिव्याप्तेः। कुपितो मकरध्वज इत्यत्राव्याप्तेश्चेत्याहुः। **अन्यस्य शब्दस्य सन्निधिः**–समासाद्यनधीनसमानार्थकशब्दान्तरसमभिव्याहारः, समासाद्यनधीनत्व-विशेषणात् "सशङ्खचक्रः" इत्यत्रातिव्याप्तिः, समानार्थकेति विशेषणात् 'स्थाणुं भज,' 'भवोच्छेदे' इत्यत्रातिव्याप्तिश्च निरस्ता। **सामर्थ्यम्**—कारणता। औचिती-योग्यता। देशः–ग्रामादिः। कालः–दिवसादिः। व्यक्तिः—लिङ्गम्–स्त्रीपुंस्त्वादि। स्वरः–उदात्तादिः। एते शब्दार्थस्य–

संयोगविप्रयोगयोरुदाहरणे सवत्सा धेनुरवत्सा धेनुरिति । साहचर्यस्य रामलक्ष्मणाविति । साहचर्यं सादृश्यं सदृशयोरेव सहप्रयोग इति नियमात् । रामार्जुनगतिस्तयोरित्यादौ विरोधेन तत् ।

---

शब्दवाच्यार्थस्यानवच्छेदेऽनिश्चये सति कतमोऽर्थोऽत्र विवक्षित इति सन्देहे सति तदपाकरणद्वारेण विशेषस्मृतिहेतवः–विशेषस्य विवक्षितार्थस्य या स्मृतिर्ज्ञानं तद्धेतवः तज्जनका भवन्तीति कारिकार्थः ।

अत्र सङ्ख्या संज्ञा (१ । १ । २३ ।) इति सूत्रस्थभाष्यं मानम्, तत्र हि– "अर्थात् प्रकरणाद् वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसम्प्रत्ययो भवति' अर्थो वाऽस्यैवंसंज्ञको भवति प्रकृतं वा तत्र भवति । इदमेवं-संज्ञकेन कर्तव्यमिति" अनेन भाष्येण स्पष्टं लभ्यते यदर्थसंशयेऽर्थात् प्रकरणाद् वा निर्णयो विधातव्यः । **सवत्सेति**–वत्सो—गोबालकः, "वत्सौ तर्णकवर्षौ द्वौ" इत्यमरात् । अन्यत्र प्रयोगस्त्वौपचारिकः । धेनुशब्दो नवप्रसूतगोमाहिषीस्त्र्यादिवाचकः 'धेनुर्गोत्रकेदोग्ध्रयाम्' इति हैमात् । एवञ्चानेकार्थस्य धेनुशब्दस्य वाचकत्वं वत्ससंयोगविप्रयोगाभ्यां गवि नियम्यत इति । **साहचर्यस्य** नियामकत्वमुदाहरति—रामलक्ष्मणा-विति "रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे राघवे चासिते श्वेते मनोज्ञेऽपि च वाच्यताम्" इति विश्वकोशाद् रामशब्दोऽनेकार्थकः । एवं सारसदुर्योधनपुत्रादौ प्रसिद्धत्वाल्लक्ष्मणशब्दोऽप्यनेकार्थकः । एवञ्चात्र लक्ष्मणसाहचर्याद् रामो न भार्गवादिः । रामसाहचर्याच्च लक्ष्मणो न सारसादिः । किन्तूभयोः शब्दयोर्वाचकत्वं साहचर्येण दाशरथौ निर्दिश्यते ।

**सादृश्यमिति**–सदृशयोरेव सहचरणस्य दृष्टतया लक्षणया सहचरण-शब्दस्य सदृशार्थबोधकत्वेन साहचर्यं सादृश्यमुच्यते । विरोधस्य नियामकत्व-मुदाहरति–**रामार्जुनेति**–अर्जुनविरोधित्वात् रामो भार्गव एव नतु दाशरथ्यादिः । तद्वध्यत्वाच्चार्जुनः कार्तवीर्य एव न पाण्डवादिः । तद्वत् तयोर्योद्धोर्गतिः प्रकारो दशा वा । "गतिः स्त्री मार्गदशयोः" इति मेदिनी । विरोधिनोः कयोश्चित् विरोधित्वेनोपमायां विवक्षितायामिद-

अञ्जलिना जुहोति, अञ्जलिना सूर्यमुपतिष्ठत इत्यत्र जुहोतीत्यादिपदार्थवशाद् अञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वम् । सैन्धवमानयेत्यादौ प्रकरणेन तत् ।

"अक्ताः शर्करा उपदधाति" इत्यादौ "तेजो वै घृतम्" इति घृतस्तुतिरूपाल्लिङ्गादक्ता इत्यस्य घृतसाधनकाञ्जनपरत्वम् । रामो जामदग्न्य इति जामदग्न्यपदसन्निधानाद्रामः परशुरामः । अभिरूपाय कन्या देया इत्यादौ अभिरूपतरायेति सामर्थ्यात् प्रतीयते ।

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥

इत्यत्रौचित्यात् परशुनेत्यस्य छेदनार्थत्वम् । मधुसर्पिषा इत्यस्य सेचनार्थत्वम्, गन्धमाल्याद्यैरित्यस्य पूजनार्थत्वम् । भात्यत्र परमेश्वर इत्यत्र राजधानीरूपदेशात्परमेश्वरपदं राजबोधकम् । चित्रभानुर्भातीत्यादौ रात्रावग्नौ दिवा सूर्ये । व्यक्तिर्लिङ्गम् । मित्रो भाति मित्रं भातीत्यादावादौ सूर्योऽन्त्ये सुहृत् । स्थूलपृषतीमित्यादौ स्वरात्तत्पुरुषबहुव्रीह्यर्थनिर्णयः ।

इति शक्तिनिरूपणम् ॥

---

मुदाहरणमिति । अर्थस्योदाहरणमाह—**अञ्जलिनेति**—होमकारणतारूपसामर्थ्यवशात्, सूर्योपस्थानकारणतारूपसामर्थ्यवशाच्च होमोपस्थानजनकाकारविशेषो लक्ष्यत इति तात्पर्यम् । **अर्थस्योदाहरणम्**—"स्थाणुं वन्दे भवच्छिदे" इत्यत्र भवच्छेदस्वरूपप्रयोजनवशात् स्थाणुः शिवः । **सैन्धवमानयेति**—भोजनकाले लवणबोधो, यात्राकाले अश्वबोधः । तत—तात्पर्यनियमनम् । **अक्ता** इति—अञ्जनविशिष्टा इत्यर्थः । **शर्करा** इति—मृत्तिकामिश्राः क्षुद्रपाषाणप्रायाः शर्कराः 'कङ्कर' इति लोके प्रसिद्धाः ।

यद्यपि 'अक्ताः' इत्यत्र न विशेषार्थो नापि "तेजो वै घृतम्" इति विधिः तथापि 'यः स्तूयते स विधीयते' इति न्यायेन विधायकत्वमप्यस्य कल्प्यम् । शर्करोपधानञ्चाग्न्याधानार्थम् ।

ननु लक्षणा कः पदार्थ इति चेत्,

अत्र तार्किकाः—स्वशक्यसम्बन्धो लक्षणा। सा च द्विधा, गौणी, शुद्धा च।

स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी। तदतिरिक्तसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका शुद्धा। प्रकारान्तरेणापि सा द्विविधा। अजहत्स्वार्था जहत्स्वार्था च।

---

मङ्गला जननी यस्य जनकश्चन्द्रशेखरः।
ज्योत्स्नायां तत्प्रसादस्य निष्पन्ना शक्तिवर्णना ॥ १ ॥

## —अथ लक्षणानिरूपणम्—

इत्थमभिधात्मिकां वृत्तिं निरूप्य सम्प्रति लक्षणां निरूपयितुमुपक्रमते—**नन्वित्यादिना**। प्रत्याख्यानायादौ तार्किकमतमनुवदति—अत्र तार्किका इति। स्वशक्यसम्बन्ध इति। शक्यसम्बन्धत्वं लक्षणाया लक्षणम्। शक्यस्य—शक्त्योपस्थापितस्यार्थस्य, सम्बन्धः—यः कश्चित्—सामीप्यसादृश्यादिर्यथायोग्यं सम्बन्धः स एव लक्षणा इत्यर्थः। स्वपदेन शक्तं पदं ग्राह्यम्। यादृशानुपूर्व्यवच्छिन्नं नाम, यद्धर्मविशिष्टयन्निरूपितशक्तिशून्यत्वे सति यद्धर्मविशिष्टयन्निरूपितसम्बन्धवन्निरूपितशक्तिनिरूपकं तद्धर्मप्रकारकतद्विशेष्यकबोधे तादृशानुपूर्व्यवच्छिन्नं नाम लक्षकमिति लक्षणार्थः।

शक्यपरम्परासम्बन्धो लक्षणा इति निर्गलितोऽर्थः, सम्बन्धरूपाया लक्षणायाः नानात्वात् तां विभजते—**द्विधेति**—।

**गौणीति**—सादृश्यसम्बन्धेन यः शक्यसम्बन्धस्तत्प्रतिपादिका गौणीति भावः। अत्र मीमांसका विप्रतिपद्यन्ते—"गौणी न लक्षणाभेदरूपा, वृत्तिनियामकसम्बन्धे सत्येव लक्षणास्वीकारात्। न हि 'संयोगेन दण्डी चैत्र इतिवत् सादृश्यसम्बन्धेन सिंहवान् चैत्र इति विशिष्टबुद्धिः कदाप्युदेति' तन्न, तथा स्वीकारे मानाभावात् "उपकृतं बहुतत्र" त्यादौ विपरीतलक्षणास्थले विशिष्टबुद्धिनियामकत्वाभावेऽपि स्वनिरूपितविरोधाधिकरणत्वसम्बन्धेऽप्यस्याः सर्वसम्मतत्वादिति ध्वनयन्नाह—**स्वनिरूपितेति**—स्वम्—शक्यम्, । **तदतिरिक्तेति**—सादृश्यातिरिक्तेत्यर्थः। सा—गौणी, शुद्धा चेति। **अजहत्स्वार्थेति** जहति—परित्यजन्ति स्वानि

स्वार्थसंवलितपरार्थाभिधायिकाऽजहत्स्वार्था । तेन छत्रिणो यान्ति कुन्तान् प्रवेशय, यष्टीः प्रवेशय, काकेभ्यो दधि रक्ष्यतामित्यादौ छत्रिसहितसेना–कुन्तास्त्रसहितपुरुष–यष्टिसहितपुरुष–काकसहितसर्वदध्युपघातकबोधः ।

स्वार्थपरित्यागेनेतरार्थाभिधायिकाऽन्त्या । तत्परित्यागश्च शक्यार्थस्य लक्ष्यार्थान्वयिनाऽनन्वयित्वम् । तेन गां वाहीकं पाठयेत्यादौ गोसदृश-लक्षणायामपि न गोस्तदन्वयिपाठनक्रियान्वयित्वम् । सा च लक्षणा तात्स्थ्यादिनिमित्तिका । तदाह—

> तात्स्थ्यात्तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च ।
> तत्साहचर्यात्तादर्थ्याज् ज्ञेया वै लक्षणा बुधैः ॥ इति ॥

तात्स्थ्यान्मञ्चा हसन्ति ग्रामः पलायितः । ताद्धर्म्यात्सिंहो माणवकः । गौर्वाहीकः । तत्सामीप्याद्गङ्गायां घोषः । तत्साहचर्याद्यष्टीः प्रवेशय ।

---

( पदानि ) यम् ( अर्थम् ) स जहत्स्वः जहत्स्वोऽर्थो यस्यां लक्षणायां सा जहत्स्वार्था, जहत्स्वार्था नभवतीत्यजहत्स्वार्थाः ।

यत्र च पदानि स्वार्थं जहति सा जहत्स्वार्था । **तत्राजहत्स्वार्था-**माह–**स्वार्थेति** । स्वार्थः–शक्यार्थः । यत्र शक्यार्थलक्ष्यार्थयोरुभयोः क्रियायामन्वयो भवति सा अजहल्लक्षणा । यथा छत्रिणो यान्तीति । छत्र्यच्छत्रिषु गच्छत्सु छात्रिणां बाहुल्येन छत्रिणो यान्तीत्यच्छत्रिषु यानकर्तृत्वानुपपत्त्या 'छत्रिपदस्य' छत्र्यच्छत्र्युभयसाधारणे एकसार्थवाहित्वविशिष्टे अजहत्स्वार्थलक्षणा । "यानानुकूलकृतिमन्त एकसार्थवाहा" इत्यन्वयबोधः । अत्रैकसार्थवाहित्वेन रूपेणाच्छत्रिणामिव छत्रिणामपि गमनेऽन्वयः । यत्र शक्यार्थस्य विशेष्यतया क्रियाद्यन्वयस्तत्राजहत्स्वार्था यथा "छत्रिणो यान्ति" इत्यादौ, अत्र हि न हि शक्यार्थो लक्ष्यार्थे विशेषणीभूयान्वेति । "यष्टीः प्रवेशय" इत्यादौ तु जहत्स्वार्थैव, यष्टेः पुरुषविशेषणतयाऽन्वयादिति तार्किकोक्तं खण्डयन्नाह – **कुन्तास्त्रेति**–कुन्तिनि पुरुषे संयोगेन कुन्तोविशेषणम्, तथा च कुन्तिनामिव कुन्तानामपि प्रवेशक्रियायामन्वय इति तत्राप्यजहत्स्वार्थैवेति भावः ।

तादर्थ्यादिन्द्रार्था स्थूणा इन्द्रः। अन्वयाद्यनुपपत्तिप्रतिसन्धानञ्च लक्षणाबीजम्।

---

"काकेभ्यो दधि रक्ष्यताम्" इति वाक्यघटककाकपदस्य दधिनाशकत्वावच्छिन्नेऽजहत्स्वार्थलक्षणा काकवदनिष्टकारकत्वसम्बन्धात्मिका भवति। तत्र दध्युपघातकेभ्यः सर्वेभ्यः दधिनिष्ठाया नाशप्रतियोगिताया अभावस्य वक्तुरिच्छाविषयत्वात् तादृशतात्पर्यस्य काकपदशक्यार्थे काकेऽनुपपत्त्या तात्पर्यानुपपत्त्यात्मकबीजा लक्षणा उद्भाव्यते इत्यर्थः। काकेभ्य इति पञ्चम्या जन्यत्वमर्थः, व्यापारो नाशानुत्पत्तिश्च धात्वर्थः एकपदार्थयोरपि व्युत्पत्तिवैचित्र्येण विशेष्यविशेषणभावेनान्वयः, तथा च "दध्युपघातकजन्यनाशोत्पत्तिप्रतियोगित्वाभावत्कर्तृव्यापारप्रयोज्याभावाधिकरणं दधीति शाब्दबोधः। अत्र काकपदस्य दध्युपघातके लक्षणया लक्ष्यतावच्छेदकदध्युपघातकत्वेन रूपेण काकस्यापि क्रियायामन्वयादजहत्स्वार्थैवेति भावः। इयञ्च गौणी, लक्ष्यार्थस्य विडालादेः सादृश्यसम्बन्धेन शक्यार्थसम्बद्धत्वात्।

जहत्स्वार्थामाह—**स्वार्थपरित्यागेनेति**। स्वार्थः—शक्यार्थः। ननु येषां शक्यतावच्छेदकारोप एव लक्षणा तेषां कथं स्वार्थपरित्यागः, गोत्वावच्छिन्नस्यैव क्रियायामन्वयादिति चेन्न, आरोपितगोत्वस्यान्वयित्वेऽपि वास्तविकस्यानन्वयेनादोषात्। **अन्वयाद्यनु**पपत्तीति। अयमाशयः—"गङ्गायां घोषः" इत्यादौ गङ्गापदादुपस्थिते भगीरथीत्वावच्छिन्ने जलप्रवाहरूपे शक्यार्थे घोषपदादुपस्थितस्याभीरपल्लीरूपस्य शक्यार्थस्यान्वयोऽनुपपन्नो भवति, न हि प्रवाहे आभीरपल्लीसम्बन्धः संयोगादिराधाराधेयभावादिर्वा सम्भवति, प्रवहणापत्तेः, अतो यदान्वयानुपपत्तिरूपं बीजं प्रवाहार्थे गङ्गापदस्य तात्पर्यानुपपत्तिरूपं बीजं वा प्रतिसन्धीयते, तदा पुनः स्मृतगङ्गापदेन लक्षणाज्ञानजन्येन तीरत्वप्रकारकस्मरणेन तीरत्वावच्छिन्नविषयकबोधः 'तीरवृत्ति घोष' इति बोधो जायत इत्यर्थः। **लक्षणाबी**जमिति लक्षणायाः—शक्यसम्बन्धस्य बीजं—ज्ञापक-

वस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसन्धानमेव तद्बीजम् । अन्यथा गङ्गायां घोष इत्यादौ घोषादिपदे एव मकरादिलक्षणापत्तिस्तावताऽप्यन्वयानुपपत्तिपरिहारात् । गङ्गायां पापी गच्छतीत्यादौ गङ्गापदस्य नरके लक्षणापत्तेश्च, अस्माकं तु भूतपूर्वपापावच्छिन्नलक्षकत्वे तात्पर्यान्न दोषः । "नक्षत्रं दृष्ट्वा वाचं विसृजेद्" इत्यत्रान्वयसम्भवेऽपि तात्पर्यानुपपत्त्यैव लक्षणास्वीकारात् । एकानुगमकस्वीकारेण निर्वाहेऽनेकानुगमकस्वीकारे गौरवाच्च ।

---

मित्यर्थः । यथा 'गङ्गायां घोष' इत्यादौ प्रवाहरूपशक्यार्थोपस्थितौ तत्रान्वयायोग्यत्वादिना तात्पर्यविषयत्वाभावे ज्ञाते गङ्गापदादेः प्रवाहादिसम्बन्धित्वेनोपस्थिततीरादिना स्वशक्यसम्बन्धरूपः सम्बन्धो गृह्यते 'तीरंगङ्गापदशक्यसम्बन्धि, इति ।

ततस्तदुपस्थितावन्वयबोध्यत्वादिना तत्र तात्पर्यविषयत्वे निश्चिते तद्विषयकः शाब्दबोधो जायत इति पर्वतीयपादाः ।

अन्वयानुपपत्तेर्लक्षणाबीजत्वं खण्डयन्नाह—वस्तुतस्तु तात्पर्यानुपपत्तीति— । ननु सर्वत्र तात्पर्यानुपपत्तेर्लक्षणाबीजत्वे मानाभावः, तात्पर्यानुपपत्तिज्ञानस्य तदर्थप्रतीतीच्छयोच्चरितत्वघटिततया गौरवात् , किन्तु यत्रान्वयानुपपत्तिप्रतिसन्धानाभावस्तत्रैवानायत्या तात्पर्यानुपपत्तिप्रतिसन्धानस्य लक्षणाग्राहकत्वम् । न च परस्परव्यभिचार इति वाच्यम्, अव्यवहितोत्तरत्वनिवेशेनैव तद्वारणात् , एकत्र एकस्यैव कारणत्वेन व्यवस्थानात् । एवञ्च "गङ्गायां घोष" इत्यत्र तीरत्वावच्छिन्नलक्षणाग्रहं प्रति गङ्गापदशक्ये प्रवाहे आभीरघोषत्वमनुपपन्नमित्यन्वयानुपपत्तिज्ञानस्यैव हेतुत्वे न किमपि बाधकमित्यत आह–अन्यथेति । इदमत्राकूतम्—अनुभवानुसारिणी व्यवस्थैव सर्वत्राद्रियते, अनुभवश्च—यदा गङ्गापदं तीरप्रतीतीच्छयोच्चारितं तदा तीरे लाक्षणिकम्, घोषपदन्तु तदानीम् आभीरपल्ल्यां शक्तं तथा च "गङ्गायां घोष" इत्यत्र "तीरवृत्त्याभीरपल्ली" ति बोधो जायते ।

## ज्योत्स्ना

अथ यदा "घोषपदं" मत्स्यप्रतीतीच्छयोच्चारितं तदा मत्स्ये लाक्षणिकम्। गङ्गापदन्तु तदानीं जलप्रवाहे शक्तम्, तथा च 'जलप्रवाहवृत्तिमत्स्य' इति बोधो जायते, एवञ्चैतादृशानुभवादयं नियमो निर्गलितः—"यत्र वाक्ये यत्पदं येनोच्चारयित्रा यदर्थप्रतीतीच्छयोच्चारितं तत्र वाक्ये तत्पदं तदर्थे लाक्षणिकं नान्यत्र वाक्ये" इति, स चानुभवस्तात्पर्यानुपपत्तेर्लक्षणाबीजत्वे सुरक्षितो भवति। अन्वयानुपपत्तेर्लक्षणाबीजत्वे तु भज्यते, तथाहि—पूर्वं तावत् वक्त्रा 'गङ्गायां घोष' इति वाक्यं तीरवृत्त्याभीरपल्लीबोधतात्पर्येण प्रयुक्तम्, तत्र श्रोतुर्द्वयोर्जलप्रवाहाऽऽभीरपल्ल्योरर्थयोरन्वयाऽनुपपत्त्या गङ्गायास्तीरे लक्षणोत्तरं शाब्दबोधे तीरवृत्त्याभीरपल्लीति जनिते सति पुनस्तेनैव वक्त्रा 'गङ्गायां घोष' इति वाक्यान्तरं 'प्रवाहवृत्तिमत्स्य' इतिबोधतात्पर्येण प्रयुक्तम्। तस्यैव श्रोतुस्तत्र पुनः प्राक्तनसंस्कारबलाद् अन्वयाऽनुपपत्तिस्मरणेनैव गङ्गायास्तीरे लक्षणया "तीरवृत्त्याभीरपल्लीत्येवबोधो जायते" यदि चात्रतात्पर्यानुपपत्तिर्लक्षणाबीजं न स्यात् तदा येन वक्त्रा "गङ्गायां घोष" इति वाक्ये यत् घोषपदं मत्स्यतात्पर्येण प्रयुक्तं तदानीं तद्वाक्ये घोषपदं मत्स्ये लाक्षणिकमिति नियमो व्यभिचरति, पुनर्वक्त्रभिप्रेतबोधोऽपि नोपपन्न इति। यदि तु तात्पर्यानुपपत्तिर्लक्षणाबीजं स्यात् तदा घोषपदे विना लक्षणां मत्स्यार्थात्मकतात्पर्यार्थभानासंभवात्। तात्पर्यानुपपत्त्या मत्स्ये लक्षणयैव मत्स्यार्थलाभेन "प्रवाहे मत्स्यः" इति बोध उपपद्यते। एवं वैपरीत्येनाप्यूह्यम्—तथाहि—पूर्वं तावत् वक्त्रा "गङ्गायां घोष" इति वाक्यं 'प्रवाहे मत्स्य' इत्यर्थप्रतीतीच्छयोच्चारितं, तच्छ्रुत्वा प्रवाहे आभीरपल्ल्यऽन्वयानुपपत्त्या घोषपदस्य मत्स्ये लक्षणां कृत्वा 'प्रवाहे मत्स्य' इति बोधः श्रोतुर्जनितः। ततस्तेनैव वक्त्रा पुनः 'गङ्गायां घोष' इति वाक्यान्तरं तीरतात्पर्येण प्रयुक्तं तत्र पुनस्तेनैव श्रोत्रा प्राक्तनसंस्कारबलात् पूर्ववदेवाऽन्वयाऽनुपपत्त्या घोषपदस्य मत्स्यार्थे लक्षणां कृत्वा 'प्रवाहे मत्स्य' इत्येव शाब्दबोध उद्भावितः। तत्रापि 'यद् यदा येन वक्त्रा तीरार्थप्रतीतीच्छयोच्चारितं'

विशिष्टार्थबोधकशब्दस्य पदार्थैकदेशे लक्षणायां जहदजहल्लक्षणेति व्यवहरन्ति वृद्धाः। वाक्यार्थे किञ्चिदंशत्यागः किञ्चिदंशपरिग्रहश्च। अत्र ग्रामैकदेशे पटैकदेशे च दग्धे ग्रामो दग्धः पटो दग्धः इति व्यवहारः। 'तत्त्वमसि' इत्यत्र सर्वज्ञत्वाल्पज्ञत्वयोस्त्यागः शुद्धचैतन्ययोरभेदान्वयः।

---

तद् गङ्गापदं तदानीं तीरार्थे लाक्षणिकमिति नियमभङ्गो जातः।

तात्पर्यानुपपत्तेर्लक्षणाबीजत्वे तु गङ्गापदस्य तीरे तात्पर्यं लक्षणां विना नोपपद्यते इति तीरतात्पर्यानुपपत्त्या गङ्गापदस्य तीरे लक्षणां विधाय स एव श्रोता तत्र "तीरवृत्त्याभीरपल्ली इति शाब्दबोधं विन्दते। तात्पर्यानुपपत्तित्वञ्च पदविशेष्यक—स्वशक्यार्थबोधेच्छाप्रयोज्योच्चारितत्वाभावनिर्णयत्वम्। तात्पर्यानुपपत्तिसन्धानं लक्षणाबीजं नाम—लक्षणाज्ञानंप्रति हेतु ज्ञानविधया प्रयोजकम्, तद्यथा गङ्गादिपदं, तीरादिलक्षकम्, स्वशक्यार्थविषयकबोधेच्छाप्रयोज्योच्चारणविषयत्वाभाववत्त्वे सति बोधजनकत्वादिति। वस्तुतस्तु वेदस्यापौरुषेयत्वे "यजमानः प्रस्तरः" "आयुर्वैघृतम्" इत्यादौ तात्पर्यानुपपत्तेरप्यसम्भवेन तदनुरोधेनान्वयतात्पर्यान्यतरानुपपत्तेरेव लक्षणाबीजत्वमित्यस्मद्गुरुचरणाः सभापतिशर्मोपाध्यायाः। एतदेव मनसि निधाय "वस्तुतस्त्वित्यादिना गौरवाच्चेत्यन्तेनोक्तं महाविदुषा नागेशभट्टेन। केचन नैयायिका वेदान्तिनश्च तृतीयां जहदजहल्लक्षणामङ्गीकुर्वन्ति।

—जहति च अजहति च स्वानि यं सः, तादृशोऽर्थो यस्यां सेति व्युत्पत्त्या शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधजनिकेति। यथा 'सोऽयं देवदत्त' इत्यत्र परोक्षत्वरूपतत्तांशस्य सन्निकृष्टत्वरूपेदन्त्वांशेन विरोधात् देवदत्तेऽन्वयाऽनुपपत्तेः, तत्तांशस्य इदन्तांशस्य च परित्यागेन जहदजहल्लक्षणया शुद्धदेवदत्तस्य बोधः। तदेवाह—विशिष्टार्थस्येत्यादिना। वृद्धाः—वेदान्तिनः। तामुदाहरति—अत्र ग्रामैकदेश इत्यादिना। 'वृद्धा' इत्यनेनारुचिः सूचिता—'आढ्यमिदं नगरम्' इति भाष्योक्तरीत्या 'ग्रामोदग्ध' इत्यादौ लक्षणाया अभाव एव। किञ्च "तत्त्वमसि"

स्वबोध्यसम्बन्धो लक्षणेति केचित् । गभीरायां नद्यां घोष इत्याद्यनुरोधात् । तथाहि—न तावद् गभीरपदं तीरलक्षकं, नद्यामित्यनन्वयापत्तेः। नहि तीरं नदी । अत एव न नदीपदेऽपि। गभीरपदार्थानन्वयात् । न हि तीरं गभीरम् । न च प्रत्येकं पदद्वये सा, विशिष्टनदीबोधानापत्तेः। तस्मात्समुदायबोध्यगभीरत्वविशिष्टनदीपदार्थः, तत्सम्बन्धो लक्षणेति । द्विरेफपदस्य स्वलक्ष्यभ्रमरशब्दवाच्यार्थे लक्षणायां लक्षितलक्षणेति व्यवहारः ।

---

इत्यादौ जहदजहल्लक्षणायाः सत्त्वेऽपि जहल्लक्षणयैव निर्वाहः, स्वार्थैकदेशत्यागेऽपि स्वार्थत्यागस्य सत्त्वात् । अजहल्लक्षणया तु न निर्वाहः, नञः प्रतियोगितावच्छेदकावच्छिन्नाभावबोधकत्वादिति । ननु यदि 'शक्यसम्बन्धो लक्षणा' स्वीक्रियते तर्हि नैयायिकमते वाक्ये शक्तेरभावात् शक्यसम्बन्धरूपा लक्षणापि नैव स्यादिति मीमांसकमतमाह—स्वबोध्येति। एवञ्च वाक्यार्थस्यापि वाक्यबोध्यत्वात् तत्र लक्षणा सिध्यति ।

स्वं—वाक्यादिः । गभीरायामिति—शक्यसम्बन्धरूपलक्षणास्वीकारेऽत्र लक्षणा न स्यादिति तात्पर्यम् । तथाहीति—अयमाशयः "गभीरायां नद्याम्" इत्यत्र सप्तम्यन्तार्थयोः समानविभक्तिकत्वात् अभेदान्वय इष्टः, अत्र यदि गभीरपदेन तीरं लक्ष्यते तदा "तीराभिन्ना नदी" इति बोध आपद्येत सचासङ्गतः, तीरनद्योरभेदस्य बाधात्, तदाह—नहीति। अत एव—अनन्वयादेव। नदीपद इति—एवं सति 'गभीराभिन्नं तीरम्' इति बोधः स्यात्, सच न सम्यक् तीरे गाम्भीर्यार्थस्य बाधात्। ननु पदद्वये प्रत्येकावच्छेदेन लक्षणास्तु 'गभीर' पदस्य गभीरतीरे 'नदी' पदस्य नदीतीरे, एवञ्च "गभीराभिन्ननदीतीरे घोषः" इति बोधः स्यादित्याशङ्क्य समाधत्ते नचेत्यादिना । विशिष्टनदीति नामार्थयोरभेदान्वयेन "गभीरतीराभिन्नं यन्नदीतीरं तत्र घोषः" इत्येव बोधः स्यान्नतु गभीराभिन्ना या नदी तत्तीरे घोषः इति। तस्मात्—एतादृशे स्थले तत्तत्पदे लक्षणाया असम्भवात्। समुदायेति—समुदायेन—

स्वबोध्यपदवाच्यत्वं सम्बन्धः ।

प्रकारान्तरेण सा पुनर्लक्षणा द्विविधा । तथाहि—

प्रयोजनवती रूढा लक्षणा द्विविधा मता । इति ।

असति प्रयोजने शक्यसम्बन्धो निरूढलक्षणा । त्वचा ज्ञातमित्यादौ यथा त्वचस्त्वगिन्द्रिये । इयं तु शक्यपरपर्यायैवेति बोध्यम् । गङ्गायां घोष इत्यत्र तीरे गङ्गागतशैत्यपावनत्वादिप्रतीतिः प्रयोजनम् । गौर्वाहीक इत्यत्र सादृश्यं लक्ष्यतावच्छेदकं गवाभेदप्रत्ययः प्रयोजनम् । कुन्ताः प्रविशन्तीति भीतिपलायमानवाक्ये कुन्तविशिष्टपुरुषे कुन्तगततैक्ष्ण्यप्रतीतिः प्रयोजनमित्याहुः ।

---

"गभीरायां नद्यामिति वाक्येन बोध्यो यो—गभीरत्वावच्छिन्ननदीपदार्थः, इत्यर्थः ।

यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेति तार्किका वदन्ति ।

यथा द्विरेफपदे शक्यार्थस्य परम्परासम्बन्धरूपा—स्वघटितपदवाच्यत्वात्मिका, स्वं—द्विरेफपदशक्यार्थे रेफद्वयम् तद्घटितं पदं भ्रमर इति तद्वाच्यत्वं मधुपे इति । 'द्विरेफो रौति' इत्यत्र द्विरेफस्य शब्दकर्तृत्वान्वयानुपपत्त्या तात्पर्यानुपपत्त्या वा लक्षितलक्षणया मधुपो बुध्यत इति । स्वं—द्विरेफपदं तद्बोध्यं "भ्रमर" पदं तद्वाच्यत्वं भ्रमररूपेऽर्थे । परे तु—द्विरेफपदं रूढिशक्त्या भ्रमरबोधकम्, अवयवार्थप्रतीतिस्तु नास्त्येव रथन्तरादिपदवत् । यद्वा पदनिष्ठरेफद्वयस्यार्थे आरोपात् तत्सम्बन्धित्वेनैव भ्रमरबोधः । , अत एव भ्रमरपर्यायेषु द्विरेफपदस्य कोशेषु पाठस्तस्माल्लक्षितलक्षणा नैव साध्वीत्याहुः । वाहीक इति—वाहीको नाम देशविशेषः, तत्रत्यः पुरुषो वाहीकः । केचित्तु—'वहिर्भवो वाहीकः' इति व्युत्पत्त्या सदाचारबहिर्भूत इत्यर्थः, "बहिषष्टिलोपो यञ्च" "ईकक्च" इति वार्तिकाभ्यां टिलोपे ईककि च कृते 'ब व' योरभेदात् "वाहीक" इतिरूपमित्याहुः (साहि. द. टि.)

तन्न। सति तात्पर्ये सर्वे सर्वार्थवाचका इति भाष्याल्लक्षणाया अभावात् वृत्तिद्वयावच्छेदकद्वयकल्पने गौरवात्। जघन्यवृत्तिकल्पनाया अन्याय्यत्वाच्च। कथं तर्हि गङ्गादिपदात्तीरप्रत्ययः।

---

लक्षणां खण्डयति–तन्नेत्यादि। अयमाशयः––वैयाकरणानां नये "सर्वे सर्वार्थवाचकाः" इति भाष्यात् गङ्गापदं यथा भगीरथरथखातावच्छिन्नजलप्रवाहे शक्तं तथैव तीरेऽपि शक्तमिति शक्त्यैव तीरस्य बोधोपपत्तौ वृत्त्यन्तरकल्पने गौरवमिति।

ननु यद्येवं तर्हि गङ्गापदात् घटस्याप्युपस्थितिः स्यात् नैवमनुभूयते केनापि विचक्षणेनेति चेन्न, 'सति तात्पर्ये सर्वे सर्वार्थवाचकाः' इत्यभ्युपगमेन तात्पर्यस्य शक्तिसंकोचकत्वेन दोषाभावात्। गौरवादिति–अयं भावः प्रवाहादिसम्बन्धित्वेनोपस्थिततीरादौ गङ्गापदादेः "सर्वे सर्वार्थवाचकाः" इति भाष्यात् सामान्यतः पूर्वमेव ज्ञातः शक्तिरूपः सम्बन्ध एव कल्पनीयो न तु शक्यसम्बन्धरूपः। तथा सति तयोरूपयोः शाब्दबोधजनकपदार्थोपस्थितिजनकपदपदार्थसम्बन्धत्वरूपं शाब्दबोधजनक पदपदार्थसम्बन्धत्वरूपं वा वृत्तित्वं कल्पनीयम्। शाब्दबोधकारणतावच्छेदकत्वम्, उपस्थितिकारणतावच्छेदकत्वञ्च शक्तत्वशक्यसम्बन्धत्वयोरुभयोः कल्पनीयमिति गौरवम्। शक्तिकल्पनापक्षे तु तस्या एव वृत्तित्व कल्पनं, तत्त्वस्यैव च तत्तदवच्छेदकत्वकल्पनमिति लाघवम्। तन्मते अन्यदपि गौरवं भूषणादौ स्पष्टं प्रतिपादितं तत् तत एवावगन्तव्यम्। व्यवहारादिना गङ्गापदादौ तीरादिशक्तेः पूर्वं विशेषरूपेणाग्रहेणाप्रसिद्धत्वात् लक्षणापदेन व्यवहार इति बोध्यम्। इति नित्यानन्दपर्वतीयपादाः। अन्याय्यत्वाच्चेति ––पूर्वोपस्थितशक्तिसम्बन्धस्य वृत्तित्वकल्पनमुपेक्ष्य पश्चादुपस्थिततद्घटितसम्बन्धस्य वृत्तित्वकल्पनाया अनुचितत्वादित्यर्थः। इदमत्र रहस्यं––लक्षणावादिनां सिद्धान्ते शक्तिज्ञानजन्योपस्थितिमन्तरापि लक्षणाज्ञानजन्योपस्थितिमादाय शाब्दबोधवारणेऽव्यवहितोत्तरत्वनिवेशे गौरवं स्यात् तथा पदजन्यार्थविषयकोपस्थितिं प्रत्यपि शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुत्वे गौरवं व्यभिचारश्च। वैयाकरणमतेऽपि "इदम्प-

भ्रान्तोऽसि, सति तात्पर्ये सर्वे सर्वार्थवाचका इति भाष्यमेव गृहाण । तथाहि—शक्तिर्द्विविधा—प्रसिद्धाऽप्रसिद्धा च । आमन्दबुद्धिवेद्यात्वं प्रसिद्धात्वम् । सहृदयहृदयमात्रवेद्यात्वमप्रसिद्धात्वम् । तत्र गङ्गादिपदानां प्रवाहादौ प्रसिद्धा शक्तिः, तीरादौ चाप्रासिद्धेति किमनुपपन्नम् । ननु सर्वे सर्वार्थवाचकाः इति चेद् ब्रूषे तर्हि घटपदात्पटप्रत्ययः किन्न स्यादिति चेन्न । सति तात्पर्ये इत्युक्तत्वात्तात्पर्याभावादिति गृहाण, तात्पर्यं चात्र ऐश्वरं देवतामहर्षिलोकवृद्धपरम्परातोऽस्मदादिभिर्लब्धमिति सर्वं सुस्थम् ।

ननु व्यञ्जना कः पदार्थः ? । उच्यते मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना ।

---

दमेतदर्थविषयकबोधजनकमिति शक्तिज्ञानेन सामान्यतः कार्यकारणभावकल्पनेऽपि तेषां तेषामर्थानां भेदेनानन्तकार्यकारणभावकल्पनं तत्रापि च व्यभिचारनिरासायाव्यवहितोत्तरत्वनिवेशनञ्चेति समानमेव गौरवम्, तथापि नैयायिकमत एतत्सर्वातिरिक्तस्याधिकस्य लक्षणाघटितकार्यकारणभावगौरवस्य सत्त्वेन शाब्दिकमत एव लाघवमिति तत्त्वम् ।

पादयोर्हि प्रसादेन श्रीसभापतिशर्मणः ।
ज्योत्स्नायां तत्प्रसादस्य लक्षणा विवृतिं गता ॥ १ ॥

इति लक्षणानिरूपणम् ॥

## —अथ व्यञ्जनानिरूपणम्—

व्यञ्जनायाः शाब्दबोधौपयिकवृत्तित्वे विप्रतिपन्नबुद्धीनां तार्किकाणां पुरो व्यञ्जनास्वरूपनिरूपणाय शङ्कते—**नन्वित्यादिना** । मुख्यार्थस्य-वाच्यार्थस्य, बाधः—अन्योन्यसंसर्गनिरूपकपदवृत्तिवृत्तिज्ञानजन्यप्रतीतिविषयाणामर्थानां वक्तृतात्पर्यविषयीभूतसम्बन्धेनेतरस्मिन्नितरपदार्थाभावः, वक्तृतात्पर्यविषयाभाव इति यावत् तन्निरपेक्षो यो बोधः, तज्जनकः, अस्य 'संस्कारविशेष'' इत्यत्रान्वयः । मुख्यार्थेन सम्बद्धासम्बद्धौ यौ तदुभयसाधारणौ यौ प्रसिद्धाप्रसिद्धार्थौ तौ विषयौ यस्य सः । **वक्त्रादीति**—

अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता। द्योतकत्वं च स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वमिति। वैयाकरणानामप्येतत्स्वीकार आवश्यकः। एषा च शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र, तथैवानुभवात्। वक्त्रादिवैशिष्ट्यज्ञानं च व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तरः।

---

आदिना—"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः। प्रस्तावदेशकालादे वैंशिष्ट्यात् प्रतिभाजुषाम्॥ योऽर्थस्यान्यार्थधीहेतु र्व्यापारो व्यक्तिरेव सा॥" (काव्य प्र. उल्लास ३ कारिका २१-२२) इति कारिकापठिता ग्राह्याः। यं प्रति किञ्चिद्वक्तव्यं स बोद्धव्य उच्यते, यश्च शब्दशक्यः स वाच्य इति न पौनरुक्त्यम्। एवञ्च वक्त्रादेर्वैशिष्ट्यम्—वैलक्षण्यम्, इतरप्रतिषिद्धो धर्म इति यावत्। तस्य यज्ज्ञानं, तच्च, प्रतिभा च ते आदिनी यस्य कौशल-कलितसमुदायस्य,तेनोद्बुद्धो यः संस्कारविशेषः स एव व्यञ्जनापदवाच्यः। एवञ्च वक्त्रादिवैशिष्ट्यहेतुका प्रतिभासम्पन्नसमवेतवाच्यान्यार्थधीः, तद्धेतुव्यापारत्वं व्यञ्जनात्वमिति सिद्धम्। प्रतिभा च—वक्त्रादिवैशिष्ट्यसहकारेण जन्मान्तरीयतद्धीजनकत्वप्रकारकज्ञानजन्यसंस्कारोद्बोधज बुद्धिरूपा, वासनाविशेषरूपेति यावत्, सैव 'नवनवोन्मेषशालिनी-" त्युच्यते। तथा च शक्तिरेतज्जन्मानुभूतैव बोधजनिका, व्यञ्जना तु जन्मान्तरगृहीताऽपीत्यपि विशेषोऽत्र। व्यञ्जनायां प्रमाणं दर्शयति—**अतएवेति**—व्यञ्जनास्वीकारादेवेत्यर्थः। ननु द्योतकत्वस्य व्यञ्जकत्वस्वरूपत्वाभावात् न तत्र व्यञ्जनाया उपयोगोऽत आह—**द्योतकत्वञ्चेति**—निपातानां स्वातन्त्र्येण प्रयोगाभावात् मुख्यार्थाभावेन लक्षणाया असम्भवात् द्योतकतैवेति तात्पर्यम्।

**वैयाकरणा**नामिति। निपातानां द्योतकत्वस्य तदैव सम्भवात्।

व्यञ्जनाया वृत्यन्तराद् वैलक्षण्यं दर्शयति—**एषाचेति**—नियन्त्रितार्थविषयकबोधजनकत्वं शब्दव्यञ्जना। वक्त्रादिवैशिष्ट्यमूला या प्रतिभा-

यत्तु तार्किकाः लक्षणयैव गतार्था व्यञ्जनेति न सा स्वीकार्येत्याहुः। तन्न लक्षणाया मुख्यार्थबाधपूर्वकलक्ष्यार्थबोधकत्वात्। मुख्यार्थसम्बद्धार्थस्यैव लक्षणाया बोधकत्वात् व्यञ्जनाया अतथात्वेन तदनन्तर्भावाच्चेति दिक् ॥

---

शालिनामन्यार्थधीस्तद्धेतुव्यापाररूपाऽर्थनिष्ठा।

अनुमानादिना व्यङ्ग्यार्थं प्रत्याययतां तार्किकाणां मतमनुवदति—यत्त्वित्यादिना। तन्मतं दूषयति—तन्नेति—अत्रेदं रहस्यम्—वाच्यादसम्बद्धं तावन्न प्रतीयते यतः कुताश्चित् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात्। एवञ्च सम्बन्धात् व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्यत्वेन नियतपक्षवृत्तित्वेन च सपक्षसत्त्वविपक्षासत्त्वपक्षसत्त्वलक्षणरूपत्रयवतो लिङ्गात् साध्यविषयकानुमितिः स एव व्यङ्ग्यव्यञ्जकभावः। तथाहि—भ्रम धार्मिक! विश्रब्धः स शुनकोऽद्य मारितस्तेन गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥ (गाथासप्तशती, शतकं २ श्लोक ७९) अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति।

यद् यद् भीरुभ्रमणं तत्तद् भयकारणनिवृत्त्युपलब्धिपूर्वकं गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः। इति नैयायिका आहुस्तन्न—भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपि तु वचनात्, न च पुंश्चलीवचनस्य प्रामाण्यमस्ति अर्थेनाप्रतिबन्धादित्यसिद्धश्च तत्कथमेवंविधाद्धेतोः साध्यसिद्धिः। तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति। अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोगे एव प्रतिबद्धानीत्यनैकान्तिकानि। व्यञ्जनावादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्। नचाधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम्।

ननु कोऽयं वृत्त्याश्रयःशब्दः । वर्णाः प्रत्येकमिति चेद्, न । द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तेः । नापि वर्णसङ्घातः । उच्चरितप्रध्वंसित्वेन यौगपद्यासम्भवात् । अभिव्यक्तेरुत्पत्तेर्वा क्षणस्थायित्वात्क्षणात्मकालस्य प्रत्यक्षायोग्यत्वेन तदवच्छिन्नवर्णस्याप्यप्रत्यक्षत्वात् । उच्चारणाधिकरणकालोत्तरकालवृत्तिध्वंसप्रतियोगित्वमुच्चरितप्रध्वंसित्वम् । इको यणचि इत्यादौ तस्मिन्निति परिभाषोपस्कृतवाक्यार्थेऽयं पूर्वोऽयं पर इति नष्टस्य प्रत्यक्षविषयेदंशब्देन पौर्वापर्यव्यवहारायोगाच्च ।

---

एवंविधादर्थादेवंविधोऽर्थः उपपत्त्यनपेक्षत्वेऽपि प्रकाशत इति व्यञ्जनावादिनः पुनस्तद् अदूषणमिति काव्यप्रकाशः । अधिकं तट्टीकायां द्रष्टव्यम् ।

इतिव्यञ्जनानिरूपणम् ॥

## अथ स्फोटविचारः

**वृत्त्याश्रयः** शब्द इति । अष्टसु स्फोटेषु कस्य वाचकत्वं युक्तमिति प्रश्नाशयः । वर्णस्फोटवादिमीमांसकमतं प्रत्याचष्टे—**नचवर्णा** इत्यादि अस्य पर्याप्तिसम्बन्धेन वृत्त्याश्रय इति शेष इत्यर्थः । अयमाशयः योग्यविभुविशेषगुणानां स्वोत्तरवर्तियोग्यविभुविशेषगुणनाश्यत्वेन एककालावच्छेदेन वर्णसमुदायासम्भवेन वर्णसङ्घातस्य वाचकत्वं दुर्घटम् । **अभिव्यक्तेरिति** वर्णनित्यत्वाभिप्रायेणेदम् । क्षणशब्देन तदाधारः कालो ग्राह्यः "क्षणो नाम शब्दतन्मात्राद्वारा प्रकृतेः परिणामविशेषः क्षणधारारूपकालस्य परमापकर्षावधिः । यथा परमाणुरवयवधारायाः परमापकर्षावधिः, स च न प्रत्यक्षः इति तदधिकरणकवर्णप्रत्यक्षानुपपत्ति" रिति एतेन वर्णस्फोटवादिमीमांसकमतं परास्तम् ।

ननु क्रियायाः क्रमिकत्वेनोच्चारणप्रध्वंसयोर्यौगपद्यासंभवेन उच्चरितप्रध्वंसित्वकथनमसंगतमित्यत आह—'**उच्चारणाधिकरणेति**' । एतेन यस्मिन्क्षणे उत्पद्यते तस्मिन् क्षणे एव विनश्यतीति क्षणिकवादो निरस्तः । **प्रत्यक्षविषयेति**—प्रत्यक्षो विषयो यस्य सः, प्रत्यक्षबोधक इत्यर्थः । एवञ्च कालिकं दैशिकं वा पौर्वापर्यं न स्यात्, युगपत् स्थितयोरेव 'अयं ज्येष्ठोऽयं मध्यमः" इत्यादिव्यवहारस्य दर्शनात् ।

यत्तु तार्किकाः—वर्णानामनित्यत्वेऽपि उत्तरोत्तरवर्णे पूर्वपूर्ववर्णवत्त्व मव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशाद् गृह्यते इति पदस्य प्रत्यक्षत्वाच्छाब्दबोधः। यद्वा पूर्वपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरम वर्णप्रत्यक्षपर्यन्तं जायमाना एव सन्तीति न पदप्रत्यक्षानुपपत्तिः। यद्वा पूर्वपूर्ववर्णानुभवजन्यसंस्कारसध्रीचीनचरमवर्णानुभवतः शाब्दबोध इत्याहुः।

तन्न। आद्येऽयं पूर्वोऽयं पर इत्यभिलापासम्भवेन अव्यवहितोत्तरत्वसम्बन्धायोगात्। नष्टविद्यमानयोरव्यवहितोत्तरत्वसम्बन्धस्य वक्तुमशक्यत्वाच्च। द्वितीये शब्दजशब्दन्यायेन पदप्रत्यक्षोपपादनेऽपि पदस्याविद्यमानत्वेन तत्र शक्तयाश्रयत्वस्य ग्रहानुपपत्तेः। अविद्यमाने आश्रयत्वाङ्गीकारे नष्टो घटो जलवानित्याद्यापत्तेश्च। तृतीये येन क्रमेणानुभवस्तेनैव क्रमेण तत्संस्कारस्थितिरित्यत्र विनिगमकाभावात् सरो रसो नदी दीन इत्यादौ विपरीतसंस्कारोद्बोधेन प्रत्येकमन्यार्थप्रत्ययापत्तेः।

---

यद्यपि 'इकारः पूर्वमुत्पन्नस्ततः उकारः' इति पौर्वापर्यं सम्भवेत् तथापि तत्र सूत्राप्राप्त्यानुपयोग्येव तत्। पूर्वपूर्ववर्णानुभवजन्यसंस्कारविशिष्टचरमवर्णानुभव एव तावद्वर्णगोचरां स्मृतिं जनयतीति तार्किकोक्तं प्रत्याख्यातुमाह—**यत्तुइत्यादि**—।

पक्षान्तरमाह—**यद्वेति**। **शब्दजशब्देति**—यथोत्पन्ना वीचिर्वीच्यन्तरमुत्पादयति तथैव शब्दाच्छब्दान्तरोत्पत्तिः, एवं क्रमेण श्रोत्रदेशपर्यन्तं गतः शब्दः श्रोत्रेण गृह्यते स एव तज्जन्यप्रत्यक्षगोचरः।

'गृहस्थःशब्दः श्रूयते" इति साजात्येन व्यवहारः। एतावानेव तत्र विशेषो यद्वीचयो वीच्यन्तरमुत्पाद्य नश्यन्ति वर्णास्तु चरमवर्णोत्पत्तिपर्यन्तं सजातीयवर्णानुत्पादयन्त एव तिष्ठन्तीति युगपदेव सर्ववर्णोपलब्धिः सुलभेति तार्किकाः। प्रथमं पौर्वापर्यं प्रत्याचष्टे—**इत्यभिलापासम्भवेन**—आद्ये नष्टविद्यमानयोः पौर्वापर्यस्य वक्तुमशक्यत्वेन, द्वितीये तु युगपदेवोत्पन्नत्वेन तदसम्भव इति भावः। **अशक्यत्वाच्चेति** चो हेतौ यतो वक्तुमशक्यत्वमतोऽभिलापासम्भवः। अभ्युपेत्यवादेनाह—**द्वितीये शब्दजशब्दन्यायेनेति** तृतीयं पक्षं खण्डयति—**तृतीये येनेति**—। किञ्चैवं

उत्पत्तिविनाशवद्वर्णसमुदायरूपपदस्य मनुष्यादिवद्भेदे "एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत्सर्वयागेष्वङ्गं भवति" इति भाष्यविरोधापत्तेश्च। प्रादुर्भूतोऽभिव्यक्तः ।ः ननु कस्तर्हि वृत्त्याश्रयश्शब्दः ? स स्फोटात्मक इति गृहाण ॥

ननु कोऽयं स्फोटः ? उच्यते। चतुर्विधा हि वागस्ति–परा पश्यन्ती मध्यमा वैखरी च । तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते। नाभिपर्यन्त-

---

पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैव हानिः—तदुक्तं हरिणा- "अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्" इति। (वाक्य प० कां. २ कारिका १६) पदसमुदायत्मकवाक्यस्येव वर्णसमुदायरूपपदस्याप्य-भावात्। एवञ्च महत्यां विप्रतिपत्तौ को नाम वृत्त्याश्रयः शब्द इति स्फोटात्मकं शब्दमाह —सइति ।

**मूलाधारस्थेति—**

पण्णवत्यङ्गुलो देहायामः।
तत्राङ्गुलार्धसहितं सप्तचत्वारिंशदङ्गुलात्मकमधः
उपरिच परित्यज्यैकाङ्गुलपरिमितं मध्यं "मूलाधारः" इत्युच्यते
तदुक्तम्–"पायवन्ताद् द्व्यङ्गुलादूर्ध्वं लिङ्गाच्चद्व्यङ्गुलादधः।
मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते" ॥ १ ॥

मूलाधारः = मूलप्रकृत्यात्मिका कुण्डलिनी। सा मध्यादिभिर्वेष्टिता सर्पवत्तिष्ठति। 'मूलाधारादुत्थितः पवनो नाडीद्वारेण कार्याणि करोति' इति पातञ्जले स्पष्टम् ।

तदुक्तम्—"गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम्।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ॥"

(संगीतरत्नाकर १-२-११९-१२०)

आधाराद् द्व्यङ्गुलादूर्ध्वं मेहनाद् द्व्यङ्गुलादधः।
एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभम् ॥

(संगी. रत्ना. १-२-१४९)

मागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते। एतद् द्वयं वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानाविषय इत्युच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते। तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्राह्या वैखरी वागुच्यते। तदाह—

---

मूलाधार एव पवनोऽप्युत्पद्यते। तदुक्तम् " देहेऽपि मूलाधारे तु समुदेति समीरणः " ( प्रपञ्च सा. तं. पट १२ श्लो. ९१ ) इति **पवनसंस्कारीभूतेति**—' ज्ञातमर्थं विवक्षोः पुंसः इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारः। **वायुनाऽभिव्यक्ता** हृदयदेशे शब्दब्रह्मरूपेति शेषः। एतद्द्वयं–परारूपं, पश्यन्तीरूपम् ' च शब्दब्रह्मेत्यर्थः। **समाधाविति**–स हि —" सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत् कदाचन। इति विद्यात् स्वमात्मानं स समाधिः प्रकीर्तितः ॥ इति **निर्विकल्पकेति**—तत्त्वञ्च चिन्मात्राविषयकत्वम्। नैयायिकास्तु घटेन सह चक्षुःसंयोगानन्तरं द्रागेव ' किञ्चिदि 'ति ज्ञानं जायते तत्र घटत्वं घटश्च स्वातन्त्र्येण भासतेऽतः तदेवेदं ज्ञानं ( **घटघटत्वे** ) इत्याकारकं वैशिष्ट्यानवगाहि उच्यते, तदेव निर्विकल्पकम्, निर्गतो विकल्पो विशेषणविशेष्यभावो यस्मात् तत् निर्विकल्पकम्। विशेष्यताख्यविशेषणताख्य–संसर्गताख्य-विषयतातिरिक्तविषयतानिरूपकं ज्ञानं निर्विकल्पम्। तदुक्तं भट्टपादेन श्लोकवार्तिके—"अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजमिति "। तदनन्तर " अयं घट " इत्याकारकं ज्ञानं समवायेन घटत्वविशिष्टं ज्ञानं व्यवसायात्मकं सविकल्पकं जायते इत्याहुरिति तेषां ग्रन्थत एव द्रष्टव्यम्। **परश्रोत्रेणापि**–तदुक्तं " वैखरी श्रुतिगोचरा " इति। इदमत्राकूतम् वैखरीस्वरप्रत्यक्षा। मध्यमा पदप्रत्यक्षानुपपत्त्या व्यवहारकारणम्।

पश्यन्ती तु व्यवहारातीता योगिनां समाधौ गम्या। परा तु योगिनामप्यगम्या—

परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥ इति ।
वैखर्या हि कृतो नादः परश्रवणगोचरः ।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते ॥
इति च ।

युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते । तत्र मध्यमानादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जकः । वैखरीनादो ध्वनिः सकलजनश्रोत्र मात्रग्राह्यो भेर्यादिनादवन्निरर्थकः । मध्यमानादश्च सूक्ष्मतरः कर्णपिधाने जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दब्रह्मरूपस्फोटव्यञ्जकश्च । तादृशमध्यमानादव्यङ्ग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च ।

---

तदुक्तम् :—“ स्वरूपज्योतिरेवान्तः, परावागनपायिनी
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते ” ॥ इति ॥

( महाभारते ) ऋग्वेदेऽपि

“चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहात्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ ”

इति ॥ अत्र माधवेन ऋग्वेदभाष्ये चत्वारि पदानीत्यनेन वैखरी, मध्यमा, पश्यन्ती, परारूपाणि प्रदर्शितानि । पतञ्जलिना तु “ नामाख्यातोपसर्ग निपाताश्चत्वारि ” इत्युक्तम् । अभिव्यक्तव्याख्यानादुभयपरकत्वं प्रामाणिकमेव । पतञ्जलिनाऽपि “ गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते न निमिषन्तीत्यर्थः ” ( महाभाष्यं पस्पशाह्निकम् ) इतिव्याख्यानं कुर्वता माधवाभिमतं व्याख्यानमपि मन्यत एवेति गम्यते । नन्दिकेश्वरेणाप्युक्तम् —अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।

आद्यमन्तेन संयोगादहमित्येव जायते ॥
इकारादि हकारान्ता वर्णाः समभवंस्ततः ।
सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत् ॥
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः परम् ।

तदाह हरिः,

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति ।

स च यद्यप्येकोऽखण्डश्च, तथाऽपि पदं वाक्यं जपाकुसुमादिलौहित्यपीतत्वादिव्यञ्जकोपरागवशाद् लोहितः पीतः स्फटिक इति भानवद्

---

वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः ॥
वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते ।
चन्द्रचन्द्रिकयो र्यद्वत्तथा वागर्थयोरपि ॥ इति ॥

अस्य वाचकस्येति शेषः । एवञ्च आनन्त्यव्यभिचारप्रयुक्तशक्तिग्रहासम्भवादिप्रागुक्तदोषलेशो नास्तीति भावः । **अनादीति**–आद्यन्त रहितम्, शब्दोपग्राह्यतया शब्दतत्त्वम्। स्थिति–प्रवृत्ति–प्रविभागादि शब्देन क्रियते । तच्चाक्षरनिमित्तत्वाद् " अक्षरम् " इत्युच्यते । प्रत्यक्चैतन्ये निवेशितस्य परबोधार्थमभिव्यक्तेरर्थभावेन विवर्तते तत्त्वादप्रच्युतमेकं भेदानुकारेण शक्त्यानेकरूपतां प्रतिपद्यते, रज्जूरगवत् । एतेन आरम्भपरिणामवादौ न्यायसांख्याभिमतौ निरस्तौ । कारणस्वरूपाविरोधेन च कार्य्यप्रतिभासस्तस्मात् ब्रह्मणोविकारित्वाभावेन न नित्यताहानिः । एतदेवोक्तम् —" **विवर्ततेऽर्थभावेनेत्यादि** ।

ननु वाचकत्वेनाभिमतस्य स्फोटस्यैकत्वेऽखण्डत्वे च अष्टौ स्फोटा इति व्यवहारासङ्गतिरित्यत आह—**तथापीति**–अयंभावः—यथा घटपटादि-पदार्थातिरिक्तत्वेन आकाशो न कुत्राप्युपलभ्यते किन्तु तद्रूपरूषित एव तथैव वर्णपदवाक्यातिरिक्तत्वेन स्फोटो न कुत्राप्युपलभ्यते किन्तु व्यञ्जकवर्णादिरूषित एव, अत एव स्फुट्यते वर्णादिभिरभिव्यज्यते इति, " स्फुटत्यर्थोऽस्माद् " इति च स्फोटनिर्वचनमपि संगच्छते। एवञ्च व्यञ्जकवर्णादीनां नानात्वात् स्फोटस्यापि नानात्वं वर्णादिकत्वादिरूपत्वञ्च स्फोटे **वर्तते** भासते न तु वास्तविकम्। एतदेव दृष्टान्तेन बोधयति–**जपाकुसुमादीति**—। हरिणाप्युक्तम्—" यथा रक्तगुणे तत्त्वं कषाये

वर्णादिव्यङ्ग्यः वर्णरूपः पदरूपो वाक्यरूपश्च । यथा च मुखे मणिकृपाण दर्पणव्यञ्जकोपाधिवशाद्दैर्घ्यवर्तुलत्वादिभानं तद्वत् । तदुक्तम्,

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥ इति ।

किञ्च । व्यञ्जकध्वनिगतकत्वगत्वादिकं स्फोटे भासते । बिम्बगतधर्मवैशिष्ट्येनैव प्रतिबिम्बस्य लोकेऽवधारणाद् । व्यञ्जकरूषितस्यैव स्फटिकादेर्भानाच्च । यथा चैकस्याकाशस्य घटाकाशो महाकाश इत्यौपाधिको भेदः, यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदो जीवानां च परस्परं भेदः, एवं स्फोटे व्यञ्जकध्वनिगतकत्वादिभानात्ककारो बुद्ध इत्यौपाधिको भेदव्यवहारः । औपाधिको भेद इत्यत्रोपाधिः घट-कत्वादिभिन्न उपधेयस्तु आकाशस्फोटादिरेक एवेति तात्पर्यम् । पदवाक्ययोस्सखण्डत्वपक्षे त्वन्तिमवर्णव्यङ्ग्यः स्फोट एक एव । पूर्वपूर्ववर्णस्तु तात्पर्यग्राहकः । न्यायनये चित्रगुरित्यादौ चित्रादिपदवत् ॥

---

व्यपदिश्यते । संयोगि-सन्निकर्षात्तु वस्त्रादिष्वपि गृह्यते ॥ इति (वाक्य प. ३।१।७) अस्य भावार्थः—यथा रक्तगुणे वर्तमानं तत्त्वं (रक्तत्वं) स्वसमवायि-समवायसम्बन्धेन कषाये द्रव्ये 'इदं' रक्तमिति व्यवह्रियते तथा संयोगिकषायरूपद्रव्यसन्निकर्षात् स्वाश्रयसंयोगसम्बन्धेनेत्यर्थः वस्त्रादिष्वपि 'रक्तं वस्त्र'मिति प्रतीयते । एवं व्यञ्जकवर्णपदादिरूपत्वं नानुपपन्नं स्फोटस्येति भावः । अपरं दृष्टान्तमाह—**यथाचेत्यादि** । **पदे नेत्यादि**--पदे भवतीत्यादौ, न वर्णाः भकारादिवर्णाः, एवञ्च वर्णसमूहः पदमिति प्रत्युक्तम् ।

दृष्टान्तव्याजेनाह-**वर्णेष्विति** यथा वर्णेषु एकारौकारादिसन्ध्यक्षरेषु प्रतीयमाना अपि वस्तुतोऽवयवाः न सन्ति तथैव पदे वर्णाः, वाक्ये पदानि च न सन्तीति कारिकार्थः। **किञ्चेत्यादि**—एतत्तत्वं प्रागेवावेदितम् । ननु पदवाक्ययोः सखण्डत्ववादिनां मते कथं व्यवस्थेत्यत आह **पदवाक्ययोरिति**। ननु अन्त्यवर्णस्य व्यञ्जकत्वे पूर्वपूर्ववर्णानामानर्थक्यप्रसङ्गः इत्यत आह -**पूर्वपूर्वेत्यादि** । **न्यायनय इति** - । अयमाशयः -समासे-

ध्वनिस्तु द्विविधः। प्राकृतो वैकृतश्च। प्रकृत्याऽर्थबोधनेच्छया स्वभावेन वा जातः स्फोटव्यञ्जकः प्रथमः प्राकृतः। तस्मात्प्राकृताज्जातो विकृतिविशिष्टश्चिरस्थायी निवर्तको वैकृतिकः। हरिरप्याह,

---

शक्तिमनभ्युपगच्छन्तो व्यपेक्षावादिनो नैयायिकाः, बहुव्रीहिसमासे चित्रगुपदादौ एकदेशान्वयस्वीकारे गापदस्य गोस्वामिनि लक्षणा, गवि चित्राभेदान्वयः। यदि तत्र 'पदार्थः पदार्थेनेति" व्युत्पत्त्या एकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा, चित्रपदं तात्पर्यग्राहकम्, इति स्वीकुर्वन्ति तथैव प्रकृतेऽपि चरमवर्णेन स्फोटो व्यज्यते पूर्वपूर्ववर्णस्तु तात्पर्यग्राहक इति भावः। पूर्वं व्यञ्जकध्वनिगतं कत्वादिकं स्फोटेऽवभासत इति प्रतिपादितं, सम्प्रति तस्यैव भेदप्रदर्शनपूर्वकं स्वरूपनिरूपणमारभते–**ध्वनिस्त्विति**। द्वैविध्यमाह–**प्राकृत इति**–। प्रकृत्येत्यस्य विवरणमाह–**अर्थबोधनेच्छयेति**। इदमत्र रहस्यम्-प्राकृतो वैकृतश्चेति द्विविधो ध्वनिः तत्र प्राकृतध्वनिं विना स्फोटः सामान्यरूपेण विशेषरूपेण वा न भासते इति प्राकृतध्वनिव्यतिरेकेण स्फोटानुपलम्भात् प्राकृतध्वनिं स्फोटस्वरूपमिव मन्यन्ते प्राकृतध्वनिरेव च ह्रस्वदीर्घप्लुतादिभेदव्यवहारहेतुरिति प्राकृतध्वनिगतकालभेदस्य प्राकृतध्वन्यभिन्नत्वेन प्रतीते स्फोटे प्रतीतौ बाधकाभाव इति 'अत्" इत्युच्चारणे अतत्कालस्य दीर्घादेर्व्यावृत्तिर्युक्ता वैकृतध्वनिस्तु प्राकृतध्वनिप्रतीतं स्फोटमुत्तरकालं स एवायमित्युल्लेखेन चिरकालमुपलम्भयति इति स्फोटप्रतीत्युत्तरकालभावितया स्फोटवैलक्षण्येनावभासमानः द्रुतादीनां वृत्तीनां भेदे कारणमिति तद्गतकालभेदस्य तद्भिन्नत्वेन प्रतीते स्फोटे न प्रतीतिरिति वैकृतध्वनिभिः स्फोटो न भिद्यते तमादाय च "ध्वनिकृता वृद्धिः" इति भाष्यम् ध्वनिकृता–वैकृतध्वनिकृता, वृद्धिः–उपलब्धिकालवृद्धिः न तु स्फोटवृद्धिः तस्य वर्णोपरागाभिव्यक्तिजनकयत्नकालोपरागेणैव भानात् वैकृतध्वनिकालोपरागेण तु स्फोटस्य न भानम् उपलब्धिवृद्धावपि 'ह्रस्वाकार एवायम्" इति प्रत्यभिज्ञानादिति द्रुतादिवृत्तिभेदेऽपि स्फोटवृद्ध्यभावात् न 'द्रुतायाम्' वार्तिकावश्यकतेति तद्भाव इति।

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः॥
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते। इति।

शब्दस्याभिव्यक्तेरूर्ध्वं, वैकृता ध्वनयो जायन्ते इति शेषः। वृत्तिभेदे इति।

---

शब्दस्य-स्फोटस्य, अभिव्यक्तेः प्राकृतध्वनिजन्याभिव्यक्तेः, ऊर्ध्वम्-अनन्तरम्, वैकृताध्वनयः, जायमाना इति शेषः, वृत्तिभेदे द्रुतादिवृत्तिभेदे, तावत्कालं स्फोटोपलम्भ इत्यर्थः, समुपोहन्ते कारणानि भवन्ति, तैः—वैकृतध्वनिभिः, स्फोटात्मा—स्फोटस्वरूपम् न भिद्यते, वृत्तिभेदेऽपि "स एवायमकारः" इति प्रत्ययादिति भावः। अयं भावः—यथा प्रकाशः उद्यन्नेव पटादिभ्यो भिन्नं घटं प्रकाशयति अनन्तरं तु प्रकाशेन पुनःपुनर्दृश्यमानोऽपि घटो न पूर्वप्रकाशितघटाद् भेदमवलम्बते तथा प्राकृतध्वनिरेव भिन्नं स्फोटमभिव्यञ्जयति अनन्तरं वैकृतध्वनिस्तु पूर्वाभिव्यक्तस्यैव तावत्कालमुपलम्भे हेतुर्भवति न पूर्वाभिव्यक्ताद् भेदे, अत एव द्रुतादिवृत्तिभेदेऽपि अकार एव पुनः पुनरुपलभ्यते तथाचानुभवस्तमेवायं विलम्बितमुच्चारितवानन्यो द्रुतमिति, ह्रस्वदीर्घयोस्तु नैवमनुभव इति तत्र विषयभेद इति वृत्तिभेदेऽपि वर्णस्य भेदो न गृह्यते इति सर्ववृत्तिषु तत्कालत्वम्। यदाहुर्वार्तिककाराः "सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते" इति। अत्र प्रदीपः "सर्वासु वृत्तिषु नव्वर्णानामुपचयापचयौ यथा गन्तॄणामालस्यादिभेदाद् गतिभेदेऽपि न मार्गभेद इत्यर्थः" इति। आलस्यादिनोच्चारणक्रियया वैकृतध्वानिभेदेऽपि न वर्णस्वरूपभेद इति भावः। वक्तुश्चिराचिरवचनात् चिराचिरकालोच्चारणजनकयत्नात् जायमानवैकृतध्वनेरुपलब्धीनामेव भेदः केवलं वृत्तयो भिद्यन्ते न वर्णा इति भावः। ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्नाः भिन्नैर्ध्वनिभिर्व्यज्यन्त इति युक्तस्तेषां कालभेदः। तदुक्तं श्लोकवार्तिके—वर्णान्तरत्वमेवाहुः केचिद् दीर्घप्लुतादिषु। न हि द्रुतवत्तत्र प्रयोगो नान्तरीयकः इति॥ यथाहुर्महाभाष्यकाराः "भेर्याघातवत्" इति वार्तिकव्याख्याने 'तद्यथा भेर्याहन्ता

अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता।
शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता॥ इति।

तिसृषु वृत्तिषु समुपोहन्ते कारणानि भवन्ति स्फोटस्तु तैर्न भिद्यत इति तदर्थः।

---

भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति, कश्चित् त्रिंशत्, कश्चित् चत्वारिंशत् स्फोटस्तावानेव ध्वनिकृता वृद्धिः" इत्यत्र कैयटः भेरीमाहन्तीति भेर्याघातः उपलब्धिसामान्ये दृष्टान्तः यथा प्रयत्नवशादुत्पन्नो भेरीशब्दः कश्चिदल्पकालमुपलभ्यते कश्चिच्चिरं काश्चिच्चिरतरं च एवं वृत्तिषूपलब्धीनां कालभेदो विषयस्य त्वभेद " इति॥ ननु दृष्टान्ते यथा ध्वनेरुपलभ्यमानस्य भेदो न तथेह वर्णस्य द्रुतादेष्विति वैषम्यमत आह—उपलब्धिसामान्य इति यथा तत्र ध्वनेस्तावत्कालमुपलम्भस्तथेहापि तत्तद्वृत्तौ तावत् तावत्कालं तत्तदभिव्यञ्जकरूपरूषितत्वेन परिच्छिन्नस्यैव स्फोटस्योपलम्भमात्रमित्येतावत्येव दृष्टान्तः न चैतावता स्फोटभेदः परिदृश्यमानकालभेदस्योपलब्धिगतत्वादिति तात्पर्यम् एक एव स्फोटस्तत्तद्वर्णैस्तत्तद्रूपेणाभिव्यज्यत इति" इत्युद्योतः।

ननु यदि नित्यः शब्दस्तर्हि तस्य कुतो न सर्वदोपलम्भ इति चेदत्र तपासूत्रे भाष्यकृतः "स्फोटः शब्दः ध्वनिः शब्दगुणः" इति स्फोटोपलब्धिप्रतिबन्धकस्तिमितवाय्यपसारणद्वारा स्वधर्मरूषिततदुपलब्धिहेतुत्वेन ध्वनिः स्फोटाख्यस्य शब्दस्य गुण उपकारक इति तदर्थः। एतदुक्तं भवति—"स एवायमकार" इति प्रत्यभिज्ञानात् स्फोटस्य नित्यत्वे सिद्धे सर्वदा तदुपलम्भाभावो व्यञ्जकाभावकृतः न तु स्वभावकृतः यथा मेघान्धकारे विद्युज्जनिता घटबुद्धिर्न चिरमनुवर्तते तत्र व्यञ्जकाभाव एव कारणं न तु घटाभावः। तदाहुः श्लोकवार्तिककाराः "सन्नेव साधनाभावाच्छब्दोनैवोपलभ्यते। क्षणिकं साधनं चास्य बुद्धिरप्यनुवर्तते। मेघान्धकारशर्वर्यां विद्युज्जनितदृष्टिवत्॥" इति॥

कास्ता वृत्तय इत्याह—**अभ्यासार्थे** इति। "समुपोहन्ते" इत्यस्य व्याख्यानमाह—कारणानि भवन्ति।

अत्रेदं बोध्यम्-केनचिद् घटमानयेति वैखरीनादः प्रयुक्तः, स केनचिच्छ्रोत्रेन्द्रियेण गृहीतः, स नाद इन्द्रियद्वारा बुद्धिहृद्गतस्तन्नर्थबोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति तस्मादर्थबोधः। स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोटः। उच्चारयितुस्तु युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते। तत्र वैखरीनादो वह्नेः फूत्कारादिवन्मध्यमानादोत्साहकः, मध्यमानादः स्फोटं व्यञ्जयतीति शीघ्रमेव ततोऽर्थबोधः। परस्य विलम्बेनानुभवसिद्धत्वात्। अत एव श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्द इत्याकरग्रन्थस्संगच्छते। कत्वादिना श्रोत्रोपलब्धित्वं स्फोटात्मकपदादिरूपेण तु बुद्धिनिर्ग्राह्यत्वम्, स च प्रयोगेण वैखरीरूपेणाभिज्वलितः स्वरूपरूषितः कृत इति तदर्थः। तत्रापि शक्यत्वस्यैव शक्ततावच्छेदिकाया वर्णपदवाक्यनिष्ठजातेर्वाचकत्वम्। तदुक्तम्—

---

एतावता प्रबन्धेन स्फोटं निरूप्य सम्प्रति तस्य वाचकत्वरीतिं प्रदर्शयति—**अत्रेदमित्यादि**। गृहीतः—श्रावणप्रत्यक्षविषयतां नीतः। इन्द्रियद्वारा श्रोत्रेन्द्रियद्वारा। अन्तःकरणस्य निश्चयात्मिका वृत्तिः—बुद्धिः, स्मरणात्मिका वृत्तिः-चित्तम्, तदेव हृत् "चित्तं तु चेतो हृदयमिति कोशात्। तदुक्तम्—" मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम्। शब्दम्—मध्यमानादव्यङ्ग्यम्। संशयो निश्चयो वर्गः स्मरणं विषया इमे ॥ इति ॥ स्वम्—वैखरीनादः। कत्वादिनेत्यत्र अवच्छिन्नत्वं तृतीयार्थः, एवञ्च कत्वाद्यवच्छिन्नं—कत्वादिरूपरूषितमित्यर्थः फलति। तस्माद् वैखरीनादव्यक्तात्।

स्फोटस्यान्वर्थतामाह—**स्फुटेति**। श्रोत्रोपलब्धिः—श्रोत्रे उपलब्धिर्यस्य सः, अत एवोक्तम्—आकाशदेश इति। कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रम्, आकाशदिशोरैक्येन देशशब्दप्रयोगः। बुद्धिनिर्ग्राह्य इत्यस्य व्याख्यानम्— प्रयोगेणाभिज्वलितः इति।

शक्यत्वस्यैवेति—इदमत्र तात्पर्यम्—यथा घटपटाद्यर्थनिष्ठाः घटत्वपटत्वादयोऽनन्ता जातयस्तथा पदवृत्तयोऽपि घटत्वादयो जातिरूपा अखण्डा एव। ताश्च यद्यपि प्रत्येकवर्णवृत्तयस्तथापि 'कार्येण कारणकल्पनम्' इति न्यायेन चरमवर्णाभिव्यङ्ग्या एव कार्यसाधिकाः। तासां

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृतेति।

तस्मादष्टविधस्फोटात्मकश्शब्दो वृत्त्याश्रयः। वस्तुतस्तु वाक्यस्फोटो वाक्यजातिस्फोट एव वा वृत्त्याश्रयः। तत एव लोकेऽर्थबोध इत्याद्युक्तत्वादिति सर्वं सुस्थम्। इति स्फोटनिरूपणम्॥

अथ शाब्दबोधसहकारिकारणानि आकाङ्क्षा-योग्यता-आसत्ति-तात्पर्याणि। वाक्यसमयग्राहिकाऽऽकाङ्क्षा। सा चैकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्यान्वय्यर्थः कः' इत्येवंरूपा पुरुषनिष्ठैव,

---

सिद्धिश्च शक्यतानिरूपितशक्ततावच्छेदकतया, 'कारणतावच्छेदकतयैव जातिसिद्धिः' इति तार्किकनये तु शाब्दबोधनिष्ठजन्यतानिरूपितजनकतावच्छेदकतया वा। एवञ्च यथा अर्थगतजातेः शक्यत्वं तथा शक्ततावच्छेदकवर्णादिगतजातेरपि वाचकत्वमिति सन्दर्भार्थः। **जातिः स्फोट इतीति**—व्यक्तिस्फोटवादिना हि अत्वादिजातिर्नाभ्युपेयते अकारादिव्यक्तेरेवैकत्वं नित्यत्वं चाभ्युपगम्यते। तच्च न युक्तम्; अकारादिव्यक्तेरेकत्वे 'दण्ड+अग्रम्' इत्यत्र कालव्यवायः दण्ड इत्यत्र शब्दव्यवायः, अश्वः, अर्कः, अर्थः, इत्यत्र युगपद्देशपृथक्त्वेषूपलम्भश्च नोपपद्येतेति भाष्यात् अकारादीनां नानात्वमभ्युपेयम्। एवञ्च तद्गतजात्यैव सोऽयमकार इति प्रत्यभिज्ञोपपत्तौ नाकारादिव्यक्तीनां नित्यत्वमास्थेयम् इति जातिस्फोटवादिन आकूतम्॥

इति ज्योत्स्नायां स्फोटनिरूपणम्।

## अथ आकाङ्क्षानिरूपणम्।

सिद्धान्ते बोधजनकतारूपा शक्तिर्गृह्यते, बोधश्चात्र शब्दजन्यप्रतीतिः, शब्दजन्यप्रतीतौ च वृत्तिज्ञानाधीनोपस्थितिः कारणम्। एवञ्च शाब्दबोधे मुख्यकारणघटकवृत्त्यादीन्पदार्थान्निरूप्य सहकारिकारणानि निरूपयितुमारभते—**अथेति**। कारणस्यचातुर्विध्यं प्रदर्शयति—**आकाङ्क्षेति**। आकाङ्क्षां निरूपयति—**वाक्येति** वाक्यस्य यः समयः-संकेत, तद्ग्राहिका-तद्

तथापि तस्याः स्वविषयेऽर्थे आरोपः । अयमर्थोऽर्थान्तरमाकाङ्क्षतीति व्यवहारात् । इदमेवाभिधानापर्यवसानमित्युच्यते । पदे तु नारोपः, अर्थबोधोत्तरमेवाकाङ्क्षोदयात् । पदं साकाङ्क्षमिति तु साकाङ्क्षार्थ-बोधकमित्यर्थकम् । तदुक्तं समर्थसूत्रे भाष्ये "परस्परव्यपेक्षां सामर्थ्यमेके । का पुनश्शब्दयोर्व्यपेक्षा न ब्रूमश्शब्दयोरिति, किं तर्हि अर्थयोरि"ति !

---

विषयकबोधजनिकेत्यर्थः । ननु आकाङ्क्षा नाम किञ्चिन्निष्ठविषयतानिरू-पितविषयितावादिच्छाऽपरपर्याया, सा च कथमुक्तसंकेतग्राहिका अत आह—सेति । एकेति पदादिपदार्थे ज्ञाते सति पदादिपदार्थनिरूपिततात्पर्यविषयी-भूतसंसर्गेण योग्यस्यार्थस्य यज्ज्ञानं तज्ज्ञानविषयिणी इच्छा आकाङ्क्षा । 'एकपदार्थज्ञाने' इत्यस्य 'एकपदार्थज्ञानमात्रे' इत्यर्थः, एतेन गामानये-त्यादौ पदार्थद्वयस्यापि ज्ञानं जातं तत्रोक्ताया आकाङ्क्षाया अभावाद् बोधो न स्यादिति परास्तम् । तत्राप्येकपदार्थज्ञानमात्रे तस्या विद्यमानत्वात् । तस्या आकारं प्रदर्शयति—( अस्यान्वय्यर्थः कः इति । पुरुषनिष्ठैवेति—अस्य यद्यपीति शेषो बोध्यः अग्रे तथापीत्यस्य वर्तमानत्वात् । एवकारेण पदादिवृत्तित्वनिरासः । आकाङ्क्षाया इच्छारूपत्वात् पुरुषनिष्ठत्वस्यैवौ-चित्यात् । इदं नैयायिकवासनावासितान्तःकरणं प्रदर्शितम् तैर्हि "बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश" (मु. प्रत्य. ख. का. ३२) इति प्रोच्यते । वेदान्तिमते तु अन्तःकरणधर्मत्वं तस्याः "कामः संकल्पः" इत्यादिश्रुतेः ।

ननु वैयाकरणमते पुरुषनिष्ठत्वेनाकाङ्क्षाया अर्थेऽभावात् 'अयमर्थोऽ-र्थान्तरमाकाङ्क्षति' इति व्यवहारस्य का गतिः स्यादित्यत आह—तथापीति । स्वविषये—आकाङ्क्षाविषये । अर्थे आरोप इति—समवाय सम्बन्धेनार्थे आरोप इत्यर्थः, विषयतासम्बन्धेनाकाङ्क्षा तु अर्थे वर्तत एव । विषयतासम्बन्धस्य वृत्त्यनियामकत्वात् आरोपस्य नानुपयुक्तता । इदमेवेति—अर्थे आकाङ्क्षारोपणमित्यर्थः । अभिधानमुपस्थितिः । अपर्यवसानम्—अपरिसमाप्तिः । साकाङ्क्षार्थेति—एवञ्च साकाङ्क्षपदस्य साकाङ्क्षार्थ-बोधके उपचारः, आकाङ्क्षायाः पदनिष्ठत्वे भाष्यविरोधमाह—समर्थसूत्र इति

ईदृशजिज्ञासोत्थापकं चैकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तस्यान्वयबोधाजनकत्वस्य ज्ञानमिति तद्विषये तादृशान्वयबोधाजनकत्वेऽप्याकाङ्क्षेति व्यवहारः।

यद्वा उत्थापकताविषयतान्यतरसम्बन्धेनोभयसम्बन्धेन वाऽर्थान्तरजिज्ञासा आकाङ्क्षा। आद्यम् 'पश्य मृगोधावति' इत्यत्र, दर्शनार्थस्य कारकधावनाकाङ्क्षोत्थापकत्वं धावनं तु तद्विषय एव। अन्त्यं तु–पचति

---

(पा. सू. २।१।१) शब्दयोरपुरुषत्वेन इच्छारूपव्यपेक्षायास्तत्रासम्भवेन भाष्ये प्रोक्तं—'न ब्रूमः शब्दयोरिति। **अर्थयोरिति** 'राज्ञः पुरुषः' इत्युक्ते 'राजा पुरुषमपेक्षते ममायम्' इति, पुरुषोऽपि राजानमपेक्षते अहमस्येति। शब्दानां वाच्यार्थं प्रति विशेषणत्वादर्थबोधोत्तरमेव जिज्ञासोदयाच्च अर्थे आरोपः न पदे, अस्य भाष्यस्य विरोधादेव—'घटम्' अत्र आधेयतासम्बन्धेन घटप्रकारककर्मताविशेष्यकं घटनिष्ठकर्मत्वमिति बोधंप्रति अव्यवहितोत्तरत्वसम्बन्धेन अम्पदे घटपदवत्त्वं घटपदे वाऽव्यवहितपूर्वत्वसम्बन्धेन अम्पदवत्त्वमेवाकाङ्क्षा, तत्स्मरणं शाब्दबोधे कारणमित्यर्थः इति प्रतिपादयन्तस्तार्किकाः पराहताः। **एकपदार्थ इति** एकपदार्थे 'गाम्' इत्येतावन्मात्रेण सास्नादिमत्पदार्थे ज्ञाते, अपरपदार्थस्य–नय–पदार्थस्य यो व्यतिरेकः, नयपदार्थविषयकज्ञानाभावः, तत्प्रयुक्तस्य अन्वयबोधाजनकत्वस्य शब्दजन्यबोधजनकत्वाभावस्य गोपदार्थे वर्तमानस्य ज्ञानमाकाङ्क्षोत्थापकम्। तद्विषये निरुक्तज्ञानविषये।

**तादृशान्वयबोधेति** — आकाङ्क्षाजनकीभूतज्ञानविषयगोपदार्थनिष्ठान्वयबोधजनकत्वाभावे इत्यर्थः। अत एव तार्किकाः–येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन पदेन सह तस्याकाङ्क्षेत्यर्थः इत्याहुः। पुरुषनिष्ठाया आकाङ्क्षायाः समवायेनार्थे आरोपे गौरवादाह —**यद्वेति**।

आद्यम्–अन्यतरसम्बन्धेन। **दर्शनार्थस्येति**—निष्ठत्वं षष्ठ्यर्थः, धावनरूपकारकविषयकाकाङ्क्षाया उत्थापकत्वं दर्शननिष्ठमिति दर्शने कारकस्य धावनस्य–आकाङ्क्षावैशिष्ट्यमुत्थापकतासम्बन्धेन।

तण्डुलं देवदत्तः, इत्यादौ, क्रियाकारकयोर्द्वयोरपि परस्परं तदुत्थापकत्वात्तद्विषयत्वाच्च ।

अत एव घटः कर्मत्वम् आनयनं कृतिरित्यतो घटमानयेतिवन्नान्वयबोधः । आकाङ्क्षाविरहात् । घटमानयेति विभक्त्यन्ताख्यातान्तयोरेव साकाङ्क्षत्वाच्च ।

योग्यता च परस्परान्वयप्रयोजकधर्मवत्त्वम् । तेन पयसा सिञ्चतीति योग्यम् । अस्ति च सेकान्वयप्रयोजकद्रवद्रव्यत्वं योग्यता जले, करणत्वेन जलान्वयप्रयोजकार्द्रीकरणत्वं योग्यता सेकक्रियायाम् । अत एव वह्निना सिञ्चतीति वाक्यमयोग्यम् । वह्नेः सेकान्वयप्रयोजकद्रवद्रव्यत्वाभावात् ।

---

धावने दर्शनस्य विषयतासम्बन्धेन वैशिष्ट्यम् । तद्विषयः दर्शनविषय इत्यर्थः । अन्त्यम् उभयसम्बन्धेनेति । उभयसम्बन्धेन वैशिष्ट्यमुपपादयति–**क्रियेति** । क्रियाकारकयोः–पाककर्मणोः । तदुत्थापकत्वात्–आकाङ्क्षोत्थापकत्वात् । तद्विषयत्वात्—आकाङ्क्षाविषयत्वात् । अत एव–निरुक्ताया आकाङ्क्षाया एव शाब्दबोधे हेतुत्वादेवेत्यर्थः । **साकाङ्क्षत्वाच्चेति** घटनिष्ठकर्मतानिरूपकानयनाविषयकबोधे घटमिति सुबन्तानयेतितिङन्तपदयोरेव साकाङ्क्षत्वम् ।

इत्याकाङ्क्षानिरूपणम् ।

## अथ योग्यताविचारः,

**तार्किकाः**—तात्पर्यविषयीभूतसंसर्गवृत्तिधर्मे संसर्गताऽवच्छेदकाख्ये सम्बन्धिनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावो योग्यता, तस्या ज्ञानञ्च शाब्दबोधे कारणम्, यथा "जलेन सिञ्चती" त्यत्र सेकः स्वनिरूपित करणतासम्बन्धेन जले, जलञ्च स्वनिष्ठकरणतानिरूपकत्वसम्बन्धेन सेकेऽन्वेतीति जले सेकनिरूपितकरणत्वं नास्तीत्यभावो नास्तीति सेककरणत्वरूपसंसर्गवृत्तिसेककरणत्वत्वस्वरूपसंसर्गतावच्छेदके धर्मे जलरूपसम्बन्धिनिष्ठनिरुक्तात्यन्ताभावीयप्रतियोगितावच्छेकत्वं नास्तीति उक्तप्रतियोगितावच्छेदकत्वाभावरूपयोग्यतायाः सत्त्वात् शाब्दबोधः, "वह्निना सिञ्चति"

एतादृशस्थलेषु नान्वयबोधः किन्तु प्रत्येकं पदार्थबोधमात्रमिति नैयायिकाः। तन्न। बौद्धार्थस्यैव सर्वत्र बोधविषयत्वेन बाधस्याभावात्। हरिरप्याह—अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति च इति। अतो वन्ध्यासुतादिशब्दानां प्रातिपदिकत्वम्। वह्निना सिञ्चतीत्यतो बोधाभावे

---

इत्यत्र वह्निरूपसम्बन्धिनि सेककरणत्वं नास्ति इत्यभावस्य सत्त्वात् सेककरणत्वत्वस्य प्रतियोगितावच्छेदकतया उक्तावच्छेदकत्वाभावरूपयोग्यताया अभावान्न शाब्दबोधः। तत्रापि स्ववृत्तिप्रमेयत्वादिरूपसंसर्गस्य विद्यमानत्वादुक्तं तात्पर्याविषयीभूतेति।

ननु एतस्या योग्यताया ज्ञानं शाब्दबोधात् प्राक् सर्वत्र न सम्भवति वाक्यार्थस्यापूर्वत्वादिति चेत् न तत्तत्पदार्थस्मरणे सति क्वचित् संशयरूपस्य क्वचिन्निश्चयरूपस्य योग्यताज्ञानस्य सम्भवात्, इयमेव योग्यता, बाधाभावरूपाऽपि इत्याहुः, तन्न शाब्दप्रयोज्ये बोधे बाधज्ञानस्याप्रतिबन्धकत्वात्, तदभावज्ञानस्याकारणत्वाच्च। वस्तुतो बाधज्ञानं न क्वापि ज्ञाने प्रतिबन्धकम्, तत्कालेऽपि हि सत्यां सामग्र्यां जायत एव ज्ञानम्।

तत्र स्वस्वसामग्रीवशाद् द्वयोरपि ज्ञानयोर्जातयो यत्र ज्ञाने सदोषसामग्रीजन्यत्वग्रहस्तत्राप्रामाण्यग्रह इत्येव मर्यादा ज्यायसी, यथा 'गेहे घटोऽस्ति गेहे घटो नास्ति' इति परस्परविरुद्धे द्वाभ्यां प्रयुक्ते इत्येतत्सर्वं लघुमञ्जूषायां द्रष्टव्यम्।

स्वमते योग्यतां निर्वक्ति—**परस्परान्वयेति**—परस्परं योऽन्वयः, तस्य प्रयोजको यो धर्मः, तद्वत्त्वं योग्यता। योग्यतास्थलमुदाहरति—**पयसेति**। मूलं स्पष्टमेव। अत एव—एतादृशयोग्यतास्वीकारादेव। अयोग्यतां प्रदर्शयति—**वह्निरिति**—अयमाशयः—वह्निना सिञ्चति इत्यत्र तृतीयार्थकरणताया निरूपकत्वसम्बन्धेनार्द्रीकरणे बाधात्।

**एतादृशस्थलेष्विति**—अयम्भावः—नैयायिकाः योग्यताज्ञानं शाब्दबोधे हेतुं स्वीकुर्वन्ति, योग्यताया अभावात् वह्निना सिञ्चतीत्यादौ शाब्दबोधो न भवति केवलं पृथक् पृथक् पदजन्यप्रतीतिरेव भवतीति

तद्वाक्यप्रयोक्तारं प्रति "अद्रवेण वह्निना कथं सेकं ब्रवीषि" इत्युपहासानापत्तेश्च । वाक्यार्थबोधे जाते बुद्धार्थविषये प्रवृत्तिस्तु न भवति बुद्धार्थेऽप्रामाण्यग्रहादित्यन्यत्र विस्तरः ।"

प्रकृतान्वयबोधाननुकूलपदाव्यवधानम्—आसत्तिः । गिरिरग्निमानित्यासन्नम् । अनासन्नं च-'गिरिर्भुक्तमग्निमान्देवदत्तेन' इति । आसत्तिरपि मन्दबुद्धेरविलम्बेन शाब्दबोधे कारणम् । अमन्दबुद्धेस्त्वासत्त्यभावेऽपि

---

वदन्ति । तन्न—शाब्दिकनये पदार्थानां बुद्धिविषयतावच्छेदकधर्मावच्छिन्नत्वेन तत्र बाधस्यैवाभावात्, बाधज्ञानेऽपि कामलादोषदूषितस्य जनस्य "पीतः शङ्खः" इति शाब्दबोधो भवत्येव । शाब्दबोधे पदार्थोपस्थितेः कारणत्वेन तस्याः सत्त्वे शाब्दबोधस्य ब्रह्मणापि निरोद्धुमशक्यत्वात् । "वस्तुतो बाधज्ञानं न क्वापि ज्ञाने प्रतिबन्धकमि" त्यादि पूर्वोक्तं सङ्ग्राह्यम् । स्वोक्तौ हरिं प्रमाणयति-**हरिरप्याहेति**-"**अत्यन्तासत्यपीति**—अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम्" इति अवशिष्टो भागः कारिकायाः । यो हि वाच्यार्थो बाध्यो नास्ति तस्यापि शाब्दबोधस्तु भवत्येव । अतो बाधज्ञानं न शाब्दबोधे प्रतिबन्धकम्, अन्यथा वन्ध्यासुतादीनां शब्दानामर्थविषयकबोधजनकत्वाभावेनार्थवत्त्वाभावात् प्रातिपदिकत्वं न स्यादिति भावः, तदेवोक्तं "अत" इत्यादिना ।

शाब्दबोधे बाधज्ञानस्याप्रतिबन्धकत्वेऽन्यां युक्तिमाह—**वह्निनेति** । ननु यदि बाधस्थलेऽपि शाब्दबोधो भवति तर्हि शशशृङ्गादीनामानयने-प्रवृत्तिरपि स्यादित्यत आह-**वाक्यार्थबोध** इति । सत्यपि बोधे बाह्यार्थाभावेन अप्रामाण्यग्रहात् प्रवृत्तिर्न भवति, प्रवृत्तौ वस्तुसत्ताया नियामकत्वं न ज्ञानमात्रस्येति भावः ।

इति ज्योत्स्नायां योग्यतानिरूपणम् ।

## अथ आसत्तिनिरूपणम् ।

प्राचीनाभिमतामासत्तिं निरूपयति—**प्रकृतान्वयेति**—ययोः पदयोः परस्परमन्वयबोधजनकत्वे तात्पर्यं तयोः पदयोः प्रकृतस्यान्वयबोधस्याननु-

पदार्थोपस्थितावाकाङ्क्षादितोऽविलम्बेनैव बोधो भवतीति न बोधे तस्याः कारणत्वम्। ध्वनितं चेदं "नपदान्त" सूत्रे भाष्ये।

स्थाल्यामोदनं पचतीत्यादौ स्थाल्यामित्यस्यौदनपदेन व्यवधाने सत्यपि प्रकृतान्वयबोधानुकूलत्वादासन्नत्वाक्षतिः। इत्यासत्तिनिरूपणम्।

---

कूलपदेन—अजनकपदेन अव्यवधानमासत्तिरित्यर्थः। तस्याः स्वरूपसत्याः शाब्दबोधकारणत्वे "गिरिर्भुक्तमग्निमान् देवदत्तेने" त्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमात् अनुभवसिद्धस्य शाब्दबोधस्यापलापापत्तिः स्यात् तस्मात् भ्रमाभ्रमसाधारणं तादृशपदयोरव्यवधानज्ञानमेव शाब्दबोधहेतुतयोपगन्तव्यमिति।

आसत्तेः शाब्दहेतुत्वं तु मन्दबुद्धीनां शाब्दबोधे एव नान्येषां कुशलबुद्धीनामिति। अन्यत्सर्वं सुस्पष्टम्। **भाष्य** इति—स्वरदीर्घ—यलोपविधिषु लोपरूपोऽजादेश एव न स्थानिवत्' इति वक्तव्यम्, चिकीर्षकः, प्रतिदीव्नः '—ब्राह्मणकण्डूतिः, एषु स्थानिवद्भावाभावात् स्वरादयो भवन्ति, पञ्चारत्न्यः, किर्योः, वाय्वोः, एषु स्थानिवद्भावात्स्वर–दीर्घ–यलोपादयो न भवन्ति, इत्युक्त्वा " तत् तर्हि वक्तव्यम्, न वक्तव्यम्, इह हि लोपोऽपि प्रकृतः, आदेशोऽपि, विधिग्रहणमपि प्रकृतमनुवर्तते, दीर्घादयोऽपि निर्दिश्यन्ते, केवलं तत्राभिसम्बन्धमात्रं कर्तव्यम्–स्वर–दीर्घ–यलोप–विधिषु लोपाजादेशो न स्थानिवादिति। आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसम्बन्धः शक्यते कर्तुम्। न चैतान्यानुपूर्व्येण सन्निविष्टानि। अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति, तद्यथा "अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीः, इति। तस्य यथेष्टमभिसम्बन्धः 'उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति " इत्युक्तम्।

अयंभावः—स्वर–दीर्घ–यलोपानामानुपूर्व्येण = पदान्तरेणाव्यवधानरूपासत्त्या सूत्रे पाठाभावेऽपि अनुवृत्तानां लोपादीनां द्विर्वचने लोपादेशस्यासम्भवात्, सवर्णादिविधौ तु तस्यैव सम्भवान्न तेषां लोपो विशेषणम्,

एतद् वाक्यं पदं वा एतदर्थबोधायोच्चारणीयमितीश्वरेच्छा तात्पर्यम्। अत एव सति तात्पर्ये 'सर्वे सर्वार्थवाचकाः' इति शाब्दिकनये घटशब्दात् पटप्रत्ययो नेत्याद्युक्तम्। नानार्थस्थले लोके तात्पर्यन्तु एतत् पदं वाक्यं वा एतदर्थप्रत्ययाय मयोच्चार्यते इति प्रयोक्तुरिच्छारूपम्। तात्पर्यनियामकं च लोके प्रकरणादिकमेव। अतो भोजनप्रकरणे सैन्धवमानयेत्युक्ते सैन्धवपदेन लवणप्रत्ययः, युद्धावसरेऽश्वप्रत्ययः। वेदवाक्ये चेश्वरतात्पर्यादर्थबोधः।

---

पदान्ते तु यद्यपि सम्भवव्यभिचारौ स्तः, तथापि 'पदान्त' इति योगविभागात्तद्विधौ लोपो न विशेषणम्, इति पारिशेष्यात् स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति विज्ञायते। तदुक्तं कैयटेन "स्मृतिशास्त्रत्वाचास्य एतावन्तोऽर्थाः सन्निहिता इत्येतावत् प्रतीयते। ग्रहणवाक्यात्तु लक्ष्यसंस्कारकं प्रक्रियावाक्यमुपप्लवते, इति सिद्धमिष्टमिति। अननुकूलपदस्य कृत्यमाह—स्थाल्यामिति।

इति ज्योत्स्नायां आसत्तिनिरूपणम्।

## अथ तात्पर्यनिरूपणम्।

तात्पर्यं निरूपयति—**एतद् वाक्यमिति। ईश्वरेच्छेति।** अत्रेश्वरपदं प्रयोक्तृमात्रोपलक्षकम्, अन्यथा टिघ्वित्ति पारिभाषिकपदेष्वीश्वरेच्छाया अभावेन शाब्दबोधो न स्यात्; तत्र तत्र तत्तदर्थबोधेच्छया शास्त्रकारमात्रेच्छया तेषामुच्चारणात्। इदमत्राकूतम्—घटमानयेत्यादौ घटकर्मकानयनबोधेच्छयोच्चरितत्वाभावज्ञाने, सति घटे लक्षणया जलादिबोधनेच्छयोच्चारितत्वज्ञाने वा घटकर्मकानयनबोधानुदयेन पूर्वोक्तयोस्तयोर्ज्ञानयोर्घटकर्मकानयनबोधे प्रतिबन्धकत्वकल्पने गौरवेण लाघवात् तथाबोधे 'इदं वाक्यमेतदर्थप्रतीतीच्छयोच्चारितम्, इत्याकारकं घटकर्मकानयनप्रतीतीच्छारूपं वक्तुस्तात्पर्यं तादृशेच्छयोच्चारितमिदं वाक्यम्' इत्याकारकं यत् श्रोतुस्तात्पर्यविषयकं ज्ञानं तच्छाब्दबोधे कारणम्। अन्यथा अनेकविषयकबोधजनकत्वेन गृहीतवाक्यात् बोधनियमो न स्यात्। नानार्थपदस्थले पदविषयोऽपि तात्पर्यग्रहो हेतुः। तात्पर्यग्राहकाश्च संयोगो विप्रयोगश्चेति श्लोकपठिताः संयोगादयो

ननु प्रकरणादीनां शक्तिनियामकत्वे शक्त्यैव निर्वाहे किन्तात्पर्येणेति चेन्न; अस्माच्छब्दादर्थद्वयविशेष्यको बोधो जायते, अर्थद्वये शक्तिसत्त्वात् । तात्पर्यन्तु क्वेति न जानीम इत्यनुभवविरोधात् । अत एव च पय आनयेत्युक्तेऽप्रकरणज्ञस्य दुग्धं जलं वा आनेयमिति प्रश्नः सङ्गच्छते ।

अथ सकलशब्दमूलभूतत्वाद्धात्वर्थो निरूप्यते । तत्र फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः । फलत्वं च तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम् । विभागजन्यसंयोगादिरूपे पतत्यादिधात्वर्थे विभागसंयोगयोः फलत्ववारणायोभयम् । कर्मप्रत्ययसमभिव्याहारे तु फलस्य विशेष्यता ।

---

ग्राह्याः । प्रकरणादिज्ञानाभावे इदं पदं तदर्थकम्, एतदर्थकं वेति संशयः समुत्पद्यते । मौनिलिखितवाक्यस्थलेऽपि सूक्ष्मोच्चारणमस्त्येवेति नैयायिकाः ।

वैयाकरणास्तु—तात्पर्यनिर्णयोपयोगं शाब्दबोधे प्रामाण्यनिश्चयद्वारा प्रवृत्तौ प्रतिपादयन्ति । अर्थात् तात्पर्यज्ञानं शाब्दबोधे प्रामाण्यनिश्चायकम्भवति, शाब्दबोधे पदार्थोपस्थितिर्हेतुः । अत्र तात्पर्यस्वरूपे उभयेऽपि समान एव । मूलं तु सर्वं सुस्पष्टमेव ।

इति ज्योत्स्नायां तात्पर्यनिरूपणम् ।

## अथ धात्वर्थनिरूपणम्

धात्वर्थनिरूपणमारभते—**अथेति**। **तत्रेति**। निरूपणविषयीभूतधात्वर्थफलव्यापारयोर्मध्ये । **यत्नसहित इति** । अवशिष्टम्—यदुद्देशेन श्रुतेर्लोकतो वा प्रवृत्तिरवगता तत्त्वं फलत्वम्—अन्येच्छानधीनेच्छाविषयत्वमिति निष्कर्षः । हरिणाप्युक्तम्—यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः । तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम् ॥ इति । "स्वरितञितः" (पा. १ । ३ । ७२ ।) इति सूत्रेऽपि फलपदस्य प्रवृत्त्युद्देश्यमुख्यफले एव प्रसिद्धेः। एवञ्च तादृशस्य फलस्य धातुवाच्यत्वे विक्लित्त्यनुकूलव्यापारदशायां तण्डुलस्य धात्वर्थतादृशफलाश्रयत्वाभावात् कर्मत्वानुपपत्तेस्तज्जन्यतादृश-

ज्योत्स्ना

फलाश्रयस्य तदापत्तिश्च । अयंभावः—फलपदस्य लोके रूढ्या तादृशार्थोपस्थापकत्वेऽप्यत्र पारिभाषिकार्थपरतैव । अन्यथा सकर्मकत्वादिव्यवहारो दुरुपपादः स्यादित्यत आह–फलत्वञ्चेति अत्र प्राञ्चः धातुवृत्तिवृत्तिविशिष्टत्वम्, वै. स्वविषयकबोधोत्पाद्योपस्थितिविषयत्व स्वविषयकबोधोत्पाद्योपस्थितिनिरूपितविषयतावद्व्यापारविशिष्टत्वैतदुभयसम्बन्धेन । व्यापारवैशिष्ट्यञ्च—स्वजन्यत्वनिष्ठप्रकारतानिरूपितप्रतीतिविषयत्व—स्वप्रयोज्यत्वनिष्ठप्रकारतानिरूपितप्रतीतिविषयत्वैतदन्यतरसम्बन्धेन । स्वप्रयोज्यत्वनिवेशेन सत्तारूपफले, वारिधात्वर्थे संयोगानुकूलव्यापाराभावरूपफले च नाप्रसङ्गः, तत्र जन्यत्वाभावेऽपि स्वरूपसम्बन्धरूपप्रयोज्यत्वस्य वर्तमानत्वात् । गम्याद्यर्थव्यापारजन्यविभागादावतिव्याप्तिवारणाय आद्यः सम्बन्धः । तदर्थव्यापारेऽतिव्याप्तिनिवारणाय द्वितीयः सम्बन्धः । तच्च फलत्वं विक्लित्त्यादीनामक्षतम्—तेषां पच्यादिधातुनिष्ठवृत्तिज्ञानजन्योपस्थितिविषयत्वेन, तथाविधोपस्थितव्यापारजन्यत्वेन च लक्षणसमन्वयात् ।

नवीनमतमनुसृत्य फलत्वं परिष्करोति–तद्धात्वर्थेति । जन्यता चात्रारोपिताऽनारोपिता च । अत एव 'ईश्वरस्तिष्ठति' पत्ये शेते इत्यादौ वास्तविकजन्यत्वाभावेऽपि–आरोपितजन्यत्वमादाय लक्षणसमन्वयः कर्तुं शक्यते । **विभागजन्येति**—विभागजन्यसंयोगः पतधात्वर्थः । अत्र विभागस्य फलत्ववारणाय-तद्धात्वर्थजन्यत्वे सतीति विशेषणम् । अन्यथा विभागाश्रयस्य वृक्षादेः कर्मत्वापत्तेः । अत्रैव संयोगस्य फलत्ववारणाय विशेष्यदलम् । अत एव भूम्यादेः संयोगाश्रयत्वेऽपि न कर्मत्वम् । कर्माख्याते फलस्य विशेष्यतयैव भानात्तत्राप्रसङ्गवारणाय कर्तृप्रत्ययसमभिव्याहार इति । अकर्मकधातूनां व्यापारमात्रमर्थ इति मतानुसारेणेदम् । समन्वयस्तु-तद्धातुः-प्रकृतपच्यादिधातुः, तदर्थो यो व्यापारः, तज्जन्यत्वं फले । एवं तद्धात्वर्थः-प्रकृतधात्वर्थो व्यापारः । तत्र शाब्दबोधीयविशेष्यतासत्त्वेन तन्निरूपितप्रकारता फले-विक्लित्त्यादावक्षता । अत्र नवीनमते

व्यापारत्वञ्च - धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम् । अनुकूलत्वं संसर्गः । अनुकूलत्वं च - फलनिष्ठजन्यतानिरूपितजनकत्वम् ।

---

अनुगतफलत्वनिरुक्तेरभावात्, विभागजन्यसंयोगे पतधात्वर्थत्वाभावस्य-वक्ष्यमाणतया व्यावर्त्याऽप्रसिद्धेश्चेत्यस्य मतस्य युक्तायुक्तत्वं सुधीभिः स्वयमाकलनीयम् ।

**व्यापारत्वञ्चेति**—धातुवाच्यत्वस्य फलेऽपि सत्त्वात् तत्रातिव्याप्ति-वारणाय सत्यन्तविशेषणम् । काष्ठतण्डुलादिकरणादीनामपि व्यापारस्य फलजनकत्वेन विशेषणमात्रोपादानेऽतिव्याप्तिवारणाय विशेष्यांशः । काष्ठादिव्यापाराणां धात्वर्थत्वविवक्षायान्तु तेषामपीष्टमेव व्यापारत्वम् । अतएव काष्ठं पचति, स्थाली पचतीति सङ्गच्छते । वस्तुतस्तु—पदान्तर-समभिव्याहाराप्रयोज्यसाध्यत्वप्रकारकाऽभिधानविषयत्वं व्यापारत्वम् । अभि-धानस्य प्रकारतावत्त्वं विषयतानिरूपकत्वंचौपचारिकम्, तादृशसाध्यत्व-प्रकारकप्रतीतिविषयत्वमिति यावत् । "घटं करोति" इत्यादौ कृञ् समभिव्याहारे घटादीनामपि साध्यत्वेन प्रतीतेरतिप्रसङ्गभङ्गाय पदान्तर-समभिव्याहाराप्रयोज्येतिप्रतीतिविशेषणम्, तत्समभिव्याहारे तेषां तत्त्वेनाप्रतीतेः । अधिश्रयणाद्यधःश्रयणपर्यन्तक्रियाकलापस्य पदान्तर-समभिव्याहारमन्तरेणापि साध्यत्वेन प्रतीयमानत्वादुक्तव्यापारत्वमाविकल-मिति तदवच्छिन्ने पच्यादिधातुवाच्यता नानुपपन्नेति भावः । मूलोक्त-लक्षणं तु चिन्त्यम् "क्वचित्तु फलांशाभावादकर्मकत्वं, यथा अस्त्यादौ केवलं सत्तादिरेवार्थः" इति वक्ष्यमाणग्रन्थस्य फलप्रतीत्यभावात् व्यापारमात्रमर्थ इति तात्पर्यात् तत्र तल्लक्षणस्याव्याप्तेरिति तु तत्त्वम् । नागेशभट्टोक्तं व्यापारलक्षणं प्रत्याचक्षाणा दर्पणकारास्तु "अत एव न तज्जन्यत्वे सति तज्जन्यजनकत्वरूपं तन्त्रान्तरप्रसिद्धव्यापारलक्षणम् । जनकत्वस्य कारणत्वरूपत्वेन तदवच्छिन्नस्य धातुवाच्यत्वे साक्षाद् विक्लित्तिजनकान्तिमाग्निसंयोगदशायामेव पचतीति प्रयोगः स्यान्नत्व-धिश्रयणादिदशायामपि । तेषामन्तिमाग्निसंयोगेन अन्यथासिद्धतया विक्लित्त्यजनकत्वात्" इत्याहुः तन्न सम्यक्—पञ्चस्वन्यथासिद्धेषु

" भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि "

इति निरुक्तोक्तेर्व्यापारमुख्यविशेष्यको बोधः। तत्र तिङ्वाच्यं संख्याविशिष्टकारकम्, कालश्च व्यापारविशेषणम्॥

---

कस्याप्यभावात्। अन्यथासिद्धं हि तदेव येन विनापि कार्यसिद्धिः स्यात्। प्रकृते तु नाधिश्रयणादिव्यापारमन्तरा विक्लित्त्यादिसिद्धिः। अनया रीत्या-अन्यथासिद्धत्वसम्पादने घटंप्रति कपालस्यैव कारणत्वेन निर्वाहे दण्डचक्रकुलालादीनामन्यथासिद्धत्वापत्तेः। अतएव तथाखण्डनं प्रमादमूलकमेवेति शास्त्ररसिका विद्वांसः प्रमाणम्।

ननु प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन — प्रत्ययवृत्तिवृत्तिज्ञानजन्योपस्थितिः कारणमिति कार्यकारणभावमूलिकया प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति व्युत्पत्त्या प्रत्ययार्थप्राधान्यापत्तिरतआह— **भावप्रधानमिति** — अत्राख्यातं भावप्रधानमिति योजना, आख्यातस्योद्देश्यत्वात्, भावप्रधानस्य विधेयत्वाच्च। आख्यातं-लक्ष्यम्। भावप्रधानं लक्षणमिति यावत्। आख्यातं-**तिङन्तम्**। आख्यातस्य भावप्रधानत्वं च तिङर्थनिष्ठप्रकारतानिरूपितविशेष्यताशालिभावप्रतिपादकत्वम् नतु इतराविशेषणत्वरूपं पचति भवतीत्यादिवाक्यघटकपच्याद्यर्थक्रियायां तदसत्त्वेन पचतीत्याख्यातेऽव्याप्तेः। भावोऽत्र क्रिया, सा च करणव्युत्पत्त्या व्यापारं कर्मव्युत्पत्त्या च फलं बोधयति। एवञ्च कर्मतिङि फलस्य प्राधान्यमिति सिद्धान्तेऽपि न क्षतिः। **सत्त्वप्रधानानीति**—अत्रापि पूर्ववदेवोद्देश्यविधेयभावकल्पनम् लक्ष्यतावच्छेदकं च कृदाद्यन्तप्रकृतिकविभक्त्यन्तत्वरूपं नामत्वम्। प्रकृतिः प्रत्ययः विभक्तिरित्येतन्नाम सत्ता द्रव्यम्, लिङ्गम्, संख्या, च नामार्थ इति तद्भाष्यात्। सत्त्वप्रधानानीति लक्षणम्। सत्त्वं-द्रव्यं प्रधानं यत्रेति बहुव्रीहिः लिङ्गादिनिष्ठप्रकारतानिरूपितविशेष्यताशाल्यर्थप्रतिपादकत्वम्।

**व्यापारमुख्येति** शाब्दिकनय इति शेषः तिङर्थः- कर्तृकर्म संख्याकालाः। तत्र कर्तृकर्मणी फलव्यापारयोर्विशेषणे, संख्या कर्तृप्रत्यय-

परे तु फलव्यापारयोर्धातोः पृथक्शक्तावुद्देश्यविधेयभावेनान्वयापत्तिस्तयोः स्यात् । पृथगुपस्थितयोस्तथा अन्वयस्यौत्सर्गिकत्वात् । किञ्चैकपदे व्युत्पत्तिद्वयकल्पनेऽतिगौरवम् ।

---

कर्त्तरि, कर्मप्रत्यये कर्मणि, समानप्रत्ययोपात्तत्वात् । एवञ्च "आख्यार्थसंख्याप्रकारकबोधं प्रति आख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुः" इति कार्यकारणभावः फलितः । तदेवोक्तं—**संख्याविशेष्टेति** । अत्र संख्यावैशिष्ट्यं समवायसम्बन्धेन बोध्यम् । अत्र प्राचीनाः—अत एव "फलव्यापारयोर्धातुः" इति द्विवचनान्तनिर्देशोऽपि संगच्छते । धातोः फले व्यापारे च पृथक् शक्तिर्न तु फलविशिष्टव्यापारे । "एकवृन्तगतफलद्वय" न्यायेन पृथगुपस्थितिप्रयोजिका खण्डशः एकैव शक्तिरिति वा । विशिष्टशक्तिस्वीकारे पदार्थैकदेशत्वात् फलस्य द्वितीयादिपदार्थान्तरान्वयो न स्यात् ।

नन्वेवमपि विभिन्नपदजन्योपस्थितिविषययोरेव बोध इति व्युत्पत्तेः, कथमेकधातूपस्थितिविषययोः फलव्यापारयोरन्वय इति चेन्न ? लिङाद्यर्थयोश्च परस्परान्वयबोधदर्शनेन तादृशव्युत्पत्तेः संकोचनीयतया फलव्यापारयोरपि परस्परमन्वयबोधसम्भवात् । नव्यनैयायिकैरपि स्वीकृतत्वाच्च । फलव्यापारयोरेवादावन्तरङ्गत्वादन्वयस्तदनन्तरमेवार्थान्तरेणान्वयोऽनुभूयते ।

अत एव गमनं न स्पन्द इति वाक्यान्न फले स्पन्दान्वयानुभवः विशेष्यभूतव्यापारे तद्बोधात्, फलस्येतरविशेषणत्वापन्नत्वादिति भावः ।

अभेदेन स्तोकादेरन्वयो भवत्येव, व्युत्पत्तिवैचित्र्यात् । एवञ्च कर्मधारयस्य भेदेनापि न स्तोकं पचतीत्यादेरसंगतिरिति प्रतिपादयन्ति । स्वमतमाह—परे त्वित्यादि— । **उद्देश्यविधेयभावेनेति** । अयमाशयः— फले व्यापारे च पृथक् शक्तिस्वीकारे व्यापारोद्देश्यकफलविधेयकबोधस्य, फलोद्देश्यकव्यापारविधेयकबोधस्य चापत्तिः, तादृशबोध प्रयोजिकायाः पृथगुपस्थितेः सत्त्वात् । विशिष्टशक्तिमते तु न तादृश बोधापत्तिस्तत्प्रयोजिकायाः पृथगुपस्थितेरुद्देश्यविधेयभावेनान्वयबोध-

तथाहि — फलविशेषणकव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्, व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पनम्, धातोरर्थद्वये शक्तिद्वयकल्पनं, धातोर्बोधजनकत्वसम्बन्धद्वयकल्पनं चातिगौरवम्। तस्मात्फलावच्छिन्ने व्यापारे, व्यापारावच्छिन्ने फले च, धातूनां शक्तिः, कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामक इत्याहुः॥

---

जनकत्वं न प्रमाणसिद्धम्—पटपदादिजन्योपस्थितिविषययोः पटत्वपटाद्योरन्वयबोधाभावानुभवस्य प्रमाणत्वात्। उद्देश्यविधेयभावेनान्वयबोधे धातुजन्योपस्थितेः फलव्यापारविषयिण्याः प्रतिबन्ध्यप्रतिबन्धकभावकल्पनं तु न युक्तं गौरवापत्तेः। **तथा अन्वयस्येति**—उद्देश्यविधेय भावेनान्वयस्येति भावः।

ननु उद्देश्यविधेयभावेनान्वयनियामकव्युत्पत्तौ धातुभिन्नत्वविशेषणदानेनादोषः। तथाविधस्यान्वयबोधस्यौत्सर्गिकत्वे तु न किमपि प्रमाणम्। अत एव [एक] हर्यादिपदोपस्थापितानां सूर्यसिंहादीनामुद्देश्यविधेयभावेन नान्वयबोधः। तथाबोधे विभिन्नपदोपस्थाप्यार्थयोरेव कारणत्वात्। एवं च नायं पृथक् शक्तिवादिनां प्राचां दोष इत्यत आह **किञ्चेति**। गौरवमेव प्रदर्शयति—**तथाहीत्यादिना**। अनुकूलत्वसम्बन्धावच्छिन्नफलवृत्तिप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति कर्तृप्रत्यय—समभिव्याहृतधातुजन्यव्यापारोपस्थितिः कारणम्। एवं जन्यत्वसम्बन्धावच्छिन्नव्यापारवृत्तिप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति कर्मप्रत्ययसमभिव्याहृतधातुजन्यफलोपस्थितिः कारणमिति कार्यकारणभावद्वयं कल्पनीयं स्यादिति भावः।

**कार्यकारणेति**। स्यादिति शेषः। **धातोरर्थद्वयइति**। तथा च नानाधर्मावच्छिन्नशक्तिनिरूपकतावच्छेदकनैकधर्मवत्त्वरूपनानार्थकत्वं हरिशब्दादिवद्धातोरपि स्यादित्याशयः। **धातोरिति**। फलनिरूपितव्यापारनिरूपितस्वस्वविषयकबोधजनकत्वरूपसम्बन्धद्वयकल्पनम्। किञ्च पृथक्

ज्योत्स्ना

शक्तिवादे तत्पदजन्यतद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति अपरपदजन्यपदार्थोपस्थितिः कारणमिति व्युत्पत्तेस्त्यागस्य व्युत्पत्त्यन्तरस्य च कल्पनीयतया गौरवमित्यपि बोध्यम्। न च भवन्मतेऽपि तादृशाविशिष्ट विषयकोपस्थितिद्वयस्य कारणतायास्तथाविधेऽर्थद्वये शक्तिद्वयस्यच कल्पनीयतया साम्यमिति वाच्यम्। बोधजनकत्वस्य विषयासम्बद्धेऽनुपपत्त्या तत्तत्प्रत्ययसमभिव्याहृतधातौ विशिष्टद्वयनिरूपितसंबन्धद्वयस्य कल्पनीयतया गौरवस्याधिक्यात्। अन्यथा शक्तेरुच्छेदः। अनयैव रीत्या पृथक्शक्तिकल्पना पराहननीया।

ननु प्राचीनमतस्य दोषग्रस्तत्वात्-धातूनां कुत्र शक्तिः कल्पनीयेति जिज्ञासायामाह—**फलावच्छिन्न इति**—अनुकूलत्वसम्बन्धेन फलविशिष्टे व्यापार इत्यर्थः, नन्वेवं कर्मप्रत्ययस्थले व्यापारप्रकारकफलविशेष्यकबोधो न स्यात्। तत्प्रकारकशक्तिग्रहस्याभावात्। शक्तिज्ञानशाब्दबोधयोः समानप्रकारकत्वनियमादत आह—**व्यापारावच्छिन्न इति**—जन्यत्वसम्बन्धेन व्यापारविशिष्टे इत्यर्थः। ननु विशिष्टशक्तिस्वीकारे विनिगमनाविरहात् सर्वत्रोभयविशेष्यकबोधापत्तिरत आह-**कर्तृकर्मार्थेति**-कर्तृभावप्रत्ययसमभिव्याहारः फलविशिष्टव्यापारबोधे नियामकः। कर्मप्रत्ययसमभिव्याहारो व्यापारविशिष्टफलबोधनियामकः।

न च विशिष्टद्वये शक्तिज्ञानद्वयस्य धातुजन्यविशिष्टविषयोपस्थिति—द्वयस्य च शाब्दबोधं प्रति हेतुत्वं कल्पनीयमिति गौरवमिति वाच्यम्। प्रामाणिकत्वेन तस्यादोषत्वात्। केचित्तु न विशिष्टे शक्तिः, तथा सति विनिगमनाविरहेण विशिष्टव्यापारत्वस्य विशिष्टफलत्वस्य च गुरुभूतस्य शक्यतावच्छेदकत्वे गौरवात्। फलव्यापारयोः पदार्थैकदेशत्वेन तत्र कर्तृकर्मादीनामन्वयासम्भवाच्च। अपरं दूषणं तूभयपक्षे समानमेव। मम तु एकवृन्तावलम्बिफलद्वयवत् उभयांशे एका खण्डशश्शक्तिरिति न शक्तिद्वयकल्पनं न वा बोधजनकत्वसम्बन्धद्वयकल्पनम्। प्रत्युत नवीनानामेव कल्पनीयं भवेदित्यपरोक्षमेव शास्त्रकीटानामित्याहुः।

यत्तु मीमांसकाः फलं धात्वर्थो, व्यापारः प्रत्ययार्थ इति वदन्ति । तन्न "लः कर्मणि" इत्यादिसूत्रविरोधापत्तेः । नहि तेन व्यापारस्य प्रत्ययार्थता लभ्यते ।

किञ्च पचति पक्ष्यति पक्वानित्यादौ फूत्कारादिप्रतीतये तत्रानेकप्रत्ययानां शक्तिकल्पनापेक्षयैकस्य धातोरेव शक्तिकल्पनोचिता ।

किञ्च फूत्कारादेः प्रत्ययार्थत्वे गच्छतीत्यादौ तत्प्रतीतिवारणाय तद्बोधे पचिसमभिव्याहारस्यापि कारणत्वकल्पनेऽतिगौरवम् ।

---

वस्तुतः नवीनमते यद्यपि गुरुभूतशक्यतावच्छेदकत्वे गौरवं तथापि प्राचीनमते शक्तिद्वयकल्पने शाब्दबोधे तद्विषयकज्ञानद्वयकल्पने च महद्गौरवम् । पदार्थः पदार्थेनान्वेतीति व्युत्पत्तेरनित्यत्वेनापि पदैकदेशान्वयो भवितुमर्हति । अन्यस्य गौरवस्य प्रामाणिकत्वेनादोषत्वात्, नवीनमते दोषोद्घाटनं कीटानां स्वभाव एवेति शुक्लः । मीमांसका इति मण्डनमिश्रा इत्यर्थः ।

अयं भावः—पचादीनां धातूनां विक्लित्त्यादयः फलमेवार्थः । तदनुकूलव्यापारस्तु आख्यातार्थः । लडाद्यर्थवर्तमानत्वादीनां व्यापारेऽन्वयः एकपदोपात्तत्वात् । फलस्याख्यातार्थव्यापारं प्रति विशेषणत्वम् । पाक इत्यत्रापि घञर्थ एव व्यापारः । कर्तृत्वमपि प्रत्ययार्थव्यापाराश्रयत्वम् प्रत्ययार्थव्यापारव्यधिकरणफलाश्रयत्वमेव च कर्मत्वम् । देवदत्तेन पाक इत्यत्र तृतीयार्थ एव व्यापारः । फलरूपक्रियावाचकत्वमेव च धातुत्वमिति वदन्ति । मिश्रमतं खण्डयति—**तन्नेति । लः कर्मणीत्यादीति**—अत्र हि चकारात् "कर्त्तरि कृत्" इति सूत्रात् कर्त्तरीत्यनुकृष्यते । बोधकतारूपां तिबादिशक्तिं तत्तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्मणि कर्त्तरि चानेन विधीयन्ते । एवञ्च कर्तृकर्मणोरेव प्रत्ययार्थत्वं लभ्यते न तु व्यापारस्येति ।

ननु सूत्रे भावप्रधाननिर्देशेन लकाराः कर्तृत्वे कर्मत्वे च विधीयन्ताम् । कर्तृत्वं—कृतिः । कर्मत्वं च फलमेवेति व्यापारस्य प्रत्ययार्थत्वं निर्बाधमेवेत्यत आह—**किञ्चेति** । ननु अनेकधातूनां तत्र शक्तिकल्पने तथैव गौरवमित्यत

किञ्च सकर्मकाकर्मकव्यवहारोच्छेदापत्तिः । न च प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्, तन्मते तत्समानाधिकरणफलवाचकत्वमकर्मकत्वं च, प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वम्, घटं भावयतीत्यादौ णिजर्थव्यापारव्यधिकरणफलाश्रयत्वेन घटादेः कर्मत्वमिति वाच्यम् । अभिधानानभिधानव्यवस्थोच्छेदापत्तेः । न च व्यापारेणाश्रयाक्षेपात्कर्तुरभिधानम्, कर्माख्याते च प्रधानेन फलेन स्वाश्रयाक्षेपात्कर्मणोऽभिधानमिति वाच्यम् । जातिशक्तिवादे जात्याक्षिप्तव्यक्तेरिवाश्रयप्राधान्यापत्तौ "क्रियाप्रधानमाख्यातम्" इति यास्कवचोविरोधापत्तेः ।

---

आह—किञ्चेति—अयमाशयः फूत्कारादेः प्रत्ययार्थत्वे गच्छतीत्यादौ प्रत्ययस्य समानत्वेन फूत्कारविषयकबोधवारणाय "आख्यातार्थफूत्कारत्वावच्छिन्नविषयकशाब्दबोधं प्रति पच्धातुसमभिव्याहृततिङ्पदजन्योपस्थितिः कारणमित्यनेककार्यकारणभावकल्पनेऽतिगौरवम् । अतो धातोरेव तत्र शक्तिकल्पनं न्यायः ।

ननु सामान्यतो धातोर्व्यापारवाचकत्वे पूर्वोक्तदोषस्य दुरुद्धरत्वेन तत्तद्धातुसमभिव्याहारस्य कारणत्वमवश्यमेव वक्तव्यम् । तथा च व्यापारस्य प्रत्ययवाच्यत्वमत इव धातुवाच्यत्वमतेऽपि समानमेव गौरवमित्यत आह—किञ्चेति—सकर्मकाकर्मकेति—इदमत्राकूतं-व्यापारस्य धातुवाच्यत्वे स्ववाच्यव्यापाराधिकरणभिन्नवृत्तिफलवाचकत्वं सकर्मकत्वमिति सकर्मकत्वाकर्मकत्वव्यवस्था संगच्छते, प्रत्ययार्थत्वे तु सा न स्यात् । व्यापारस्य प्रत्ययार्थत्वेऽपि सकर्मकाकर्मकत्वव्यवस्थां समुपपादयति—प्रत्ययार्थेति—तत्समानेति प्रत्ययार्थसमानेत्यर्थः ।

ननु प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वमिति नये घटं भावयतीत्यत्र घटस्य कर्तृत्वाभावात् "गतिबुद्धि-" इति कर्मत्वं न स्यात्, तेन कर्तुरेव कर्मत्वविधानादित्यत आह—घटमित्यादीति । णिजर्थेति—णिजर्थव्यापारप्रयोज्यफलाश्रयत्वेन प्रयोज्यकर्तुः "कर्तुरीप्सित"इति कर्मत्वं भविष्यतीति भावः । अभिधानानभिधानेति । अयंभावः "अनभिहिते" इत्यधिकृत्य कर्मणीत्यादौ द्वितीयातृतीयादयो विधीयन्ते ।

किञ्च फलस्य धातुना तदाश्रयस्य चाक्षेपेण लाभसम्भवेन "लः कर्मणि" इत्यस्य वैयर्थ्यापत्तेः। कर्मकर्तृकृतां कारकभावनोभयवाचकत्वे गौरवाच्च।

किञ्च भावविहितघञादीनां व्यापारावाचकत्वे ग्रामो गमनवानित्याद्यापत्तिः। तद्वाचकत्वे तेनापि स्वाश्रयाक्षेपे कर्त्तुरभिधानापत्तिः।

किञ्च 'गुरुः शिष्याभ्यां पाचयति' इत्यादौ "हेतुमतिच" इति सूत्रबलात् प्रयोजकव्यापारस्य णिजर्थत्वे स्थिते प्रयोज्यव्यापार आख्यातार्थो वाच्यः।

---

तिङोव्यापारवाचकत्वे कर्तृकर्मणोरनभिधानेन व्यापारस्य चाभिधानेन द्वितीयादीनां नियमानुपपत्तिः स्यात्। **वैयर्थ्यापत्तेरिति**। कर्मणि लकारविधानवैयर्थ्यापत्तेरित्यर्थः। एवञ्च 'इत्यस्य' इत्यस्य इत्यनेनेत्यर्थः। अर्थप्रकाशकारास्तु "लः कर्मणिचेति" सूत्रे योगद्वयं 'लः कर्मणि' चेत्येको योगः। "भावेचाकर्मकेभ्य" इत्यपरः। तत्र प्रथमयोगवैयर्थ्यापत्तेरित्यभिप्रायमाहुस्तन्न, योगद्वयकल्पनस्य गौरवग्रस्तत्वात्। भाष्यादिषु योग विभागस्यादृष्टत्वाच्च। **कर्मकर्तृकृतामिति** कर्मणि कृतां कर्त्तरि कृतां चेत्यर्थः। एवञ्च धातोर्व्यापारावाचकत्वे तत्प्रतीतये पाचक इत्यादौ ण्वुलः कर्त्तृव्यापारयोः शक्तिकल्पने गौरवमिति भावः।

यदि गौरवादुभयवाचकत्वं कृतां नाङ्गीक्रियते तदा दूषणान्तरमुद्भावयति–**किञ्चेति**–अयं भावः—एतन्मते धातोर्व्यापारावाचकत्वे संयोगमात्रमेव गमधात्वर्थः। कृतोऽपि व्यापारे शक्त्यभावे, गमनपदे ल्युटोव्यापारार्थकत्वाभावेन ग्रामस्य संयोगाश्रयत्वात्, ग्रामः संयोगवानितिवत्, ग्रामोगमनवानिति प्रयोगापत्तिः। **तद्वाचकत्व इति**। अत्र (तु) इति शेषः। व्यापारवाचकत्वे तु इत्यर्थः। ल्युटोव्यापारार्थकत्वे ग्रामस्य व्यापाराश्रयत्वाभावेनोक्तप्रयोगवारणेऽपि व्यापारेण कर्त्तुराक्षेपे उक्तत्वात् कर्त्तरि प्रथमापत्ति रित्याशयः। तेनापि—व्यापारेणापि। स्वाश्रयाक्षेपे—व्यापाराश्रयाक्षेपे। धातोः फलमात्रवाचकत्वे दूषणान्युक्त्वा तिङोव्यापारार्थकत्वे दूषणान्युपन्यस्तुमुपक्रमते—**किञ्चेति**—स्ववाचकेति, स्वपदेन संख्या गृह्यते।

एवञ्च सङ्ख्यायाः स्ववाचकाख्यातार्थव्यापारेऽन्वयिन्येवाऽन्वया-च्छिष्याभ्यामिति द्विवचनानापत्तिः । पाचयतीत्येकवचनानापत्तिश्च । गुरोरनाभिधानेन तत्र प्रथमाया अनापत्तेश्च । शिष्यशब्दात्तदापत्तेश्चेत्यन्यत्र विस्तरः । सर्वकारकान्वयितावच्छेदकधर्मवती क्रिया ।

तदाह—यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ॥
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥ १ ॥
गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ॥
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥ २ ॥

---

संख्यावाचकस्याख्यातस्यार्थो यो व्यापारस्तस्मिन् अन्वयिनि प्रयोज्येऽन्वयात् तत्र द्विवचनं न स्यादित्यर्थः । तदापत्ते–प्रथमापत्तेरित्यर्थः । न चात्र फलं धात्वर्थो व्यापारानुकूलप्रयोजकव्यापारो ण्यर्थः, तत्र फलस्यानुकूल-तयाऽऽद्यव्यापारेऽन्वयः, तिङस्तु कालसंख्ये प्रयोजकव्यापारश्चार्थः द्वावित्यादिवन्न बोधावृत्तिः प्रधानत्वात् "लः कर्मणी"त्यादिसौत्रानुवादबलाच्च प्रयोजकव्यापारेणैव धर्मिण आक्षेपः । "अनभिहित" इत्यादेश्च शक्त्याक्षेपे साधारणाबोधित इत्येवार्थ इति न दोष इति वाच्यम् । "हेतुमतिच" इति सूत्रेण तथाऽलाभात् । उक्तरीत्याऽक्लेशेनैव सकल-सामञ्जस्ये क्लिष्टकल्पनानुपयोगादुक्तदोषप्रासाच्चेति दिक् । तदाह–इत्यन्य-त्रेति—गुरुमञ्जूषायामित्यर्थः । **सर्वकारकेति** । सर्वेषां कारकाणां धात्वर्थक्रियायामेवान्वयेन अन्वयिता क्रियायाम् अन्वयितावच्छेदकं क्रिया-त्वम् । एवञ्च कारकान्वयितावच्छेदकधर्मवत्त्वं क्रियात्वमिति सिद्धम् । एतच्च स्वरूपकथनं नातोऽन्योन्याश्रयः । तदुक्तं भूषणे "सम्बोधनान्तं कृत्वोऽर्थ" इत्यादि ।

ननु यथा 'किङ्करोति' इति प्रश्ने 'पचति' इत्युत्तरं भवति, एवम् 'अस्ति' इत्युत्तराभावादस्त्यादीनां क्रियावाचकत्वं न स्यादत आह—यावदिति । सिद्धम्—भूतकालावच्छिन्नम्, अपाक्षीत्, इत्यादौ । असिद्धम्—भूतकालानवच्छिन्नम्—वर्तमानकालावच्छिन्नम् —भविष्यत् कालावच्छिन्नञ्च, 'पचति' 'पक्ष्यति' इत्यादिस्थले । यावत्साध्य-

इति भूवादिसूत्रस्थभाष्यार्थप्रतिपादकहरिग्रन्थात्। क्रमजन्मनां व्यापाराणां समूहं प्रति गुणभूतैरवयवैर्युक्तः सङ्कलनात्मिकयैकत्वबुद्ध्या प्रकल्पिताभेदरूपः समूहः क्रियेति व्यवह्रियत इति द्वितीयकारिकार्थः। अत्रावयवाश्रयं पौर्वापर्यं समुदायाश्रयमेकत्वम्। क्षणनश्वराणां व्यापाराणां वस्तुभूतसमुदायाभावात् बुद्ध्येत्युक्तम्। पचति पक्ष्यतीत्यादावसिद्धम्। अपाक्षीदित्यादौ सिद्धमसिद्धं वा साध्यत्वेनाभिधीयमानं क्रिया। आश्रितेति योगदर्शनं कृतम्, अवयवानां क्रमेणोत्पत्त्या। अत एवाश्रितक्रमरूपा क्रियेति आदिमकारिकार्थः। एकैकावयवेऽपि समूहरूपारोपादधिश्रयणकालेऽपि पचतीति व्यवहारः। तदुक्तम्—

एकदेशे समूहे वा व्यापाराणां पचादयः।
स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः॥ इति।

---

त्वेनाभिधीयते सा—आश्रितक्रमरूपत्वात्—आश्रितमधिश्रयणाद्यवयवानां क्रमरूपं पौर्वापर्यं यया सा तत्त्वात्। क्रियतेऽवयवानां क्रमेणोत्पत्त्या या सा क्रियेत्यन्वर्था संज्ञेत्यर्थः। क्रमरूपं पौर्वापर्यमाश्रित्य साध्यत्वेन विवक्षितोऽर्थः क्रियेति भावः। यत्र चास्त्यादौ पौर्वापर्याभावस्तत्राप्यारोपेण रूढ्या वा क्रियात्वं बोध्यम्। 'घटः क्रियते' इत्यत्रापि क्रियाद्वारैव घटस्य साध्यत्वम्। न हि 'घट' इत्येतावन्मात्रात् साध्यत्वं प्रतीयते। 'क्रियते' इत्येतत्तु स्वत एव साध्यत्वं गमयतीति तदेव क्रियावाचकत्वमस्त्यादावपि साधयिष्यतीति। नन्वेव 'मका क्रिया' इति व्यवहारः कथं संगच्छते अत आह—**गुणभूतैरिति**। क्रमजन्मनामिति क्रमेण पौर्वापर्येण जन्म—उत्पत्तिर्येषां तेषां फूत्कारादिव्यापाराणां समूहे बुद्धिकल्पितमेकत्वमाश्रित्यैकत्वव्यवहार इत्यर्थः। ननु व्यापारसमुदायस्य क्रियात्वे अधिश्रयणाद्येकैकव्यापारकाले 'पचती'ति प्रयोगो न स्यात्, अवयवस्य क्रियात्वाभावादित्यत आह—**एकैकावयवेऽपीति**। अयं भावः अधिश्रयणारम्भ एव फलाभिसन्धेः समस्तक्रियाकलापस्तत्रैवाध्यस्यते। तस्यैव च भूतत्वादिविवक्षायामपाक्षीदित्यादयोऽपि प्रयोगाः। अत्रैव हरिं प्रमाणयति—**तदुक्तमित्यादिना**। नन्वारोपे किं प्रमाणमिति चेन्न, तस्मिन्नपि काले पचतीति

अत्र केचित्-सिद्धत्वम्-क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजात्यवत्त्वे सति कारकत्वेन क्रियान्वयित्वे सति कारकान्तरान्वयायोग्यत्वम्। साध्यत्वं च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं सत् कारकान्तरान्वययोग्यतावच्छेदकरूपवत्त्वम्। हिरुगाद्यव्ययानां साध्यत्वाभावेऽपि वाचकत्वव्यवहारस्तु क्रियामात्रविशेषणत्वात्। तत्र सिद्धत्वं पाक इत्यादौ क्रिया घञादिवाच्यम्। साध्यत्वं तु सर्वत्रैव धातुप्रतिपाद्यम्।

ननु 'हरिं नमेच्चेत्सुखं यायात्' इत्यत्र क्रियाया अपि क्रियान्तराकाङ्क्षत्वेन सिद्धत्वमस्तीति चेन्न। चेच्छब्दसमभिव्याहारेणाकाङ्क्षोत्थापनादित्याहुः।

---

प्रामाणिकानां प्रयोगस्यैव मानत्वात्। न च धात्वर्थस्य गौणत्वापत्तिः, तदतिरिक्तमुख्यार्थाप्रसिद्ध्या तस्य गौणत्वाभावात्। यस्य हि मुख्योऽन्योऽर्थोऽस्ति तत्रैवेदृशस्य गौणत्वादित्यलं पल्लवितेन। "यावत्सिद्धमसिद्धं वे" त्यादिकारिकायां क्रियास्वरूपघटकसिद्धत्वसाध्यत्वयोः स्वरूपं भूषणकारोक्तमाह—**अत्रकेचिदित्यादिना**।

अत्र–क्रियाशरीरघटकसाध्यत्वविषये, **सिद्धत्वमिति**। अयमाशयः—पाक इत्यादिघञन्तादौ पाकपदजन्यसिद्धत्वप्रकारकपाकविशेष्यकोपस्थितौ या "अस्या अन्वयिनी का क्रिया" इत्याकारिकायाः क्रियान्तराकाङ्क्षाया उत्थापकता, तदवच्छेदको धर्मः सिद्धत्वरूपः। पचतीत्यादौ पचतिशब्देन क्रियावगतौ पुनः अन्यस्याः क्रियाया आकांक्षा न भवति अतस्तादृशक्रियागतं यद्वैजात्यं तद्रूपं साध्यत्वम्। तच्च वैजात्यमातिरिक्तं पचतीत्यादि शब्द एव वेत्यन्यदेतत्। नन्वेवं हिरुगाद्यव्ययानां तादृशसाध्यत्वेन रूपेण तत्तदर्थानुपस्थापकतया क्रियाप्रधानत्वव्यवहारो विरुध्येतेत्यत आह—**हिरुगादीति**। सर्वत्रैवेति–तिङन्ते कृदन्ते च। **धातुप्रतिपाद्यमिति**। तदुक्तं भट्टेन—

"साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः॥

वस्तुतः साध्यत्वम्–निष्पाद्यत्वमेव, तद्रूपेणैव बोधः। स्पष्टं चेदम् "उपपदमतिङ्" इत्यादौ भाष्ये।

ननु घटं करोतीत्यादौ द्रव्यस्यापि साध्यत्वेन प्रतीतिरिति चेन्न। करोतिपदादिसमभिव्याहारात् तथा प्रत्ययेऽपि स्वतो घटादिपदाद् द्रव्यस्य सिद्धत्वेनैव प्रतीतेः।

अस्तिभवतिविद्यतीनामर्थः––सत्ता। सा चानेककालस्थायिनी-ति कालगतपौर्वापर्येण क्रमवतीति तस्याः क्रियात्वम्। सत्तेह––आत्म-धारणम्।

---

नच धातुतः क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकवैजात्येनोपस्थितौ कृष्णं नमेच्चेत्सुखं यायादित्यादौ,आकाङ्क्षाभावेनान्वयो न स्यादिति वाच्यम्। चेच्छब्दसमभिव्याहारेणाकाङ्क्षोत्थापनात्। स्वमतमाह–वस्तुत इति। निष्पाद्यत्वमेव—उत्पाद्यत्वमेवेत्यर्थः, तेन कृष्णं—नमेच्चेदित्यादौ नाव्याप्तिः। एवेनोक्तव्यवच्छेदः **उपपदमिति**। "सुट्कात्पूर्व" इत्यादौ चेत्यपि बोध्यम्। सिद्धान्ते "प्रातिपदिकानामपि" इति भाष्योक्तशेषं "स्वभावसिद्धं तु द्रव्यम्" इति भाष्योक्त्यैव परिहर्त्तुकामः शङ्कते—**नन्वित्यादि**। द्रव्यस्यापि––घटं करोतीत्यादौ घटस्यापीत्यर्थः। स्वतः–करोतिपदासमभिव्याहारे। **सिद्धत्वेनैवेति**। सिद्धत्वञ्च सूक्ष्मरूपेण-बोध्यम्। यद्यपि क्रियापि सूक्ष्मरूपेण सिद्धा, तथापि शक्तिस्वाभाव्यात् स्थूलरूपेण साध्यत्वेनैव तस्याः प्रतीतिः। द्रव्यस्य तु सूक्ष्मरूपेण सिद्धत्वेनैवेति न दोषः।

नन्वेवमस्त्यादीनां धातुत्वानापत्तिस्तेषां सत्तामात्रार्थत्वेन व्यापाररूपक्रियावाचकत्वाभावादत आह — **अस्तीति**। ननु आत्मधारणानुकूलव्यापाररूपायाः सत्ताया नित्यत्वेन क्रमजन्यसमूह-रूपक्रियात्वानुपपत्तिरतआह — **कालगतेत्यादि** — कालगतं पौर्वापर्यं सत्तायामारोप्य क्रियात्वमुपपादनीयमिति भावः। कालस्याखण्डत्वे तु कालेऽपि आरोपितावयवत्वं बोध्यम्। तदुक्तं हरिणा—आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम्। पौर्वापर्यादिरूपेण प्रविभक्तामिव

सकर्मकत्वञ्च — फलव्यधिकरणव्यापारवाचकत्वम्, फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम् । क्वचित्तु फलांशाभावादकर्मकत्वम् । यथाऽस्त्यादौ केवलं सत्तादिरेवार्थः । फलांशस्य सूक्ष्मदृष्ट्याऽप्यप्रतीतेः । "उत्पन्नस्य सत्त्वस्य स्वरूपधारणरूपां सत्तामाचष्टेऽस्त्यादिः" इति निरुक्तोक्तेश्च ।

---

स्थितम् ॥ इति । "अस्याः—क्रियायाः । यत्र—क्रियायाम् । कालदर्शनं-कालगतपौर्वापर्यस्य तत्रारोप" इति हेलाराजः । अथवा अस्ति—आत्मानं बिभर्तीत्यर्थादात्मधारणानुकूलव्यापारस्य तत्रापि प्रतीयमानत्वान्न दोषः इति भावः । भूषणकारास्तु अस्त्यादौ फलरूपे धर्म्यंशे फलसाध्यव्यापारस्य जिज्ञासितत्वे अस्धातुना भावनाप्रतीयत एव । स्पष्टतयाऽप्रतीतौ तु तस्याः फलाधिकरणवृत्तित्वं हेतुः । अयंभावः 'स ततो गतो नवा' इति प्रश्ने महता यत्नेन 'अस्ति' इति प्रश्ननिवर्त्तके वाक्ये सत्तारूपफलानुकूला-भावना प्रतीयत एव । भूधातोश्च उत्पत्त्यनुकूलव्यापारोऽर्थः । घटो भवतीत्यत्र तथानुभवात् । 'रोहितो लोहितादासीत् । धुन्धुस्तस्य सुतोऽभवत्' इति रामायणोदाहरणे उत्पत्तिरूपेऽर्थे बोधनीये भावनायाः स्पष्टतया प्रतीतिरिति वदन्ति ।

**सकर्मकत्वञ्चेति** । फलव्यधिकरणत्वञ्चात्र फलनिष्ठाधेयतानिरूपिताधिकरणतावन्निरूपिताधेयताऽभाववत्त्वम् । आधेयता फलतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, एवञ्च प्रकृतधात्वर्थ—फलतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपिताधेयताऽभाववत्त्वमिति फलितोऽर्थः । फलतावच्छेदकसम्बन्धदानेन कालिकादिसम्बन्धमादायातिव्याप्तेरनवकाशः । **फलसमानाधिकरणेति** । फलसमानाधिकरणत्वञ्च फलतावच्छेदकसम्बन्धावच्छिन्नफलनिष्ठाधेयतानिरूपिताधिकरणतावन्निरूपितफलतावच्छेदकसम्बन्धावच्छिन्नाधेयतावत्त्वम् । अत्रापि पूर्ववदतिव्याप्तिनिरसनं सम्बन्धस्य फलम् । अकर्मकधातवो द्विधाभवन्ति—केचित् फलव्यापारोभयत्वावच्छिन्नवाच्यतानिरूपितवाचकतावन्तः, यथा भूप्रभृतयः । केचन च व्यापारमात्रत्वावच्छिन्नवाच्यतानिरूपितवाचकतावन्तः, यथा अस्

वस्तुतस्तु शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम् । तदनन्वय्यर्थकत्वमकर्मकत्वम् । तेन "अध्यासिता भूमय" इत्यादि सिद्धिः । अन्वयश्च पृथग्बुद्धेन संसर्गरूपः । अन्वयपदस्य तत्रैव व्युत्पत्तेः । तेन जीवतीत्यादौ न दोषः । तत्र प्राणादिरूपकर्मणो धारणार्थ-धात्वर्थात्पृथगबोधादिति "सुप आत्मन" इति सूत्रे भाष्ये स्पष्टम् । "अधिशीङ्स्थासाम्" इत्यनेन भूमय इत्याधारस्य कर्मत्वम् ।

जानातेर्विषयतया ज्ञानं फलम्, आत्ममनःसंयोगो व्यापारः । अत एव मनो जानातीत्युपपद्यते । आत्माऽत्रान्तःकरणम्, मनोऽपि तद्-वृत्तिविशेषरूपम् । आत्मा-आत्मानं जानातीत्यादौ अन्तःकरणावच्छिन्नः कर्ता शरीरावच्छिन्नं कर्मेति "कर्मवत्" सूत्रे भाष्ये स्पष्टम् ।

---

प्रभृतयः । अत्र सूक्ष्मदृष्ट्यापि फलांशस्याप्रतीतेः । तथाच केवलव्यापार-वाचके अस्धात्वादौ अव्याप्तिः स्यादतो धातुविशिष्टत्वमकर्मकत्वम्—वै. स्व-वाच्यफलव्यापकव्यापारनिरूपितशक्त्यधिकरणत्व-स्ववाच्यव्यापारविशिष्ट - शक्त्यधिकरणत्वैतदन्यतरसम्बन्धेन सम्बन्धघटकवैशिष्ट्यञ्च स्वनिरूपित-त्व स्वेतरानिरूपितत्वैतदुभयसम्बन्धेन । व्यापकत्वनिवेशेन गम्धातौ नातिव्याप्तिः । इत्थं सर्वमनवद्यम् । योगार्थानुरोधेन सिद्धान्तमाह—**वस्तुत-स्त्विति** ।

प्रत्यासत्तेस्तन्त्रान्तरस्थतद्वारणाय—**शब्दशास्त्रीयेति** । उक्तसक-र्मकलक्षणे दोषं सूचयन्नाह—**तेनेति**—एतादृशलक्षणाङ्गीकारेणेत्यर्थः । **अध्यासिताभूमय इति** । अत्राधारस्य भूमेः "अधिशीङ्स्थासांकर्म्म" इत्यनेन कर्मसंज्ञाविधानात् शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वेन सकर्मकत्वात् कर्मणि निष्ठासिद्धिः । नन्वेवमपि जीवत्यादिषु उक्तलक्षणा-तिव्याप्तिः, जीवतीत्यस्य प्राणान् धारयतीत्यर्थेन शब्दशास्त्रीयकर्मसंज्ञक-प्राणार्थान्वय्यर्थकत्वादत आह—**अन्वयश्च—पृथगिति**—पृथक्पदजन्य-प्रतीतिविषययोरर्थयोः, य आकाङ्क्षाभास्यः संसर्गः तद्रूप इत्यर्थः । **न दोष इति** । प्राणधारणरूपकर्मणो धात्वर्थावच्छेदकतयोपस्थितत्वेन अन्वयितावच्छेदकरूपेण धारणस्य पृथगनुपस्थितत्वादिति भावः । तदे-

यत्तु आवरणभङ्गो विषयता वा फलम्, व्यापारस्तु ज्ञानमेवेति । तन्न कर्मस्थक्रियकत्वापत्तेः । तद्व्यवस्था चेत्थमुक्ता हरिणा—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥ इति ।

अस्यार्थः—यत्र कर्मणि कर्तरि वा क्रियाकृतो विशेषः कश्चिद् दृश्यते, तत्र क्रिया व्यवस्थितेत्युच्यते । नन्वेवं पच्यादिकर्तर्यपि श्रमादिरूपविशेषस्य-दर्शनादिदमयुक्तम् । किञ्च चिन्तयति पश्यतीत्यादीनां कर्तृस्थभावकत्वानु-

---

वोक्तं-**तत्रेत्यादिना** । **ज्ञानं फलमिति** । ननु ज्ञानस्य धात्वर्थरूपफलत्वं दुर्वचं, तस्य चैतन्यरूपत्वे जन्यत्वप्रकारकप्रतीतिविषयत्वरूपस्य फलत्वस्य तत्रासंभवादिति चेन्न, अभिव्यक्तिगतजन्यत्वारोपेण तस्य सुलभत्वात् । 'अत्र' भूषण ६ कारिकायां नागेशमतं पञ्चोलिमहाभागेन स्वीयत्वे-नोट्टङ्कितम् ।

**यत्त्विति**—अयंभावः भूषणकाराः ज्ञानार्थकधातूनां सकर्मकत्वोपपाद-नाय फलव्यापारोभयत्वावच्छिन्ननिरूपिता शक्तिः स्वीकर्त्तव्या । तत्र च आवरणभङ्गरूपं फलं धातुवाच्यम् । प्रत्यक्षस्थलेऽन्तःकरणं चक्षुरादीन्द्रिय प्रणालिकया विषयदेशं गत्वा तत्तदाकारेण परिणमति । सैव वृत्तिरित्युच्येत । ज्ञानपदव्यवहर्त्तव्यया तया चावरणभङ्गो जायते । आवरणं च विषयावच्छिन्न चैतन्याच्छादकाज्ञाननिष्ठावरकशक्तिः । अयमेवावरणभङ्गः फलं, ज्ञानञ्च व्यापार इति प्रतिपादयन्ति तद्दूषयति—**तन्नेत्यादिना** । अयं भावः विषयतादिरूपफलस्य कर्त्तृकर्मसाधारणत्वाभावात् कर्मस्थक्रियकत्वा-पत्तेः । कर्मस्थक्रियया तुल्या क्रिया फलरूपा फलसमानाधिकरण व्यापाररूपा वा यत्र तादृशः कर्त्ता कर्मवदित्यर्थकेन "कर्मवत्कर्मणेति-कर्मवद्भावे कर्मकर्त्तरि 'ज्ञायते घट' इति प्रयोगापत्तिः । **तद्व्यव-स्थेति**—कर्मस्थकर्त्तृस्थक्रियकत्वव्यवस्थेत्यर्थः । **यत्रेति** कर्त्तरि कर्मणि वेत्यर्थः । **तत्र व्यवस्थिता**-तन्निष्ठा । अयं भावः—यत्र कर्मणि क्रिया-कृतो विशेषस्तत्र कर्मस्थक्रियत्वम् । यत्र च कर्त्तरि क्रियाकृतो विशेषस्तत्र

पपत्तिः । कर्त्तरि क्रियाकृतविशेषाभावात् । अत आह—अन्येषामिति । मते इति शेषः । यत्र कर्तृकर्मसाधारणरूपं फलं शब्देन प्रतिपाद्यते, स कर्त्तृस्थभावको यथा-पश्यति घटम्, ग्रामं गच्छति, हसतीत्यादौ । तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठम्, योगश्चोभयनिष्ठः । एवं ह्रासोऽपि । न हि विषयताऽऽवरणभङ्गात्रेवम् । यत्र कर्त्रवृत्तिकर्मस्थफलं स कर्मस्थभावकः । यथा भिनत्तीत्यादौ । न हि द्विधाभवनादि कथमपि कर्तृनिष्ठमिति हेलाराजः । तथा चावरणभङ्गस्य विषयतायाश्च कर्ममात्र-निष्ठत्वाज्जानातेरपि कर्मस्थक्रियकत्वापत्तिरित्यलम् ।

इच्छतेरिच्छानुकूलं ज्ञानमर्थः । अतीतानागतयोरपि बुद्ध्युपारोहात् फलशालित्वम् ।

पतिर्गमिवत्सकर्मकः । नरकं पतित इत्यादिप्रयोगात् ।

---

कर्त्तृस्थक्रियत्वमिति विवेकः । इदमयुक्तम्—अस्य कर्मस्थक्रियत्वानुपपत्ते-रिति शेषो बोध्यः । **अन्येषामिति** । अयंभावः येऽपि कर्मस्थभावकाः पच्यादयः, तत्रापि श्रमादिको विशेषः कर्त्तर्य्यपि दृश्यते । तथा च विशेष-दर्शनं यत्रेति लक्षणेन नास्ति निर्वाहः । तस्माद्यत्र शब्दैरेव विशेषः, तत्रैव क्रियास्थिता, तद्यथा घटं पश्यतीत्यादौ शब्दो दृशिक्रियाविषयं किञ्चिद्-विशेषविशिष्टं न अभिधत्ते इति—तद्वशेन कर्त्तृस्थभावकत्वाद् 'दृश्यते स्वयमेव' इति न भवतीति । काष्ठं भिनत्तीत्यादौ तु भिदिक्रियाविषयं सविशेषमाभिधत्ते इति तद्वशेन कर्मस्थभावकत्वाद् 'भिद्यते काष्ठं स्वयमेव' इति भवति । ग्रन्थकारस्तु कर्ममात्रनिष्ठफलकत्वं कर्मस्थक्रियत्वमित्यर्थं वक्ष्यतीति कुञ्चिकाकाराः । **विषयतावरणेति** कर्त्तृकर्मसाधारणत्वाभावाद् विषयतावरणभङ्गयोः फलयोः कर्मस्थक्रियत्वापत्तिरित्यर्थः ।

ननु अतीतादौ इच्छाश्रयत्वाभावेन कर्मत्वानापत्तिरत आह-**अतीता-नागतयोरिति** । बुद्ध्युपारोहात्—बुद्धिविषयीकरणात् । अयंभावः अतीतानागतयोर्विषयतातिरिक्तसम्बन्धेनाश्रयत्वाभावेन विषयतासम्बन्धे-नाश्रयत्वे बाधकाभाव इति तत्त्वम् । **सकर्मक इति** । पतेर्विभागजन्योत्तर-

विभागजन्यसंयोगमात्रपरत्वेऽकर्मक इति । कृञ उत्पत्तिर्व्यधिकरण स्तदनुकूलो व्यापारोऽर्थः । फलमात्रार्थकत्वेऽकर्मकत्वापत्तिर्यतिवत् । किञ्च कर्मस्थभावकत्वाभावात् कर्मकर्तरि यगाद्यनापत्तिः । कृतिरित्यादौ धातूनामनेकार्थत्वात् यत्नमात्रे वृत्तिः ।

यद्वा यत्नकृतिशब्दयोरपि व्यापारसामान्यवाचितैव । अत एव स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचतीति "कारके" इति सूत्रे भाष्ये उक्तमित्यलम् । यत्तु तार्किकाः—फलव्यापारौ धात्वर्थः । लकाराणां कृतावेव शक्तिर्लाघवात् । न तु कर्त्तरि, कृतिमतः कर्त्तृत्वेन तत्र शक्तौ गौरवात् । प्रथमान्तपदेनैव तल्लाभाच्च । आख्यातार्थे धात्वर्थो विशेषणम्, प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यात् । प्रथमान्तार्थे आख्यातार्थो विशेषणम् ।

---

देशसंयोगानुकूलव्यापारार्थकत्वेन फलव्यधिकरणव्यापारवाचकत्वादिति भावः । अत्रार्थे द्वितीयाश्रितेति सूत्रेण समासविधानमेव मानम् । **संयोगमात्रेति** । मात्रपदेन तदनुकूलव्यापारस्य व्यवच्छेद इत्यर्थः । वस्तुतस्तु पत्धातोः सकर्मकत्वे बीजाभावः! द्वितीयाश्रितेति तु द्वितीयासमासविधान बलेन पतितपदयोगे द्वितीयाकल्पनेनापि चरितार्थम् । अत एव भूमौ पतति इति प्रयोगः संगच्छते, विभागजन्यसंयोगानुकूलव्यापारत्वस्य गुरुभूतस्य शक्यतावच्छेदकत्वकल्पनापेक्षया संयोगत्वस्य तत्कल्पने लाघवमिति शुक्रः । **यगाद्यनापत्तिरिति** चेतनाधिकरणकस्य यत्नस्य अचेतने घटादौ अभावेन कर्मस्थक्रियकत्वाभावात् कर्मवद्भावाभावेन यगाद्यनापत्तौ घटः क्रियते इति कर्मकर्त्तरि प्रयोगो न स्यादित्याशयः । नन्वेवं कृतिरित्यत्र धातुना यत्नमात्रार्थप्रतीतिर्न स्यादत आह—**कृतिरिति** ।

स्वसिद्धान्तमाह-**यद्वेति** । उक्तार्थे मानं दर्शयति-**अतएवेति** । प्रत्याख्यानाय नैयायिकमतमनुवदति—**यत्त्वित्यादिना** । **लाघवादिति** । नानाकृतिष्वनुगतायाः कृतित्वजातेः किञ्चिद्विशेषितायाः शक्यतावच्छेदकत्वे उपस्थितिकृतलाघवमित्यर्थः । **गौरवादिति** । कर्त्तृत्वं हि कृतिमत्त्वं, तथा च कृतिमतः शक्यत्वे, कृतिःशक्यतावच्छेदिका प्रतिकर्त्तृ,

अनुकूलत्वमाश्रयत्वञ्च संसर्गः । तथा च चैत्रः पचतीत्यादौ विक्लित्त्यनुकूलव्यापारानुकूलकृतिमांश्चैत्र इति बोधः । रथो गच्छतीत्यादौ-रथस्याचेतनत्वात् यत्नशून्यत्वेन व्यापारे आश्रयत्वे वा आख्यातस्य लक्षणेत्याहुः ॥

तन्न । युष्मदस्मदोर्लकारेण सामानाधिकरण्याभावात् पुरुषव्यवस्थाऽनापत्तेः । पचन्तं चैत्रं पश्य, पचते देवदत्ताय देहीत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशाविशेषेण तेभ्यः कृतिमात्रबोधापत्तेश्च । न चेष्टापत्तिराश्रयाश्रयिभावेन कर्मणि सम्प्रदाने च कृतेरन्वयादिति वाच्यम् नामार्थयोरभेदान्वयो व्युत्पन्न इति व्युत्पत्तिभङ्गापत्तेः ।

---

भिन्ना भिन्ना इति शक्यतावच्छेदकधर्माणामानन्त्यमेव उपस्थितिकृतगौरवमिति भावः । तल्लाभात्–कर्त्तृलाभात् । एवञ्चानन्यलभ्यो हि शब्दार्थ इति न्यायेनकृतिरेवाख्यातार्थः ।

**प्रथमान्तार्थ इति** । एवञ्चाख्यातवाच्यकृतिनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितिः कारणमिति कार्यकारणभावः फलितः । नन्वेवं रथो गच्छतीत्यादौ कथमन्वयबोध इत्यत आह–**रथ इत्यादि** । अत्र तु व्यापारे आख्यातस्य निरूढा लक्षणा गमनानुकूलकृतेः मुख्यार्थस्य रथेऽन्वयानुपपत्त्यात्मकहेतोः सत्त्वात् तथा च गमनानुकूलव्यापारवान् रथ इत्येव बोधः ।

ननु रथनिष्ठगमनानुकूलव्यापारः तक्षकादिकर्त्तृकविलक्षणसंयोगएव, सच गमनशून्यकालेऽप्यस्तीति तत्रापि रथो गच्छतीति प्रयोगापत्तेर्वारणाय अनुकूलतासम्बन्धेन गमनविशिष्टविलक्षणसंयोगवत्त्वमेव तादृशप्रयोगनियामकं वक्तव्यम्, एवं च अनुकूलतासम्बन्धेन गमनविशिष्टव्यापारस्यैव निरूपितत्वसम्बन्धेन गमनविशिष्टाश्रयत्वस्यैव नियामकत्वस्वीकारेणापि तदानीं तादृशप्रयोगापत्तिवारणं भवत्येवेत्यतः आश्रयत्वे आख्यातस्य लक्षणा स्वीकार्या न तु व्यापारे, अयुक्तत्वात् गौरवाच्चेति चिन्तामणिकारमतानुसारेणाह—**आश्रयत्वेति** । लक्षणा–निरूढलक्षणा । तथा च गमनानुकूलव्यापाराश्रयतावान् रथ इति बोधः । ननु कृतौ

ननु फलमुखगौरवं न दोषायेति न्यायेन शत्रादीनां कर्त्तरि शक्तिः, तिबादीनां कृतावेव, इति चेत्, न। स्थान्येव वाचको लाघवात्, आदेशानां बहुत्वेन तेषां वाचकत्वे गौरवमिति हि तत्र मतम्। एवं च तिबादीनां शत्रादीनां च स्थानिस्मारकतया लिपिस्थानीयत्वम् बोधकस्तु लकार एव। स च शत्राद्यन्ते कर्त्तरि शक्तस्तिबाद्यन्ते कथं कृतिं बोधयेत्। अन्यायश्चानेकार्थत्वम्, इति न्यायात्।

---

शक्तिकल्पनं व्यापारादौ च लक्षणाकल्पनमित्येतदपि कल्पना गौरवमेवेति चेत्। ईदृशगौरवस्य फलमुखत्वेनादोषात्। तार्किकमतं-खण्डयति—**तन्नेति**। **सामानाधिकरण्येति**। अयंभावः "युष्मद्युपपदे समानाधिकरणे" इति सूत्रे समानमेकमधिकरणं-वाच्यम् 'अधिक्रियते शब्दो यस्मिन्निति विग्रहात्' यस्य तस्मिन् युष्मदीत्यर्थः। सामानाधिकरण्यञ्च युष्मदः तिङः स्थानीभूतलकारेण विवक्षितम्, लः परस्मैपदमित्यतस्तदनुवृत्तेः। एवञ्च तिङ्वाच्यकारकवाचिनि—युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यम इत्यर्थेन तार्किकमते लकाराणां कृतेर्वाच्यत्वेन कर्त्तृकारकस्य वाच्यत्वाभावेन युष्मदर्थेन सामानाधिकरण्याभाव इत्यर्थः। नन्वाश्रयत्वसम्बन्धेन कृतेश्चैत्रादावन्वयात् शतृशानजादिभ्यः कृतिबोधे न काप्यनुपपत्तिरित्याह—**न चेत्यादि**। **नामार्थयोरिति**। अयमाशयः—'राजा पुरुषः' "भूतलं घटः" इति वाक्यात् स्वत्वसम्बन्धेन राजविशिष्टः पुरुषः आधेयत्वसम्बन्धेन भूतलविशिष्टो घट इति बोधाननुभवेन तादृशबोधवारणाय प्रातिपदिकपद प्रयोज्याया अभेदातिरिक्तसम्बन्धावच्छिन्नप्रकारतायाः प्रत्ययनिपातान्यतर पदप्रयोज्यविशेष्यतानिरूपितत्वनियमः, अर्थात् भेदसम्बन्धावच्छिन्न निपातातिरिक्तनामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्द-बुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन विभक्तिनिपातान्यतर जन्योपस्थितिः कारणमिति कार्यकारणभावमूलिकेयं "नामार्थयो र्भेदेन साक्षादन्वयबोधोऽव्युत्पन्न" इतिव्युत्पत्तिः—स्वीक्रियते। तथा च पचन्तं चैत्रं पश्येत्यादौ चैत्रादेः, विभक्तिनिपातान्यतरपदजन्यो-

ननु "लः कर्माणि" इति सूत्रे कर्त्तृकर्मपदे भावप्रधाने, तथा च कर्तृत्वं कृतिः, कर्मत्वं फलम्, तयोः शक्तौ सूत्रस्वरसः। कर्म्मप्रत्ययान्ते पच्यते ओदनो देवदत्तेनेत्यादौ देवदत्तनिष्ठकृतिजन्यव्यापारजन्यविक्लित्तिमान् ओदन इति बोधः। "कर्तरि कृत्" इति सूत्रे तु कर्तरीति पदस्य धर्मिप्रधानत्वात् कृत्याश्रये शत्रादीनां शक्तिरिति चेत्, न। "कर्तरि कृत्" इति सूत्रे यत्कर्तृग्रहणं तस्यैव "लः कर्म्मणि" इति सूत्रे चकारानुकृष्टत्वेन भावप्रधानत्वे सूत्रस्वरसाभावात्। शत्रादीनां 'स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वम्, इति न्यायेन स्थान्यर्थेन निराकाङ्क्षत्वादाकाङ्क्षितविधानं ज्याय इति न्यायात् "कर्त्तरि कृत्" इत्यनेन शक्तिग्रहाभावात्। अन्यथा देवदत्तेन शय्यमाने आस्यमाने च यज्ञदत्तो गत इत्यादौ भावे शानजनापत्तेः।

---

पस्थितिविषयत्वाभावेन तत्र कृतेराश्रयत्वसम्बन्धेनान्वयो दुर्लभः। घटो न पट इत्यत्र घटत्वावच्छिन्नप्रतियोगिताकभेदबोधे व्यभिचारवारणाय कारणतावच्छेदककोटौ निपातपदम्। नञो भेदवति लक्षणावादिनये व्यभिचाराभावेऽपि भेदस्याश्रयत्वसम्बन्धेन पटेऽन्वयवादिनां मते व्यभिचारवारणाय कार्यतावच्छेदककोटौ निपातातिरिक्तपदम्। लिपिस्थानीयत्वम्—लिपितुल्यत्वम्।

सच—लकारश्च। "अन्यायश्चानेकार्थत्वमिति न्यायादिति। **भावप्रधाने इति।** अत्रत्यं तत्त्वं प्रागेवावेदितम्। **कर्त्तरिकृदितिसूत्रे यत्–कर्त्तृग्रहणमिति।** अयं भावः "कर्त्तरि कृत्" इत्यतः एव "लः कर्म्मणि" इत्यत्र 'कर्त्तरि' इत्यनुकृष्यते। तत्र यदि "पाचको देवदत्तः" इत्यत्र "विक्लित्त्यनुकूलभावनाश्रयाभिन्नो देवदत्तः" इति सामानाधिकरण्येनान्वयलाभाय कर्त्तृपदमाश्रयबोधकं तदा अत्रापि तथैव, तत एव कर्त्तृपदानुवृत्तेः। "लः कर्मणि" इत्यत्र कर्त्तृपदं कर्त्तृत्वपरं, कर्त्तरि कृदिति सूत्रे कर्त्तृपरमिति वैषम्ये बीजाभावादिति। नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति भाष्यात् शब्दाधिकारस्यानौचित्यादिति भावः। **निराकाङ्क्षत्वादिति।** अयं भावः तार्किकमते स्थानिन एव वाचकत्वे शत्रा-

ननु नामार्थयोरभेदान्वयानुरोधात् शतृशानजादीनां कर्त्तरि शक्तिरिति चेत्, न । पचतिकल्पं पचतिरूपं देवदत्त इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्त्तुरेव वाच्यत्वौचित्यात् ।

किञ्च कृतिवाच्यत्वे रथो गच्छतीत्यादौ आश्रये लक्षणास्वीकारे गौरवापत्तिः । अभिहितत्वानभिहितत्वव्यवस्थोच्छेदापत्तिश्च । नच "अनभिहिते" इति सूत्रस्यानभिहितसङ्ख्याके इत्यर्थवर्णनमिति वाच्यम् । कृत्तद्धितसमासैः सङ्ख्याऽभिधानस्याप्रसिद्धत्वात् ।

---

दीनां स्थानिरूपलकारवाच्यकर्त्तृत्वमादाय जातत्वेन पुनरर्थान्तरविषयकाकाङ्क्षाया अनुदयेन कर्त्तरि विधानाभावात् । कर्त्तरिकृदिति सूत्रेण कर्त्तरिशक्तिज्ञानस्यासम्भवादिति तत्त्वम् । अन्यथा—निराकाङ्क्षितस्य विधानेन कर्त्तरि कृदिति शक्तिग्रहे । **शानजनापत्तेः** । ननु अभेदसम्बन्धावच्छिन्नप्रातिपदिकार्थवृत्तिप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रातिपदिकपदजन्योपस्थितिः विशेष्यतया कारणमिति कार्यकारणभावमूलिका "नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्नः" इति व्युत्पत्तिः स्वीक्रियते । तद्बलात् पचन् देवदत्तः पठतीत्यादौ अभेदानुरोधेन कर्त्तरि एव शक्तिरित्यत आह——**नन्विति** ।

**वाच्यत्वौचित्यादिति** । सामानाधिकरण्यस्योभयत्र तुल्यत्वादिति भावः । **गौरवापत्तिरिति** । यथा कर्त्तरिशक्तिवादिनां मते शक्यतावच्छेदके गौरवं तथैव आश्रये लक्षणावादिनां मते लक्ष्यतावच्छेदके गौरवम् । न हि शक्यतावच्छेदकगौरवमेवादर्तव्यं न लक्ष्यतावच्छेदकगौरवमिति राजाज्ञास्ति । **अभिहितत्वेति** ।

अयंभावः "अनभिहिते" । २ । ३ । १ । इत्यधिकृत्य "कर्त्तृकरणयोस्तृतीया" । २ । ३ । १८ । इत्यनुशासनेन अनभिहिते कर्त्तरि तृतीयाविधानात्, अनुक्ते च कर्मणि द्वितीयाविधानात्, न्यायनये आख्यातेन कृतेरेवाभिधानात् कर्त्तुः कर्मणश्चानभिधानात् "चैत्रः पचती" त्यादौ चैत्रपदात्तृतीयापत्तिः, प्रथमानापत्तिश्च । चैत्रेण तण्डुलः पच्यते इत्यत्र च

किञ्च यत्नोऽपि व्यापारसामान्यं धातुत एव लभ्यते, स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचतीति "कारके" इत्यधिकारसूत्रे भाष्यप्रयोगादनन्यलभ्यस्यैव शब्दार्थत्वात् कृतौ शक्तेरुक्तिसम्भव एव नेत्यलम्।

आख्यातार्थे धात्वर्थो विशेषणमित्यस्य निराकरणमवशिष्यते। तथा हि—प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यमित्युत्सर्गः। पाचक औपगव इत्युदाहरणं पाकक्रियाश्रयः उपगुसम्बन्ध्यभिन्नापत्यमिति प्रत्ययार्थस्य प्राधान्यन्तयोरर्थे। तत्रापि प्रत्यय-वाच्यस्यैवार्थस्य प्राधान्यम्। द्योत्यस्य त्वप्राधान्यमेव। यथा अजा इत्यत्र स्त्रीत्वविशिष्टपशुविशेष इति बोधः। तस्योत्सर्गस्य "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति

---

तण्डुलपदात् द्वितीयापत्तिः, प्रथमानापत्तिश्चेति भावः। **नचेति**। अयं भावः "द्व्येकयोर्द्विवचनैकवचने १।४।२२' "अनभिहिते' २।३।१। इत्यनयोः "कर्मणि द्वितीया" २।३।२।' कर्तृकरणयोस्तृतीया" इति सूत्राभ्यामेकवाक्यतया अनुक्तसंख्याके कर्मणि द्वितीया, तथाभूते कर्त्तरि तृतीया इत्याद्यर्थेन न पूर्वोक्तदोष इति शङ्काशयः। **कृत्तद्धित-समासैरिति**। अयमाशयः—'अभिधानञ्च तिङ्कृत्तद्धितसमासैरिति सिद्धान्तेन तिङः संख्यावाचकत्वात् तिङा संख्याया अभिधानं प्रसिद्धम्, कृत्तद्धितसमासानां संख्यार्थत्वाभावेन तैरभिधानमप्रसिद्धम्। व्यापारस्य धातु-वाच्यत्वे "कारके" इत्याधिकारसूत्रस्थं भाष्यमपि प्रमाणयति-**किञ्चेत्यादिना**। एतावता ग्रन्थेन तार्किकाभिमतां कृतौ आख्यातस्य शक्तिं निराकृत्य धात्वर्थस्य आख्यातार्थविशेषणत्वं निराकरोति—**तथा-हीत्यादिना**। **प्रकृत्यर्थप्रत्ययार्थयोरिति**। अत्रत्यं तत्त्वं प्रकरणेऽस्मिन् प्रागेवावेदितम्। **प्रत्ययवाच्यस्यैवेति**। एवकारव्यवच्छेद्यमर्थमाह—**द्योत्यस्येति**।

**स्त्रीत्वविशिष्टेति** द्योत्यस्य प्राधान्ये तु अजेत्यत्र टाप्प्रत्ययद्योत्यस्य स्त्रीत्वस्य प्राधान्यापत्तौ पशुविशेषवृत्तिस्त्रीत्वमित्येव बोधो न तु स्त्रीत्वविशिष्ट-पशुविशेष इत्यर्थः। **भावप्रधानमिति**। एतत्तत्त्वं प्रागेवावेदितम्।

यास्कवचनमपवादः। तेनाख्याते तिङन्ते क्रियाया एव प्राधान्यं शाब्दबोधे न प्रत्ययार्थस्येति बोध्यम्।

यत्तु आख्यातपदेन तिङ्मात्रग्रहणाद्भावप्रधानमित्यत्र षष्ठीतत्पुरुषाश्रयणात् प्रत्ययार्थप्राधान्यमेव फलतीति। तन्न। "आख्यातमाख्यातेन क्रियासातत्ये" इति सूत्रे आख्यातपदेन तिङन्तस्यैव ग्रहणात्। उत्सर्गेणैव निर्वाहे यास्ककृतापवादवचनवैयर्थ्यापत्तेश्च। तस्मात् "भावप्रधानम्" इत्यत्र बहुव्रीहिः। आख्यातपदेन तिङन्तस्यैव ग्रहणमित्यलम्।

प्रथमान्तार्थमुख्यविशेष्यको बोधस्तार्किकमते इति निराकर्तुमत्रशिष्यते।

---

**अपवाद इति**। इदमत्राकूतम्— "एककार्यविनियोगोद्देश्येन प्रवृत्तवाक्यकदम्बघटकव्यापकधर्मावच्छिन्ने तादृशवाक्यकदम्बघटकव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन संकोचः क्रियते। यथा ब्राह्मणभोजनरूपैककार्यविनियोगोद्देशेन प्रवृत्तं वाक्यकदम्बकं "सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्" इति तत्र माठरत्वकौण्डिन्यत्वरूपव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन ब्राह्मणत्वरूपव्यापकधर्मावच्छिन्ने संकोचः, तथा प्रकृते शाब्दबोधे प्रकृतिप्रत्ययार्थयोः एकस्य प्राधान्ये बोधोद्देश्येन प्रवृत्तं प्रकृतिप्रत्ययार्थौ सहार्थं ब्रूत इति 'भावप्रधानमाख्यातमिति' च वाक्यकदम्बकं तत्र प्रकृतिप्रत्ययत्वरूपव्यापकधर्मावच्छिन्ने आख्यातत्वरूप व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन संकोच इति आख्यातातिरिक्तस्थले तस्याः प्रत्ययार्थप्राधान्यबोधिकाया व्युत्पत्तेः सत्त्वेन आख्याते धात्वर्थक्रियाया एव प्राधान्यमिति सर्वमनवद्यम्। आख्याते इत्यस्यैव व्याख्यानं तिङन्त इति। **षष्ठीति**। भावस्य—धात्वर्थक्रियायाः, निरूपितत्वं षष्ठ्यर्थः, तस्य प्रधानैकदेशप्राधान्येऽन्वयः, एवञ्च भावनिष्ठप्रकारतानिरूपितप्रत्ययार्थनिष्ठविशेष्यताकबोधजनकमाख्यातमिति भावः। **तिङन्तस्यैवेति**—अन्यथा तिङ्मात्रस्य प्रयोगाभावात् समासविधानानुपपत्तिः स्यात्। उत्सर्गेणैव—प्रकृतिप्रत्ययार्थयोरिति व्युत्पत्त्यैवेत्यर्थः।

**प्रथमान्तार्थमुख्यविशेष्यकोबोध इति**। न्यायनये धात्वर्थविशेष्यकबोधस्य सर्वत्रानभ्युपगमेन प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोध-

तथा हि–शाब्दिकमते पश्य मृगो धावतीत्यादौ मृगकर्तृकं धावनं दृशि-क्रियायाः कर्म्म, प्रधानं दृशिक्रियैव। तथा च मृगकर्तृकधावनकर्म्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकं दर्शनमिति बोधः। तत्र मृगो धावतीत्यत्र विशेष्य भूतधावनरूपार्थवाचकस्य धावतीत्यस्य प्रातिपदिकत्वाभावान्न द्वितीया। कर्मत्वन्तु संसर्गमर्यादया भासते एवं पचति भवतीत्यत्र पचिक्रियाकर्तृका-सत्तेति बोधः। पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्तीति भूवादि-सूत्रस्थभाष्यात्;

सुबन्तं हि यथाऽनेकन्तिङन्तस्य विशेषणम्।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्॥ इति।

तार्किकमते तु अन्यदेशसंयोगानुकूलधावनानुकूलकृतिमन्मृगकर्म-कं प्रेरणाविषयीभूतं यद्दर्शनं तदनुकूलकृतिमांस्त्वमिति बोधः। तत्र विशेष्य-

---

स्यैवाभ्युपगमात्—चैत्रस्तण्डुलं पचतीत्यत्र—तिङ्वाच्यकृतिः प्रथमान्तार्थे चैत्रादौ प्रकारीभूय भासते, धात्वर्थव्यापारस्तु कृतौ अनुकूलतासम्बन्धेन प्रकारतया भासते तथा च तण्डुलकर्मकविक्लित्यनुकूलवर्तमानकालिक-व्यापारानुकूलकृत्याश्रयश्चैत्रः इति बोधः। तत्प्रत्याख्यानायाह-**तथाहीति**। संसर्गमर्यादया—आकाङ्क्षयेति भावः। भूवादिसूत्रस्थभाष्यादिति। 'का तर्हि इयं वाचोयुक्तिः, पचतिभवति, 'त्वं पचसि भवति' 'पक्ष्यति भवति' इति सैषा वाचो युक्तिरित्युपक्रम्य तद् भाष्यमुक्तम्। अत्र 'पचति-भवति' इत्यस्य पाककर्तृका भवनक्रिया, "त्वं पचसि भवति" इत्यस्य त्वदभिन्नाश्रयनिष्ठपाकाभिन्नाश्रयिका भवनक्रिया। "पक्ष्यति भवति" इत्यस्य च 'भविष्यत्कालिकपाकाभिन्नाश्रयिका भवनक्रियेति बोधः। प्रथमान्तार्थस्य मुख्यत्वे तु उक्तबोधासिद्धिः। "त्वं पचसि भवति" इत्यत्र भवसीत्यापत्तिश्च युष्मदर्थस्यैव प्राधान्येन भवतिक्रियायाः कर्त्तृत्वा-पत्तेः। वैयाकरणमते तु पाकक्रियाया एव प्राधान्यात् 'भवति' इति प्रथमपुरुषोपपत्तिः। 'पश्य मृगो धावतीत्यत्र स्वयमेवानुपपत्तिं दर्शयति—**तार्किकमतेत्विति**। **धावतीत्यापत्तेरिति**। नच पश्येत्यत्र तामिति

भूतार्थवाचकमृगशब्दस्य प्रातिपदिकत्वात् दृशिक्रियाकर्मत्वाच्च द्वितीयापत्तौ धावन्तं मृगं पश्येतिवत् पश्य मृगं धावतीत्यापत्तेः। अप्रथमासमानाधिकरणे शतृशानचोर्नित्यत्वादेवं प्रयोगविलयापत्तेश्च॥

ननु विशिष्टार्थवाचकस्य धावति मृग इति वाक्यस्य कर्मत्वेऽपि पृथङ्मृग इत्यस्य प्रातिपदिकस्य कर्मत्वाभावान्न द्वितीयेति चेत्, न। "अनभिहिते" इत्यधिकारसूत्रप्रघट्टके अभिधानञ्च तिङ्कृत्तद्धितसमासैरित्येतत्परिगणनप्रत्याख्यानपरभाष्यरीत्या द्वितीयाऽऽपत्तेः।

तथाहि—कटं भीष्मं कुर्वित्यादौ विशेष्यकटशब्दादुत्पन्नद्वितीयया कर्मत्वस्योक्तत्वात् विशेषणीभूतभीष्मशब्दाद् द्वितीया न स्यादतः परिगणनं भाष्ये कृतम्। तत्प्रत्याख्यानञ्च सर्वकारकाणां साक्षात्स्वाश्रयद्वारा वा अरुणाधिकरणन्यायेन भावनान्वयस्वीकारात्। अतएवोक्तं भाष्ये-कटोऽपि

---

कर्माध्याहार्यम्। धावनजनककृतिमान् मृग इत्येको बोधः, "तत्कर्मकदर्शननिरूपिताश्रयतावान् त्वम्" इत्यपर इत्येकवाक्यत्वाभावप्रसङ्गात्, पूर्ववाक्यघटकपदार्थानिष्ठविषयत्वानिरूपितविषयताप्रयोजकपश्यादिपदघटितत्वात्। ननु "तमि" त्यस्याध्याहारे पूर्ववाक्यघटकमृगपदार्थतत्पदार्थयोरैक्यात् मृगनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्नविषयतानिरूपितदर्शननिष्ठविषयतायां सत्त्वेनैकवाक्यत्वाक्षतिरिति चेन्न, क्रियाविशेषस्योत्कटधावनस्यैव दृशिक्रियायामन्वयस्य प्रतिपिपादयिषितत्वेनाध्याहारे तथाबोधासम्भवात्। एवञ्च दर्शनक्रियानिरूपितविषयतारूपफलाश्रयत्वेन धावनस्यैव विवक्षिततया मृगस्य कर्मत्वेनान्वयापत्त्या भाष्याभिमतैकवाक्यत्वासिद्धिरिति तात्पर्यम्।

**अप्रथमेति**। मृगपदोत्तरद्वितीयाप्रसङ्गे शतृशानज्विधौ लडर्थकर्तुः प्रथमान्तार्थसामानाधिकरण्येन विशेषितत्वात् मृगपदस्यद्वितीयान्तत्वे तदापत्त्या तादृशवाक्यस्यैवासम्भवापत्तिरिति भावः। **विशिष्टार्थेति**। उत्तरदेशसंयोगानुकूलोत्कटधावनानुकूलकृत्याश्रयमृग इत्यर्थेति भावः। अधिकरणकारकस्य साक्षात्क्रियायामन्वयाभावादाह—

कर्म्म भीष्माद्योऽपीति। तत्र कटनिष्ठकर्म्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्ट-कर्म्मत्वानुक्तेस्तस्माद् द्वितीयेति तात्पर्यम् । उभयोः पश्चात्—परस्परमन्वयस्तु विशेष्यविशेषणभावेन । अयमेवान्वयः पार्ष्णिक इत्युच्यते। एवमेवान्वयोऽरुणाधिकरणे “ अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति ” इत्यत्र क्रयणक्रियायां मीमांसकैस्स्वीकृतः । तस्माद्धावति मृग इत्यत्र उभयोः कर्म्मत्वे धावतीत्यस्य प्रातिपदिकत्वाभावाद् विशेषणत्वेनान्यत्र निराकाङ्क्ष-त्वाच्च द्वितीयोत्पत्त्यभावेऽपि मृगशब्दाद् द्वितीया दुर्वारैवेत्यवेहि । शाब्दिकमते तु क्रियाविशेषणत्वेनेतरार्थे निराकाङ्क्षत्वाद् मृगशब्दान्न द्वितीया । तार्किकमते तु विशेष्यार्थवाचकत्वात् मृगशब्दात् राज्ञः पुरुषमानयेतिवद् द्वितीया दुर्वारेत्यलमातिविस्तरेण । इतिधात्वर्थनिर्णयः ।

---

**स्वाश्रयेति** । अत एव-कारकाणां क्रियान्वयनियमादेव। **तात्पर्यमिति**। अयंभावः—भीष्मत्वावच्छिन्नमपि कर्म कटत्वावच्छिन्नमपि कर्म। तत्र कटकर्म-कत्वावच्छिन्ने कृञ्धात्वर्थे भीष्मकर्मकत्वस्यान्वयः। तयोरभेदान्वयस्तु-बोधविशिष्टवैशिष्ट्यावगाहिमर्यादया योग्यत्वाच्च भवतीति सर्वं सुस्थम् ।

**अरुणाधिकरणेति** । तत्र ज्योतिष्टोमप्रकरणे “ अरुणया एक हायन्या पिङ्गाक्ष्या सोमं क्रीणाति ” इति श्रूयते । तत्र अरुणशब्दोऽन्वय-व्यतिरेकाभ्यां गुणवचनः, अरुणत्वजातिवचनो वा । तृतीय याच शक्यस्य गुणस्यैव करणत्वमुच्यते। साक्षाद् गुणस्य क्रयणकरणत्वासम्भवेऽपि रूपरसा-दितारतम्येन “ रूपेण क्रीणाति ” “ रसेन क्रीणाति ” इत्यादिप्रयोगाणां पनसाम्रादिषु दर्शनात्—आरुण्यस्यापि स्वाश्रयद्रव्यद्वारा करणत्वोपपत्तिः । एवञ्चारुण्यस्य प्रथमं क्रयणेऽन्वये तस्य साक्षात् क्रयणकरणत्वासम्भवेन द्रव्यापेक्षायामारुण्यस्य प्राकरणिकसर्वद्रव्येषु सन्निवेशे प्राप्ते प्रकरणापेक्षया-वाक्यस्य बलीयस्त्वादारुण्यवाचकपदघटितवाक्यघटकैकहायन्यादिपद-शक्यद्रव्ये एव सामानाधिकरण्यानुरोधेनान्वय इत्युक्तमरुणाधिकरणे । उपसंहरति—**तस्मादिति** । क्रियाविशेषणत्वेन—धावनक्रियाविशेषणत्वे-नेत्यर्थः ।

अनुभूयते सुखम्, साक्षात्क्रियते गुरुरित्यादौ निपातानां द्योतकत्वे-नानुभवसाक्षात्काररूपफलयोर्धात्वर्थत्वेन सकर्म्मकत्वम्। कर्म्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्म्मकत्वमिति निष्कृष्टमतेऽपि फलाश्रयतया कर्म्मसंज्ञकस्य धात्वर्थफले एवान्वयौचित्येन द्योतकत्वमावश्यकम्।

द्योतकत्वञ्च स्वसमभिव्याहृतपदानिष्ठवृत्त्युद्बोधकत्वम्। क्वचित्तु क्रिया-

---

**निराकाङ्क्षत्वादिति**। एवञ्च कर्त्तृवृत्तिव्यापारप्रयोज्यफलवत्त्वप्रकारकेच्छानिरूपितविषयताश्रयत्वाभावेन कर्मत्वाभावान्न द्वितीयेति भावः । **राज्ञः पुरुषमिति** । यथा राज्ञः पुरुषमानयेत्यत्र पुरुषस्य साक्षात् क्रियान्वयित्वात् द्वितीया तथा नैयायिकमते मृगस्य साक्षात् क्रियान्वयित्वात् द्वितीया दुर्वारैवेति भावः ।

इति ज्योत्स्नायां धात्वर्थविचारः ।

## अथ निपातार्थनिर्णयः ।

इदमत्राकूतम्—अनुभूयते सुखमित्यादौ प्रतीयमानाऽनुभवादि-निरूपिता शक्तिः धातौ उपसर्गे उपसर्गविशिष्टे धातौ वा ? तत्र न तावदाद्यः पक्षः उपसर्गविरहिते भवतीत्यादावपि अनुभवरूपार्थस्य प्रतीत्यापत्तेः। द्वितीयोऽपि न अनुभवरूपस्यार्थस्योपसर्गार्थत्वेऽप्रकृत्यर्थतया तत्राख्यातार्थानन्वयापत्तेः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः।

'अनुगच्छति' इत्यादावपि अनुभवादिप्रत्ययापत्तेश्च। तृतीयपक्षोऽपि न-विशिष्टानुपूर्व्याः शक्ततावच्छेदकत्वे विनिगमनाविरहादव्यवहितोत्तरत्व-सम्बन्धेनानुविशिष्टभूशब्दस्याव्यवहितपूर्वत्वसम्बन्धेन भूशब्दविशिष्टस्यानोर्वा वाचकत्वकल्पने च गौरवात्। विशिष्टस्य प्रकृतित्वाभावेन तदर्थे प्रत्ययार्थान्वयानापत्तिरपि दोषो बोध्यः। अतोऽनुभवाद्यर्थनिरूपिता शक्तिः धातावेव उपसर्गस्तु द्योतकएवेति प्रघट्टकार्थः। अतएवानुभवसाक्षात्काररूप-फलवाचकत्वेन कर्मणि लडादिव्यवस्था सिद्ध्यति।

**स्वसमभिव्याहृतेति** । स्वं द्योतकत्वेनाभिमतमुपसर्गादिपदं तत्समभिव्याहृतपदं-धातुपदं तन्निष्ठा वृत्तिः—अनुभवाद्यर्थनिरूपिता,तस्या

विशेषाक्षेपकत्वं द्योतकत्वम्। यथा प्रादेशं विलिखतीत्यादौ विमानक्रियाक्षेपकः। प्रादेशं विमाय लिखतीत्यर्थावगमात्। अत एव "अथ शब्दानुशासनम्" इत्यत्राथशब्दस्य प्रारम्भक्रियाक्षेपकत्वं कैयटाद्युक्तं संगच्छते। क्वचित्तु सम्बन्धपरिच्छेदकत्वं द्योतकत्वम्। यथा कर्मप्रवचनीयानाम्। विशिष्टस्य न धातुत्वम्। अपाठात्। अडाद्यव्यवस्थापत्तेश्च।

---

उद्बोधकत्वात् निपातानां भवति लक्षणसमन्वयः। नन्वेवमपि प्रादीनां द्योतकत्वे तेषां पृथगर्थाभावेन क्रियायोगाभावादुपसर्गत्वानापत्तिरिति चेन्न, यत्र यस्य फलस्य धात्वर्थव्यापारविशेषणतया प्रतीतिर्यत्प्रादिगम्या तत्र तादृशार्थबोधकाः प्रादयः उपसर्गसंज्ञका इत्यर्थस्यैव क्रियायोग इत्यादिना विवक्षितत्वात्।

ननु निरुक्तद्योतकत्वस्य विलिखतीत्यत्र 'वि' निपातेऽभावान्निपातानां द्योतकत्वमनुपपन्नमित्यत आह — **क्वचित्त्विति**। **प्रादेशमिति**। अत्र कारकविभक्तेर्लिखतीति क्रियायोगाऽभावाद् विमानक्रियाऽऽक्षिप्यते। विमाय परिच्छिद्य। विप्रादेशपदोपादानेन वक्तुस्तथैव तात्पर्यात्। अन्यथा तदुक्त्यसङ्गतिः स्पष्टैव। लिखधातोर्जीवत्यादिवदकर्मकत्वात्, अक्षररूपकर्मणो धात्वर्थेनोपसंग्रहात्। क्रियाविशेषाक्षेपकत्वरूपद्योतकत्वे प्रमाणमाह—**अतएवेति**। उक्तद्योतकत्वादेवेत्यर्थः। ननु कर्मप्रवचनीयस्थले प्रादिनिपाते द्विविधस्यापि द्योतकत्वस्याभावात् निपातानां द्योतकत्वमनुपपन्नमित्यत आह—**क्वचित्तु सम्बन्धेति** एवञ्चोक्तद्योतकत्वद्वयस्याभावेऽपि सम्बन्धपरिच्छेदकत्वरूपद्योतकत्वस्य तत्रापि सत्त्वान्नानुपपत्तिलवोऽपि। इदं च "कर्मप्रवचनीया" इत्यत्र भाष्ये स्पष्टम्। तत्रहि—कर्म प्रोक्तवन्तः कर्मप्रवचनीयाः, के पुनस्तथा ये सम्प्रति क्रियान्नाहुः। येऽप्रयुज्यमानस्य क्रियामाहुस्ते कर्मप्रवचनीया" इत्यन्वर्थसंज्ञात्वमुक्तम्। हरिरप्याह—

> क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः।
> नापि क्रियापदापेक्षी सम्बन्धस्य तु भेदकः॥ इति।

तथा च भाष्ये क्रियापदम्—अग्रे तत्सम्बन्धपरमिति भावः। विशिष्टस्य—

यत्तु तार्किकाः—उपसर्गाणां द्योतकत्वं तदितरनिपातानां वाचकत्वम्, 'साक्षात्प्रत्यक्षतुल्ययोः' इति कोशात्। नमः पदेन 'देवाय नमः' इत्यादौ नमस्कारार्थस्य; दानावसरे 'गवे नमः' इत्यत्र पूजार्थस्य प्रसिद्धत्वाच्च।

सकर्मकत्वञ्च — स्वस्वसमभिव्याहृतनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वम्। कर्मत्वञ्च स्वस्वसमभिव्याहृतनिपातान्यतरार्थफलशालित्वमित्याहुः।

तन्न। वैषम्ये बीजाभावात्, अनुभूयते इत्यनेन साक्षात्क्रियते इत्यस्य समत्वात्। नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयाभावात् निपातार्थधात्वर्थयोरन्वयस्यैवासम्भवात्। निपातार्थफलाश्रयत्वेऽपि धात्वर्थान्वयं विना कर्मत्वानुपपत्तेश्च।

---

उपसर्गविशिष्टस्य अपाठात्—धातुगणेऽपाठात्। अडादीति। आदिना द्विर्वचनसंग्रहः। एवञ्च विशिष्टस्य धातुत्वे उपसर्गात् पूर्वमडादिविधानापत्तिः, हलादिधातूनामपि उपसर्गाद्यचमादायाजादित्वेनाड्विधानापत्तिश्चेति भावः।

**द्योतकत्वमिति**। अन्यथा उपसर्गाणां वाचकत्वेऽनुभूयते सुखमित्यत्र धातोरकर्मकत्वात् कर्मणि लाद्यनापत्तिः। ननु निपातानां वाचकत्वे साक्षात् क्रियते गुरुरित्यत्र, सकर्मकधातोः कर्मणि लकारविधानेन कृधातोः सकर्मकत्वेऽपि साक्षात्कारार्थे तदभावात् कर्मणि लकारो न स्यात्, स्वार्थफलव्यधिकरणव्यापारवाचकत्वस्यैव सकर्मकत्वेन साक्षात्कारस्य स्वार्थफलत्वाभावादित्याह—**सकर्मकत्वञ्चेति**। **स्वस्वेति**। स्वश्च—धातुश्च, स्व 'धातु' समभिव्याहृतनिपातश्चेति स्वस्वसमभिव्याहृतनिपातौ, तयोरन्यतरस्यार्थभूतं यत्फलं तद्व्यधिकरणव्यापारवाचकत्वमित्यर्थः।

खण्डयति—**तन्नेति**। **साक्षादिति**। विभक्त्यर्थकर्मत्वाद्यन्वयद्वारा—त्वन्वयो भवत्येवेत्यर्थः। विभक्त्यर्थकर्मत्वादिसम्बन्धेनैवान्वये तु भेदेनेत्यस्य—विभक्तिवाच्यभिन्नभेदसम्बन्धेनेत्यर्थः। **असम्भवात्** साक्षात्काररूपं फलं निपातार्थः, व्यापारमात्रं कृधात्वर्थः। फलस्यानुकूलत्वसम्बन्धेन व्यापारेऽ-

यदपि केचिच्छाब्दिकाः—निपातानां वाचकत्वे शोभनः समुच्चय इतिवत् शोभनश्च इत्यापत्तिः। घटस्य समुच्चय इतिवत् घटस्य च इत्यापत्तिश्चेत्याहुः, तन्न। शब्दशक्तिस्वभावेन निपातैः स्वार्थस्य परविशेषणत्वेनैव बोधनेन विशेषणान्वयाप्रसङ्गात्। षष्ठ्यप्राप्तेश्च।

---

न्वयेन साक्षात्कारानुकूलो व्यापार इति बोधो न स्यादिति भावः। **कर्मत्वानुपपत्तेश्चेति** अयं भावः—प्रयागात्काशीं गच्छति देवदत्ते उत्तरदेशसंयोगानुकूलव्यापारप्रयोज्यविभागरूपफलाश्रयत्वात् प्रयागस्य कर्मत्ववारणाय व्यापारप्रयोज्यफलशालित्वं कर्मत्वमित्यत्र फले धात्वर्थविशेषणं देयम्, एवञ्च साक्षादर्थस्य निपातार्थस्य धात्वर्थत्वाभावात् कर्मत्वानुपपत्तिरिति भावः। कर्मत्वञ्च—धात्वर्थव्यापारप्रयोज्यधात्वर्थफलाश्रयत्वं कर्मत्वमिति भावः। प्रत्याख्यानाय **भूषणकारोक्तिमनुवदति—यदपीति**। आहुरिति वैयाकरणमते चादेरनर्थकत्वात् तदर्थेन शोभनपदार्थस्यान्वयाभावान्न तदापत्तिरित्यर्थः। खण्डयति—**तन्नेति**। **शब्दशक्तिस्वभावेनेति**। यथा एकैव पाचिक्रिया पाक इत्यनेन सत्त्वभूताऽभिधीयते, पचतीत्यनेन चासत्त्वभूता, तथा शब्दशक्तिस्वभावान्निपातानामपि इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वमेव न तु विशेष्यतावत्त्वम्। तथा च यत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति नञादिनिपाताभिन्ननिपातभिन्नपदजन्योपस्थितिः कारणम्, अथवा तादृशशाब्दबोधं प्रति नञादिभिन्ननिपातपदजन्योपस्थितिः प्रतिबन्धिका एतादृशः कार्यकारणभावः, प्रतिबन्ध्यप्रतिबन्धकभावो वा कल्पनीय इति न चार्थे

---

क्वचित्पुस्तके च शब्दद्योत्यसमुच्चयस्यासत्त्वभूतत्वेनेत्यधिको दृश्यते पाठः, एवं घटं पटं च पश्येत्याद्यनन्तरं "घटपदस्य घटप्रतियोगिकसमुच्चयवति अप्रसिद्धाशक्तिरेव लक्षणा, च शब्दस्तु तात्पर्यग्राहकः। अत एवोभयोः सामानाधिकरण्येन क्रियायामन्वयात् "द्वितीया" इत्यपि अधिकः पाठो दृश्यते। तत्र चशब्दद्योत्येत्यादिपाठस्य यथा—कथञ्चिद् योजनेऽपि घटपदस्य घटप्रतियोगिकेत्यादि पाठस्याप्राकरणिकत्वेन न कथमपि संगमयितुं शक्यते इति व्याख्यानायापि न संगृहीतो, मूलतोऽपि च निष्काशितः।

किञ्च घटं पटञ्च पश्येत्यादौ घटमित्यस्य क्रियायामेवान्वयः। अत एव ततो द्वितीया। घटं समुच्चयवन्तं पटं पश्येति बोधः। समुच्चयस्य प्रतियोग्याकाङ्क्षायां सन्निहितत्वात् घटस्य प्रतियोगित्वम्, पटे तु समुच्चयस्य भेदेनान्वयो न तु पटस्य समुच्चय इति क्व षष्ठ्यापादनम्। नामार्थयोरभेदान्वयव्युत्पत्तिस्तु निपातातिरिक्तविषया।

---

शोभनपदार्थान्वयः, न वा घटशब्दात् षष्ठी। अनेन प्रकारतासम्बन्धेन-शाब्दबोधं प्रति चादिनिपातविशेषजन्योपस्थितेः कारणत्वमिति कार्यकारण-भावो निरस्तः। घटवद् भूतलमित्यादौ प्रकारतासंबन्धेन घटे शाब्दबोधस्य विद्यमानत्वात् तत्र कारणविरहादित्यलम् इति शिवनन्दनपाण्डेयाः। **षष्ठ्येति**। निपातार्थे विशेषणतयाऽन्वयासम्भवात् सम्बन्धे एव च षष्ठी-विधानात् न घटादौ षष्ठ्याः प्राप्तिरिति तात्पर्यम्।

**क्रियायामेवेति**–अस्य कारकत्वस्य क्रियान्वयितावच्छेदकधर्मत्वादिति शेषो बोध्यः। अत एव क्रियान्वयादेव। भेदेन–अनुयोगितानिरूपकत्व-सम्बन्धेनेत्यर्थः। **क्व षष्ठ्यापादनमिति**। अयं भावः—"षष्ठी शेषे" इति सूत्रभाष्यात् विशेषणवाचकपदादेव षष्ठी। घटं च पटं च पश्येत्यादौ कारकाणां क्रियान्वयनियमात्। क्रियायामन्वये कारकविभक्त्युत्पत्तौ समुच्चयस्य प्रतियोग्याकाङ्क्षायां घटस्य प्रतियोगित्वेऽपि–प्रत्ययान्तत्वेन प्राति-पदिकत्वाभावादेव न विभक्त्युत्पत्तिशङ्कावकाशः। पटस्य च समुच्चये विशेषणत्वाभावादेव न षष्ठी विभक्तिरिति भावः। **निपातातिरिक्त-विषयेति**। यत्किञ्चिद्धर्मावछिन्नाभेद—सम्बन्धावच्छिन्नप्रकारतानिरू-पितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति प्रातिपदिकपदजन्योपस्थितिः कारणमिति कार्यकारणभावमूलिकया "नामार्थयोरभेदातिरिक्तः सम्बन्धोऽ-व्युत्पन्नः" इति व्युत्पत्त्या नामार्थस्य समुच्चयस्य नामार्थे पटे भेदसम्बन्धे-नान्वयो न स्यादिति निपातातिरिक्तत्वं विशेषणं देयम्। एवञ्च प्रकृते चस्य निपातत्वेन व्युत्पत्तेर्विषयत्वाभावेन नास्ति दोषलेश इति भावः।

ननु भवन्मते चादिनिपातानां द्योतकत्वेनार्थवत्त्वाभावत् प्रातिपदिकत्वा-नापत्त्या पदत्वाभावेन वा गच्छति वा भवतीत्यादौ निघातानापत्तिरिति

निपातानामर्थवत्त्वमपि द्योत्यार्थमादायैव। शक्तिलक्षणाद्योतकताऽन्यतमसम्बन्धेन बोधकत्वस्यैवार्थवत्त्वात्। नञ्समासे उत्तरपदार्थप्राधान्यं द्योत्यार्थापेक्षयैव। प्रतिष्ठते इत्यत्र तिष्ठतिरेव गतिवाची धातूनामनेकार्थत्वात्। प्रशब्दस्तु तदर्थगत्यादित्वस्य द्योतकः।

---

शङ्कायामाह—द्योत्यार्थमादायैवेति। आदायेत्यस्य बोध्यमिति शेषः एतेनोत्तरकालिकक्रियाऽभावाल्ल्यपूप्रयोगानापत्तिरित्यपास्तम्। शक्तिलक्षणाऽन्यतररूपवृत्त्यार्थबोधजनकत्वरूपार्थवत्त्वमर्थवत्सूत्रेऽनतिप्रसङ्गाय निविष्टं, तस्य च निपातेष्वभावात् कथं तेषामर्थवत्त्वमित्यत आह—**शक्तीति**। तादृशार्थवत्त्वस्यैव तत्सूत्रे निविष्टत्वादित्यर्थः। एतदर्थमेव व्यञ्जनावृत्तिस्वीकारः। एतेन विषयतापर्याप्त्यधिकरणत्वस्य निवेशेन तत्रादोषः, विशिष्टे एव तत्सत्त्वात्। प्रकृते तु प्रादेरेव तात्पर्यग्राहकत्वादुक्तरीत्याऽर्थधीप्रयोजकतया तत्प्रयोजकधीविषयतापर्याप्त्यधिकरणस्यैव सत्त्वेनादोष इत्यपास्तम्, क्लिष्टत्वात्, व्यतिलुनत इत्यादौ दोषापत्तेश्च।

नन्वेवं निपातानां प्रातिपदिकत्वेऽपि संख्याद्यभावात् कथं विभक्तिरिति चेन्न, "अव्ययादाप्" इति ज्ञापकात्, न च स्वरादीनां सत्त्ववचनानामपि सत्त्वात्तद्विहितसुब्लुग्विधानेन चरितार्थस्य तस्य न ज्ञापकत्वमिति वाच्यम्, 'निपातस्यानर्थकस्ये'ति वार्तिकात् प्रातिपदिकत्वस्य विधानात्। न च प्रत्याख्यायते तद् वार्तिकमिति वाच्यम्, "कृत्तद्धितसमासाश्च" १।२।४६। इत्यनुक्तसमुच्चयार्थकचकारेणानर्थकनिपातानां संग्रहात् प्रातिपदिकत्वविधानात् "तद्धितश्च" इति सूत्रभाष्योक्त्या सर्वविभक्त्येकवचनाङ्गीकारत्। ननु अब्राह्मण इत्यादौ नञ्समासे पूर्वपदस्यानर्थकत्वेनोत्तरपदार्थप्राधान्याभावात् तत्पुरुषलक्षणाव्याप्त्यापत्तिरित्यत आह—**नञ् समास इति**। अयंभावः—पूर्वपदार्थनिष्ठप्रकारतानिरूपितविशेष्यताशालिबोधजनकत्वमुत्तरपदार्थप्रधानत्वम्। अत्र पूर्वपदार्थपदेन वाच्यलक्ष्यद्योत्यात्मकस्त्रिविधोऽपि अर्थो गृह्यते प्रकृते च "अब्राह्मणः" इत्यादौ आरोपितब्राह्मणत्वरूपद्योत्यार्थे प्रकारतायाः सत्त्वात् न दोषः आरोपितब्राह्मण इति च बोध इति भावः। एवमुपसर्गान्यनिपातानां द्योतकत्वे वाचकत्वे च

अत एव धातुः पूर्वं साधनेन युज्यते पश्चादुपसर्गेणेति सिद्धान्तितम्। साधनं कारकं तत्प्रयुक्तकार्येण, उपसर्गेण उपसर्गसंज्ञकशब्देन । तत्र हि भाष्ये "पूर्वं धातुरुपसर्गेण युज्यते, पश्चात्साधनेनेति। नैतत्सारं पूर्वं धातुस्साधनेन युज्यते पश्चादुपसर्गेण, साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टीति। सत्यमेवमेतत्।

यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते। अवश्यं चैतदेवं विज्ञेयं यो ह्येवं मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति तस्य आस्यते गुरुणा इत्यकर्मकः उपास्यते गुरुरिति केन

---

व्यवस्थितत्वेनोक्तेऽप्युपसर्गाणां सर्वथा द्योतकत्वमेव, अन्यथा प्रतिष्ठत इत्यत्र गमनत्वेन रूपेण बोधानापत्तेः। स्थाधातोर्गतिनिवृत्त्यर्थकत्वे अभावस्य प्रशब्दार्थत्वे गत्यभावो नास्तीत्येव प्रत्ययापत्तेः। नचात्र तथा बोधसम्भावनाऽपि, गत्यभावसम्बन्धित्वेनानुपस्थितेः, अन्यथा घट अभाव इत्यत्रापि तथा-बोधापत्तेः। नञ्समभिव्याहारे चानादिसिद्धतथाव्युत्पत्तिस्वीकारान्न दोषः। नापि तथा बोधानुभवः। अतस्तेषां द्योतकत्वमेव। तदेतद् ध्वनयन् तत्र भाष्यसम्मतिमाह—**प्रतिष्ठते इत्यत्रेति**। इत्यत्रापीत्यर्थः।

**तदर्थेति**। धातोरित्यादिः, तदर्थगतेः—स्थाधात्वर्थगतेः आदित्वस्य द्योतक इत्यर्थः। तेन प्रतिष्ठते इत्यस्य गन्तुं प्रवर्तते इत्यर्थः। अत एव—निपातानां द्योतकत्वादेव। **पश्चादुपसर्गेणेति**। तेन "प्रत्ययः" इति निर्देशः संगच्छते, अन्यथा पूर्वं सवर्णदीर्घे निर्देशासङ्गतिः स्पष्टैव स्यादिति-भावः। ननु "विष्वग्देवयोः" इत्यत्राप्रत्ययग्रहणेन तदादिविधिर्ज्ञापितत्वात् कथं धातूपसर्गकार्यस्यान्तरङ्गत्वमिति अत आह—**नैतत्सारमिति**। **निर्वर्त्तयतीति**। साध्यत्ववैशिष्ट्येन बोधयतीत्यर्थः। अतः पूर्वं तत्प्रयुक्त-कार्यमिति भावः। ताम्—तेन रूपेण ज्ञाताम्। विशिनष्टि—स्वद्योत्यविशेषण-वैशिष्ट्येन बोधयति। **सत्यमेवमेतदिति**। उपसर्गात्पूर्वं साधनयोग इति सत्यम्, परंतु धातूपसर्गसम्बन्धकृतो योऽर्थस्तमभ्यन्तरं कृत्वा स्वबोध्यं कृत्वा साधनयोगे क्रियात्वावगतौ उपसर्गयोगः। नहि केवलधातुना सोऽर्थः प्रतीयते। **यस्त्वसाविति**। अयं भावः—वक्ता धातोरेव विशिष्टमर्थं

सकर्मकः स्यात्" इति।

हरिणाऽप्युक्तम्—

धातोस्साधनयोगस्य भाविनः प्रक्रमाद्यथा।
धातुत्वं कर्मभावश्च तथाऽन्यदपि दृश्यताम्॥
बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः।
अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते॥ इति।

अस्यार्थः—यथा भाविसाधनसम्बन्धाश्रयणेन क्रियावाचित्वमाश्रित्य धातुसंज्ञोच्यते, यथाच सन्प्रत्यये चिकीर्षिते भावीषिकर्मत्वमाश्रित्योपक्रमे एवेषिकर्म्मत्वमुक्तम्, तथा भाव्युपसर्गसम्बन्धादुपक्रमे एव विशिष्टक्रिया-वाचकत्वं दृश्यताम्। धातूपसर्गयोः सम्बन्धं बुद्धिविषयीकृत्योपसर्गार्थकृतो विशेषो धातुनैवाभ्यन्तरीकृतः पदप्रयोगकाले उपसर्गसम्बन्धे सति प्रकाशते। श्रोतुरिति शेषः। उपसर्गयोगात्प्रागेव धातुनैवोपसर्गार्थविशिष्टः स्वार्थ उच्यते इति तात्पर्यम्। पूर्वं धातुरुपसर्गेणेति तु तदर्थस्य धात्वर्थान्तर्भावाद् व्यवहारः।

चन्द्र इव मुखमित्यादौ चन्द्रपदस्य स्वसदृशेऽप्रसिद्धा शक्तिरेव लक्षणा। "नञिवयुक्तमन्यसदृशाधिकरणे" इति न्यायात्। इवपदं तात्पर्यग्राहकम्। तात्पर्यग्राहकत्वञ्च—स्वसमभिव्याहृतपदस्यार्थान्तरशक्ति-द्योतकत्वमित्यागतम् इवनिपातस्य द्योतकत्वम्।

---

बुद्धौ कृत्वा साधनसम्बन्धकार्यप्रत्यययोगेन तत्र साध्यत्वावगतौ श्रोतृबोधाय क्रियायोगनिमित्तोपसर्गसंज्ञकशब्दयोगं करोति। अन्यथा केवलधातुतः सर्वत्राप्रतीयमानतया श्रोतुस्तद्बोधो न स्यादिति। तदुक्तं "भूवादयः" इति सूत्रे कैयटेन अनेकार्थत्वाद्धातूनां विशिष्टोऽर्थो धातोरेव, उपसर्गस्तु बोद्धारं प्रति तदर्थद्योतक इति, एवञ्च पूर्वमुपसर्गेण योगो नाम तदर्थसम्बन्धः, तत उपसर्गयोगात् पूर्वं साधनकार्ययोगः। तत उपसर्गशब्दयोग इति। अनेन कैयटेन द्वयोरपि एकार्थप्रतिपादकत्वं समायाति। अत्रैव हरिं प्रमाणयति—**धातोस्साधनयोगस्येत्यादि**। विस्तरस्तु मञ्जूषायां द्रष्टव्यम्। **स्वसदृश इति**—चन्द्रनिष्ठप्रतियोगितानिरूपकसादृश्यवतीति-भावः।

यत्तु इवार्थस्सादृश्यं, तत्र प्रतियोग्यनुयोगिभावेनैव चन्द्रमुखयोरन्वयोपपत्तौ किं लक्षणया। तथा च चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमिति बोध इत्याहुः। तन्न। चन्द्र इव मुखं दृश्यते, चन्द्रमिव मुखं पश्यामीत्यादौ चन्द्रपदस्य मुखरूपकर्मसामानाधिकरण्याभावादुक्तानुक्तत्वप्रयुक्तविभक्त्यनापत्तेः षष्ठ्यापत्तेश्च।

परे त्विवशब्दस्योपमानताद्योतकत्वम्। उपमानत्वञ्च—उपमानोपमेयोभयनिष्ठसाधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वम्। तद्धर्मवत्तया परिच्छेद्यत्वञ्चोपमेयत्वम्। साधारणधर्मसम्बन्धश्च क्वचिद् विशेष्यतयाऽन्वेति क्वचिद्

---

नञिवयुक्तेति। नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिरितिन्यायस्वरूपम्। नञ्युक्तम् इवयुक्तञ्च पदं स्वबोध्यार्थभिन्नस्य स्वबोध्यार्थसदृशस्य च बोधकमिति तदर्थः। नञ्पदमिवपदञ्च तात्पर्यग्राहकम्। तथा ह्यर्थगतिः। सादृश्यप्रतियोगितावच्छेदकव्यापकीभूतधर्मेण सादृश्यं ग्राह्यम्। प्रकृते चाह्लादकत्वं तथाविधो धर्मः। न च चन्द्र इव चन्द्र इत्यापत्तिः, चन्द्रत्वस्य चन्द्रत्वव्यापकत्वात्, स्वस्यापि स्वव्यापकत्वनियमादिति वाच्यम्, सादृश्यप्रतियोगितावच्छेदकव्यापकीभूतधर्माश्रयवृत्त्यसाधारणधर्मभिन्नत्वस्य व्यापकीभूतधर्मे विशेणत्वेनादोषात्। वस्तुतस्तु सादृश्यप्रतियोगितावच्छेकविशिष्टधर्मेण सादृश्यं ग्राह्यम्, वै० स्वव्यापकत्वं, स्वभिन्नत्वं, स्वव्यापकाव्यापकत्वमेतत्त्रितयसम्बन्धेन प्रमेयत्वस्य सादृश्यप्रयोजकत्ववारणाय तृतीयः सम्बन्ध इति श्रीशिवनन्दनपाण्डेयाः।

इवार्थसादृश्ये प्रतियोगितानिरूपकत्वसम्बन्धेन चन्द्रपदार्थान्वयः, तस्य चाश्रयतया मुखे। एवञ्च चन्द्रनिष्ठप्रतियोगितानिरूपकसादृश्यवत् मुखमिति बोधः। निपातानां वाचकत्वे लक्षणां विनैव बोधसम्भवे लाघवात् वाचकत्वमेव युक्तमिति तार्किकमतं निराकरोति—तन्नेति। अयं भावः चन्द्रस्येवार्थे सादृश्ये विशेषणत्वेन एकत्रविशेषणं नापरत्रेति सिद्धान्तात् मुखेन सामानाधिकरण्यासम्भवात् कर्त्तृकर्मणोर्लकारे न तदनुरोधिनी विभक्तिः, प्रत्युत भेदे षष्ठ्येव स्यात्। द्योतकत्वमते तु चन्द्रपदस्य चन्द्रसादृश्यवति लक्षणया तस्य चाभेदेन मुखेऽन्वयात् विशेष्यानुरोधिनी विशेषणे

विशेषणतया। एवञ्च चन्द्र इव आह्लादकं मुखमित्यादौ आह्लादकोपमानभूत-चन्द्राभिन्नमाह्लादकं मुखमिति बोधः। चन्द्र इव मुखमाह्लादयतीत्यादौ चोपमानभूतचन्द्रकर्तृकाह्लादाभिन्नो मुखकर्तृकाह्लाद इति बोधः। इदम्—"उपमानानि सामान्यवचनैः" इत्यत्र भाष्ये स्पष्टमित्याहुः।

नञ्द्विविधः—पर्युदासः प्रसज्यप्रतिषेधश्च। तत्रारोपविषयत्वं नञ्-पर्युदासद्योत्यम्। आरोपविषयत्वद्योतकत्वञ्च नञः समभिव्याहृतघटादि-पदानामारोपितप्रवृत्तिनिमित्तबोधकत्वे तात्पर्यग्राहकत्वम्।

प्रवृत्तिनिमित्तं घटत्वब्राह्मणत्वादि। तस्मात् अब्राह्मण इत्यादौ आरोपितब्राह्मणत्ववान् क्षत्रियादिरिति बोधः। अतएवोत्तरपदार्थप्राधान्यं नञ्तत्पुरुषस्येति प्रवादस्सङ्गच्छते। अत एव च 'अतस्मै ब्राह्मणाय' 'असः

---

विभक्तिरिति सर्वमनवद्यम्। स्वमतमाह—**परेत्विति**। **ईषदितरेति**। स्वल्पभेदवदित्यर्थः। एवञ्चोपमानोपमेयोभयवृत्तिसाधारणधर्मत्वविशिष्ट-स्वल्पभेदवत्परिच्छेदकत्वमित्यर्थः। चन्द्र इव मुखमित्यत्र उभयनिष्ठाह्ला-दकत्वरूपसाधारणधर्मवत्त्वेन स्वल्पभेदवत्मुखपरिच्छेदकत्वं चन्द्रस्य। आह्लादकत्वेन परिच्छेद्यत्वं मुखस्येति। अत्र भाष्यं प्रमाणयति-**इदमिति**।

**पर्युदास इति**। "द्वौ नञौ समाख्यातौ पर्युदासप्रसज्यकौ। पर्युदासः सदृशग्राही प्रसज्यस्तु निषेधकृत्"॥ **आरोपविषयत्वमिति**। आरोपमात्रं नञर्थः। विषयत्वं तु संसर्ग इत्यर्थः। आरोपितत्वञ्च–तदभाववन्निष्ठविशेष्य-तानिरूपिततन्निष्ठप्रकारताकप्रतीतिविषयत्वं, तथा च 'अब्राह्मणः' इत्यनेन ब्राह्मणत्वाभाववत्क्षत्रियादिनिष्ठविशेष्यतानिरूपितब्राह्मणत्वनिष्ठप्रकारताक-प्रतीतिविषयीभूताब्राह्मणक्षत्रियादिरिति बोधः। **नञ्पर्युदासद्योत्यमिति**। नञ्समासघटकब्राह्मणादिपदानामारोपितब्राह्मणत्वादिप्रवृत्तिनिमित्तमिति नञा द्योत्यते इत्यर्थः। **नञः समभिव्याहृतेति**। यथा अब्राह्मण इत्यत्र नञ्समभिव्याहृतब्राह्मणस्य आरोपितब्राह्मणत्वबोधकत्वे — नञस्तात्पर्य-ग्राहकत्वम्। आरोपितब्राह्मणत्ववानिति बोधः।

**प्रवृत्तिनिमित्तमिति**। तत्त्वञ्च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारताश्रयत्वमिति पक्षधरमिश्रेणोक्तम्। प्राचीनानां नये

शिव' इत्यादौ सर्वनामकार्य्यम्। अन्यथा गौणत्वान्न स्यात्। प्रवृत्तिनिमित्तारोपस्तु सदृशे एव भवतीति "पर्य्युदासः सदृशग्राही" इति प्रवादः। पर्य्युदासे निषेधस्त्वार्थः। अन्यस्मिन्नन्यधर्मारोपस्तु आहार्य्यज्ञानरूपः।

बाधकालिकमिच्छाजन्यं ज्ञानमेवाहार्य्यमिति वृद्धाः। सादृश्यादयस्तु प्रयोगोपाधयः, पर्य्युदासे त्वार्थिकार्थाः। तदुक्तं हरिणा—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥ इति।

तत्सादृश्यं गर्दभेऽनश्वोऽयमित्यादौ। अभावस्तु प्रसज्यप्रतिषेधे वक्ष्यते। तदन्यत्वम् अमनुष्यं प्राणिनमानयेत्यादौ, तदल्पत्वम् अनुदरा कन्या इत्यत्र अर्थात्स्थूलत्वनिषेधेनोदरस्याल्पत्वं गम्यते। अप्राशस्त्यं ब्राह्मणे अब्राह्मणोऽयमिति प्रयोगे। विरोधः असुरः अधर्म इति प्रयोगे।

---

आकाशशब्दस्य स्वरूपतः शब्दाश्रये शक्तिः। तद्वृत्तिशब्दाश्रयत्वे प्रवृत्तिनिमित्तत्ववारणाय प्रथमसत्यन्तोपादानम्। द्रव्यपदं घटत्वोपलक्षितघटं बोधयतु इत्याकारकशक्तिज्ञानात् घटत्वेन घटस्योपस्थितिसत्त्वात् घटत्वे द्रव्यशब्दप्रवृत्तिनिमित्तत्ववारणाय वाच्यत्वे सतीति नवीनाः। पदानां जात्याकृतिविशिष्टवाचकत्वाद् गवादिपदवाच्यावयवसंयोगविशेषरूपसंस्थाने गवादीनां प्रवृत्तिनिमित्तत्ववारणाय वाच्यवृत्तित्वे सतीति विशेषणम्। वृत्तित्वञ्च पदार्थसम्बन्धेन विवक्षितम्। तेन स्वसमवायिसमवेतत्वसम्बन्धेन कालिकादिसाक्षात्सम्बन्धेन वा संस्थानस्य गोवृत्तित्वेऽपि न क्षतिः। दधिशब्दवाच्यावयविरूपदध्नि प्रवृत्तिनिमित्तत्ववारणाय प्रकारताश्रयत्वान्तम्। दध्यवयवस्यापि दधिशब्दवाच्यत्वेन तत्रावयविनः सत्त्वात्। एवं द्रव्यशब्दवाच्यघटस्य कपालरूपद्रव्ये सत्त्वेन तत्रापि तत्त्ववारणाय प्रकारताश्रयत्वान्तमिति। न च पुंस्त्वपुंस्त्वत्वादीनामपि घटादिपदप्रवृत्तिनिमित्तत्वापत्तिः। वाच्यत्व, वाच्यवृत्तित्व, वाच्योपस्थितिप्रकारताश्रयत्वादिति वाच्यम्। स्ववाच्यत्वं, स्ववाच्यवृत्तित्वं, स्ववाच्योपस्थितिप्रकारताश्रयत्वम् स्वनिष्ठशक्तिज्ञानप्रयोज्यशाब्दबोधीयमुख्यविशेष्यतानिरूपितालिङ्गत्वव्याप्यधर्म्मलिङ्गान्यत्वनिष्ठप्रकारताभिन्नप्रकारताश्रयत्वमेतच्चतुष्टयसम्बन्धेन प्रातिपदिक-

ज्योत्स्ना

विशिष्टत्वं प्रवृत्तिनिमित्तत्वमिति परिष्कारेणादोषात् । अत्र लिङ्गत्वव्याप्यधर्माः—पुंस्त्वत्वादयः, लिङ्गं पुंस्त्वम् ।

तत्त्वविदस्तु स्ववाच्यत्व, स्ववाच्यवृत्तित्व, स्ववाच्योपस्थितिप्रकारतावत्त्व, स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वासमानाधिकरणाऽपदार्थसम्बन्धावच्छिन्नप्रकारताविशिष्टत्वसम्बन्धैः प्रातिपदिकविशिष्टत्वं तत्त्वमिति परिष्कुर्वन्ति । सम्बन्धघटकवैशिष्ट्यञ्च स्वानाश्रत्वं, स्वावच्छेदकतानाश्रयत्वमेतदन्यतरसम्बन्धेन । पुंस्त्वपुंस्त्वत्वयोर्न घटपदप्रवृत्तिनिमित्तत्वम् । घटनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वासमानाधिकरणाऽपदार्थसम्बन्धावच्छिन्नप्रकारतायाः पुंस्त्वनिष्ठत्वात् तदाश्रयत्वस्य तदवच्छेदकताश्रयत्वस्य च पुंस्त्वपुंस्त्वत्वयोः सत्त्वात् । भेदभेदत्वयोस्तु एवशब्दप्रवृत्तिनिमित्तत्वं नाभ्याहतम् । पार्थ एव धनुर्धर इत्यत्र पार्थत्वावच्छिन्नप्रतियोगिकभेदसम्बन्धाभाववान् धनुर्धर इति बोधात् प्रतियोगित्वसम्बन्धावच्छिन्नपार्थत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः अभावत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतायाश्च भेदे सत्त्वात् विशेष्यत्वासमानाधिकरणप्रकारातताया अभावात् । एवं "सत्कृतालङ्कृतां कन्यां यो ददाति स कूकुदः" इत्यत्र सत्कारपूर्वकालङ्कारावीशिष्टकन्याकर्मकदानकर्तृत्ववाचककूकुदशब्दस्य सत्कारादयः प्रवृत्तिनिमित्तम् । पशुशब्दस्य लोमत्वादयः प्रवृत्तिनिमित्तम् तस्य लोमवल्लाङ्गूलवति विशिष्टशक्तिस्वीकारादिति दिक् ।

यत्तु पदजन्योपस्थितीयमुख्यविशेष्यतावच्छेदकत्वं प्रवृत्तिनिमित्तत्वमिति केचन परिष्कुर्वन्ति तत्तुच्छम् । पुंस्त्वस्यापि प्रवृत्तिनिमित्तत्वापत्तेः । नापि यत्पदप्रवृत्तिनिमित्तत्वं यत्र धर्मे विवक्षितं तत्पदनिष्ठजनकतानिरूपितजन्यतावद्बोधीयविषयतात्वावच्छिन्नाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितश्वरेच्छीयविशेष्यतावच्छेदकत्वं प्रवृत्तिनिमित्तत्वम् । उक्तदोषात् । अत एव—नञ आरोपितार्थद्योतकत्वादेवेत्यर्थः । अत एव—नञ्तत्पुरुषस्यो-

पर्य्युदासस्तु स्वसमभिव्याहृतपदेन सामर्थ्यात्समस्त एव (प्रायः[1])। क्वचित्तु "यजतिषु ये यजामहं करोति नानुयाजेषु" इत्यादौ घटः अपटो भवतीत्यर्थके घटो न पट इत्यादौ च समासविकल्पादसमासेऽपि। अत्रान्योन्याभावः फलितो भवति। प्रसज्यप्रतिषेधस्तु समस्तोऽसमस्तश्चेति द्विविधः। तत्र विशेष्यतया क्रियान्वयनियमात्सुबन्तेनासामर्थ्येऽपि "असूर्यललाटयोः' इत्यादिज्ञापकात्समासः। तदुक्तम्—

प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्। इति।

---

त्तरपदार्थप्राधान्यादेव, अन्यथा–उत्तरपदार्थस्य प्राधान्याभावे। **गौणत्वान्न स्यादिति**। अयं भावः—यथा अतिसर्वे इत्यत्र सर्वकर्मकातिक्रमणकर्त्ता इत्यर्थे सर्वशब्दस्य प्रकारताप्रयोजकतया इतरपदार्थनिष्ठविशेष्यतानिरूपितो-पस्थितीयप्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्य सत्त्वात् 'संज्ञोपसर्जनी-भूतानां प्रतिषेधो वक्तव्यः' इति निषेधात् सर्वनामता न भवति, तथा नञ्समासे उत्तरपदार्थस्य प्राधान्याभावे "अतस्मै ब्राह्मणायेत्यादौ" तच्छब्दादी-नामितरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वेन गौणत्वात् सर्वनामसंज्ञाकार्यं न स्यादिति भावः। **बाधकालिकमिति**। पटो घट-त्वाभाववान् इति बाधनिश्चयदशायामपि अयं घट इत्याकारकं यत् ज्ञानमिच्छया समुत्पद्यते तदेवाहार्यम्।

ननु भ्रमज्ञानस्यापि आहार्यत्वं स्यात् तत्रापि तदभाववति तत्प्रकार-कज्ञानत्वादिति चेन्न शुक्तौ रजतात्वाभावनिश्चयदशायां शुक्तौ रजतमिति ज्ञानानुदयात्। इच्छया यदि तत्रापि रजतमिति ज्ञानं भवेत्तदा भवतु तत्राप्याहार्यत्वं न काचनापि विप्रतिपत्तिरिति भावः। क्रमिकमुदाहरणमाह—**तत्सादृश्यमिति**। **अनश्वोऽयमिति**। अश्वसदृशोऽयं गर्दभ इत्यर्थः। अमनुष्यम्—मनुष्यभिन्नम् अनुदरा—ईषदुदराविशिष्टा। अब्राह्मणः—अप्रशस्तब्राह्मणः। असुरः सुरविरुद्धः, अधर्मः–धर्मविरुद्धः।

**असूर्यललाटयोरिति**। अयं भावः-असूर्यं पश्या राजदाराः इत्यत्र सूर्यं न पश्यन्तीत्यर्थे नञर्थस्य क्रियान्वयात् सूर्यशब्देनान्वयाभावात् सामर्थ्या-भावेन असूर्यपदोपपदात् दृशेः खश्विधानमनर्थकं स्यात्। **क्रियया सह-**

---

(१) एतन्मध्यस्थः पाठो बहुषु पुस्तकेषु नास्ति।

अत्र क्रियापदं गुणस्याप्युपलक्षणमिति बहवः। अत एव नञ्सूत्रे भाष्ये "प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं कुरुत" इत्युक्तम् । उदाहरणम्–नास्माकमेकं प्रियमिति । एकप्रियप्रतिषेधे बहुप्रियप्रतीतिः । एवं 'न सन्देहः, नोपलब्धिः' इत्याद्युदाहरणं गुणस्य । सन्देहादीनां गुणत्वात् ।

क्रियोदाहरणम्—'अनचि च' 'गेहे घटो नास्ति' इत्यादि । तस्य समस्तस्य तु अत्यन्ताभाव एवार्थः । असमस्तस्य तु अत्यन्ताभावोऽन्योन्याभावश्च । तादात्म्येतरसम्बन्धाभावोऽत्यन्ताभावः । तदात्म्यसम्बन्धाभावोऽन्योन्याभावो भेद इत्यर्थः । असूर्य्यम्पश्या राजदाराः, गेहे घटो नास्ति, घटो न पटः, इत्युदाहरणानि ।

---

**यत्र नञ्** । समासाघटकनञर्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधं प्रति भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्योपस्थितेः कारणतया धात्वर्थप्रतियोगिकाभावविशेष्यक एव बोध इति भावः । प्रसज्य-विधाय ततः प्रतिषेध इत्यर्थः । तत इत्यस्य व्याख्यानं पश्चादित्यर्थः । **नास्माकम् एकं प्रियमिति** । अत्र हि एकत्वप्रतिषेधेन संख्यान्तरप्रयुक्तप्रियप्रतीतिर्भवति ; **न सन्देह इति** । अत्र सन्देहात्यन्ताभावः प्रतीयते । **गुणत्वादिति** । एकधर्मिकविरुद्धनानाधर्मप्रकारकज्ञानरूपत्वादित्याशयः । एकं प्रियमित्यत्र एकत्वं संख्यारूपो गुणस्तस्य प्रतिषेधः । अस्माकं प्रियमेकं नेति तदर्थात् । एवञ्चैकत्वसंख्याप्रतिषेधः फलति । तदुक्तं कैयटेन अत्रैकत्वसंख्याप्रतिषेधादेव संख्यान्तरयुक्तवस्तुप्रतीतिरिति । न चास्तीत्यस्याध्याहारादेककर्तृकसत्तैव निषिध्यते इति वाच्यम्, प्रसज्य क्रियागुणौ पश्चान्निवृत्तिं करोति इति भाष्यविरोधात् ।

**अनचिचेति** । अजव्यवहितपूर्वत्वावच्छिन्नयर् निष्ठस्थानितानिरूपितादेशतावद्द्वित्वकर्तृकसत्ताप्रतियोगिकोऽभाव इति बोधः । **गेहेघटोनास्तीति** । गेहनिरूपिताधेयतावद्घटकर्तृकसत्ताप्रतियोगिताकाभाव इत्यर्थः । तस्य–प्रसज्यप्रतिषेधस्य । अन्योन्याभावश्चेति । अस्य 'अर्थ' इत्यस्य शेषो बोध्यः । ननु अभावस्य केन रूपेण शक्यता । न तावद-

ज्योत्स्ना

भावत्वेन, चैत्रो न पचतीत्यादावपि भेदबोधापत्तेः । प्रसज्यप्रतिषेधत्वेन शक्यत्वेऽपि स एव दोषः, भेदस्यापि योग्यानुपलब्धिजन्यप्रत्यक्षविषयत्वात् । तदनुपस्थितावपि नञोऽभावबोधाच्चेति चेन्न, नञोऽन्योन्याभावत्वेनात्यन्ताभावत्वेन वाऽभावे शक्तिकल्पनात् ।

**अत्यन्ताभाव इति** । अन्तम्-स्वप्रतियोगिनिष्ठाभावप्रतियोगित्वम्, अतिक्रान्तः—व्यभिचरितोऽत्यन्तः, स चासौ अभावश्चेति विग्रहः, तस्य भावस्तत्त्वम् । स्वप्रतियोगिनिष्ठस्वसदृशाभावप्रतियोगित्वव्यभिचार्यभावत्वमिति निष्कर्षः । 'अन्तो जघन्यं चरमम्' इत्यमरेणान्तशब्दस्य जघन्यनिरूपितवृत्तिमत्त्वबोधनात् । जघन्यत्वञ्चोक्तार्थस्य जघन्यवृत्तिप्रतिपाद्यत्वात् । यथा—'घटाभाव' इत्यत्र स्वः—घटाभाव, तत्प्रतियोगी घटः, तन्निष्ठोऽत्यन्ताभावः—घटपटाद्यभावः, न तु घटत्वात्यन्ताभाव इति घटत्वं घटाभावप्रतियोगिघटनिष्ठात्यन्ताभावाप्रतियोगि । एवञ्च घटाभावप्रतियोगिनिष्ठात्यन्ताभावप्रतियोगित्वाभाववति घटत्वेऽपि घटाभावस्य सत्त्वेन घटाभावः स्वप्रतियोगिनिष्ठात्यन्ताभावप्रतियोगित्वव्यभिचारीतादृशप्रतियोगित्वाभावाधिकरणे घटत्वेऽपि सत्त्वात् । घटान्योन्याभावस्य तु स्वस्वप्रतियोगिनिष्ठान्योन्याभावप्रतियोगित्वव्यापकत्वात् तद्व्यावृत्तिः । इदञ्च योगार्थमात्रप्रदर्शनम् । लक्षणं त्वत्यन्ताभावस्य तादात्म्येतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । **अन्योन्याभावः इति** । "कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये" इति वार्तिकेनान्यशब्दस्य द्वित्वे बहुलग्रहणात् समासवद्भावाभावे द्वित्वपूर्वभूतान्यप्रकृतिकसप्तम्याः सावादेशे 'अन्योन्यङि' इत्यस्याभावशब्देन समासे बहुलग्रहणबलेनैव सोरलुकि "सुपो धातु" इति सप्तम्या लुकि च 'अन्योन्याभाव' इति पदं सिद्ध्यति । अन्योन्यस्मिन् तादात्म्येनाभावः—अभवनमित्यन्योन्याभावः । तादात्म्यं–तस्यआत्मा स्वरूपं तदात्मा, तदात्मनो भावस्तादात्म्यम्, अभेद इत्यर्थः । अन्योन्याभावस्य प्रतियोगितावच्छेदकसम्बन्धश्च तादात्म्यमेव । अत एव तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्या

प्रागभावप्रध्वंसाभावौ तु न नञ्द्योत्यौ । तत्रात्यन्ताभावो विशेष्यतया तिङन्तार्थक्रियान्वय्येव । नञर्थात्यन्ताभावविशेष्यकबोधे तिङसमभिव्या हृतधातुजन्योपस्थितेः कारणत्वात् । तथा च घटो नास्तीत्यादौ घटकर्तृक-सत्ताप्रतियोगिकोऽभाव इति बोधः । अतएवाहं नास्मि त्वं नासीत्यादौ-घटौ न स्तो घटा न सन्तीत्यादौ च पुरुषवचनव्यवस्थोपपद्यते । अन्यथा युष्मदादेस्तिङ्सामानाधिकरण्याभावात् मदभावोऽस्तीत्यादाविव सा न स्यात् । असंदेह इत्यादौ तु आरोपितार्थकनञैव समासः ।

---

भावत्वमित्यभिधीयते । यथा यत्र 'घटः पटः' इत्यत्र समानविभक्तिकत्वात् "नीलोघटः" इतिवत् घटपटयोरभेदः प्रतीयते, तत्र 'घटो न पटः' इत्युक्तौ पटभिन्नो घटः, इति बोधो जायते । सोऽयमभेद-निषेधकोऽभावोऽन्योन्याभावः पटभिन्नो घट इतिवत् घटभिन्नः पटः इत्यपि प्रतीयते । एवञ्च स्वप्रतियोगिनिष्ठान्योन्याभावप्रतियोगित्व व्यापकोऽन्योन्याभावः ।

एवम्—अन्योन्यपदं तादात्म्यसम्बन्धपरम्, तेनाभाव इति तृतीया-समासः । अवच्छिन्नप्रतियोगिताकत्वं तृतीयार्थः । एवञ्चासाधारणधर्मरूप तादात्म्यत्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावत्संसर्गतानिरूपकप्रतियो-गिताकाभावत्वमन्योन्याभावत्वं फलितम् । तेन संयोगेन संयोगी नास्ति, समवायेन समवायी नास्ति इत्याद्यत्यन्ताभावे न व्यभिचारः । **प्राग-भावेति** । भविष्यतो घटस्य स्वाधिकरणे कपालादौ योऽभावः 'अत्र घटो भविष्यति' इत्यादिवाक्याभिलप्यमानः स प्रागभाव इत्युच्यते । भूतस्य घटस्य यो नाशः स 'घटोनष्ट' इति वाक्यबोध्यः प्रध्वंसाभाव इत्युच्यते । **न नञ्द्योत्याविति** । ननु रक्तघटे श्यामो नास्ति, कपाले घटो नास्तीत्यादौ क्रमेण ध्वंसप्रागभावौ प्रतीयेते, तौ च नञ्द्योत्याविति चेन्न, तत्रापि अत्यन्ताभावस्यैवावगाह्यमानत्वात् । अन्यथा घटः पूर्वं रक्तः, ततः श्यामः, ततः पुनरपि रक्तः, तत्र मध्ये श्यामरूपतादशायां रक्तरूपं नास्तीति प्रत्ययः कथं स्यात् । तस्मात् प्रागभावप्रध्वंसाभावौ नात्यन्ता-भावातिरिक्ताविति रहस्यम् । तत्र — अत्यन्ताभावान्योन्याभावयोः । **तिङन्तार्थेति** । अत्र तिङन्तपदं कृदन्तस्याप्युपलक्षणम् । उपलक्षणत्वं

अत्यन्ताभावस्तु फलित एव। वायौ रूपं नास्तीत्यत्र तु तात्पर्यानुपपत्त्या रूपप्रतियोगिकात्यन्ताभावे लक्षणा। तेन वाय्वधिकरणिका रूपाभावकर्तृका सत्तेति बोधः। वस्तुतस्तु समनियताभावैक्यमाश्रित्य फलितार्थ एवायम्। अरूपमस्तीत्यर्थकं वा तत्। एतेनात्यन्ताभावप्रकारकक्रियाविशेष्यको बोध इति तार्किकोक्तमपास्तम् ॥

---

च शक्यबोधकत्वे सति शक्येतरबोधकत्वम्। यथा काकवन्तो देवदत्तस्य गृहा इत्यत्र काकपदं काकस्य बोधकं तदितरपक्षिणामपि। **नञर्थात्यन्ताभावेति**। नञ्पदजन्यप्रतीतिविषयात्यन्ताभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधं प्रति भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्योपस्थितिः कारणं फलितमिति भावः।

**पुरुषवचनव्यवस्थोपपद्यते इति**। अनञ्समासग्रहणज्ञापितात् "नञ्समासे पूर्वपदार्थप्राधान्येऽपि उत्तरपदार्थप्राधान्यप्रयुक्तकार्यप्रवृत्तिः" इति वचनादपि पुरुषव्यवस्था सिद्ध्यतीत्यपि बोध्यम्। अन्यथा–नञर्थाभावस्य धात्वर्थापेक्षया विशेष्यत्वाभावे। **सा नस्यादिति**। एतत्त्वं प्रागेवावेदितम्। ननु नञर्थात्यन्ताभावस्य क्रियात्वावच्छिन्नप्रतियोगिताकत्वे वायौ रूपं नास्तीत्यत्र वायुनिरूपिताधेयतावद्रूपस्याप्रसिद्ध्या, तत्कर्तृकसत्तायाश्चाप्रसिद्ध्या अप्रसिद्धप्रतियोगिताकाभावस्यास्वीकारात् नञर्थात्यन्ताभावस्य विशेष्यतया तिङन्तार्थक्रियान्वयित्वं न संभवति तथा च रूपप्रतियोगिकाभावस्यैव सर्वानुभवसिद्धत्वमित्यत आह—**वायाविति। तात्पर्यानुपपत्त्येति**। रूपाभावस्यैव बोधविषयत्वेन तात्पर्यविषयत्वादिति भावः। रूपपदस्य तादृशाभावे लक्षणा, नञ्पदञ्च तात्पर्यग्राहकमिति भावः। कारकस्य क्रियान्वयित्वेन वायोः सत्तायामन्वयः।

ननु वैयाकरणमते लक्षणाया जघन्यवृत्तित्वादिदमसंगतमित्याह-**वस्तुतस्त्विति। समनियतेति**। तत्त्वञ्च यत्किञ्चिद्विशिष्टत्वं वै. स्वसमानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्व, स्वाभाववदवृत्तित्वैतदुभयसम्बन्धेन। यत्र रूपाभावोऽस्ति तत्रैव रूपकर्तृकसत्ताभावोऽपीति तयोः

नन्वेवं घटसत्तारूपोऽर्थः प्रथमं बुद्धो नञा निवर्तयितुमशक्यः, सतो निषेधायोगात्, असतस्त्वसत्त्वादेव निवृत्तिसिद्धया निषेधो व्यर्थः। तदुक्तम्—

सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते।
जगत्यनेन न्यायेन नञर्थः प्रलयं गतः ॥

इतिचेत् न। बौद्धो हि शब्दो वाचकः बौद्ध एवार्थो वाच्य इत्युक्तत्वात् बुद्धिसतोऽप्यर्थस्य नञा बाह्यसत्तानिषेधात्। बुद्धौ सन्नपि घटो बहिर्नास्तीत्यर्थात्।

न च घटास्तिपदाभ्यां या घटविषयाऽस्तिबुद्धिर्जाता सा नञा निवर्त्यते किं बौद्धार्थस्वीकारेणेति वाच्यम्। बुद्धेरशब्दावाच्यत्वेन नञा तन्निषेधायोगात्। एतेन बौद्धार्थमस्वीकुर्वन्तो नञर्थबोधाय कष्टकल्पनां कुर्वन्तस्तार्किकाः परास्ताः। घटो न पट इत्यत्र घटपदस्य घटप्रतियो-

---

समनियतत्वं, समनियतयोरैक्यमिति रूपकर्तृकसत्ताभावसिद्धौ रूपाभावः सुतरां सिद्ध इति भावः। **अयमिति**। वाय्वधिकरणिकेत्यादिबोधः। एतेन—पूर्वोक्तहेतुनेत्यर्थः।

एवम्—घटो नास्तीत्यादौ नञा सत्तादिप्रतियोगिकाभावाङ्गीकारे। **घटसत्तारूपोऽर्थ इति**। एवञ्च नञः सत्त्वे घटो नास्तीत्यादौ अभावज्ञाने प्रतियोगिज्ञानं कारणमिति नियमेन पूर्वं प्रतियोगिनः घटकर्तृकसत्ता रूपपदार्थस्योपस्थितौ, पश्चात् नञा तन्निवर्तयितुं न शक्यते, विद्यमानस्य वस्तुनो नञ्सहस्रेणापि निवर्तयितुमशक्यत्वादिति पूर्वपक्षाशयः। तदुक्तं-खण्डनकृतेति शेषः। स—निषेधः। **बौद्ध इति**। अतएव शशशृङ्गादीनां निषेधः प्रातिपदिकत्वञ्च सिद्धम्।

**तन्निषेधायोगात्**। नञ्सत्त्वे येन शब्देन यस्यास्तित्वं प्रतीयते तस्यैवाभावो बोध्यते, बुद्धिश्च नहि सत्तादिशब्दप्रतिपाद्येति भावः। कष्टकल्पनां—शशशृङ्गं नास्तीत्यत्र शृङ्गे शशीयत्वभ्रमादिरूपामित्यर्थः। ननु 'घटो न पटः' इत्यत्र नञो भेदवाचकत्वे भेदे घटस्य प्रतियोगिता-निरूपकत्वसंबन्धेनान्वयार्थं "नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्नः"

गिकभेदाश्रये अप्रसिद्धा शक्तिरेव लक्षणा, नञ्पदं तात्पर्य्यग्राहकम् । तात्पर्य्यग्राहकत्वं द्योतकत्वमेवेत्युक्तम् । अत एवान्योन्याभावबोधे प्रतियोग्यनुयोगिपदयोः समानविभक्तिकत्वं नियामकमिति वृद्धोक्तं सङ्गच्छते ।

यत्तु घटपदं घटप्रतियोगिके लाक्षणिकं नञ्पदं तु भेदवति, अतो घटप्रतियोगिकभेदवान्पट इति बोध इति तार्किकैरुक्तम् । तन्न । भेदवति नञर्थे भेदस्यैकदेशत्वात् तत्र घटार्थानन्वयापत्तेः । 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति न्यायात् । पदद्वये लक्षणास्वीकारे गौरवाच्च । भाष्यमते लक्षणाया निपातानां वाचकत्वस्य च स्वीकाराभावादिति संक्षेपः ।

---

इति व्युत्पत्तौ निपातातिरिक्तत्वविशेषणदाने गौरवमित्यत आह—**घटो न पट इति** । लक्षणाया जघन्यवृत्तित्वादाह—**अप्रसिद्धेति** । अतएव—तादृशलक्षणास्वीकारादेवेत्यर्थः । **संगच्छत इति** । घटस्य प्रतियोगितानिरूपकत्वसम्बन्धेन भेदेऽन्वयः भेदस्य च स्वरूपसम्बन्धेन पटेऽन्वयः घटपदस्य तिङा सामानाधिकरण्याभावात् प्रथमानापत्तौ वृद्धोक्तमसङ्गतं स्यादिति भावः । **समानविभक्तिकत्वमिति** । तत्त्वञ्च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् । साजात्यञ्च विभक्तिनिष्ठ–सुब्विभाजकप्रथमात्वाद्यन्यतमादिना न तु समानानुपूर्वीकत्वेन । शतं ब्राह्मणा इत्यादावन्वयबोधानुपपत्तेः । पीतः पटः इत्यत्र पीतपदोत्तरं या सुविभक्तिः तत्सजातीया पटपदोत्तरं सुविभक्तिः, तत्प्रकृतित्वं पट इति लक्षणसमन्वयः ।

भेदवतीत्यस्य लाक्षणिकमिति शेषो बोध्यः । घटप्रतियोगिकस्य च भेदवतीत्यस्यैकदेशे भेदेऽभेदेनान्वयः । तुश्चार्थे, फलितमाह—**अत इति** । पदार्थः पदार्थेनेति । नित्यपदार्थस्य घटत्वगोत्वादौ अन्वयतात्पर्येण नित्यो घटः नित्यो गौः, इत्यस्य प्रामाण्यवारणाय "यत्किञ्चिद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति मुख्यविशेष्यतया यत्किञ्चित्पदजन्योपस्थितिः कारणमिति कार्यकारणभावमूलिकेयं व्युत्पत्तिः स्वीक्रियते । घटत्वस्य गोत्वस्य च प्रकारतयोपस्थित्या — मुख्यविशेष्यत्वाभावेन न दोषलेशः इति भावः

एवशब्दस्यार्थोऽवधारणमसम्भवश्च। 'एवेचानियोगे' इतिवार्तिके नियोगोऽवधारणं तदभावोऽसम्भव इति कैयटोक्तेः। अनयोरर्थयोरेवशब्दो द्योतकः। अतएव तं विनापि तदर्थप्रतीतिः। सर्वं वाक्यं सावधारणम्, इति वृद्धोक्तं सङ्गच्छते। लवणमेवासौ भुङ्क्ते इत्यादौ प्राचुर्यार्थकस्य, घट एव प्रसिद्ध इत्यादावप्यर्थकस्य, केव भोक्ष्यसे इत्यादावसम्भवार्थकस्य च तस्य सत्त्वमित्यालङ्कारिकाः।

---

ननूक्तव्युत्पत्तौ प्रकारतायामभेदसम्बन्धावच्छिन्नत्वनिवेशेन विशेष्यतायां नित्यसाकाङ्क्षेतरवृत्तित्वनिवेशेन वाऽत्र विशेष्यताया नित्यसाकाङ्क्षवृत्तित्वेन नास्ति दोषावकाशः, अत एव चैत्रस्य दासभार्येत्यत्र चैत्रस्य दासत्वरूपैकदेशेऽपि प्रमितोऽन्वयः सिद्ध्यतीत्यरुचेराह—**पदद्वयेइति**। ननु फलमुखं गौरवं दोषानाधायकमित्यरुचेराह—**भाष्यमते** इति। **वाचकत्वस्येति** अत्रेदमाकूतम्—निपातार्थविषये पक्षत्रयं शास्त्रेषु दृश्यते। कुत्रचित् प्रकर्षादीनां निपातार्थानां केवलधातुतोऽप्रतीत्या उपसर्गसम्बन्धात्तदवगम इति उपसर्गाणां विशेषार्थद्योतकत्वमेव। यथा प्रजयतीत्यादौ प्रशब्दः प्रकृष्टजयद्योतकः। तदुक्तं हरिणा—"क्वचित्सम्भविनो भेदाः केवलैरनिदर्शिताः। उपसर्गेण सम्बन्धे व्यज्यन्ते प्रपरादिना" इति प्रथमः। क्वचिच्च उपसर्गाणां वाचकत्वमपि। यथा प्रतिष्ठते इत्यादौ स्थाधातोर्गतिनिवृत्तिवाचकत्वं, प्रशब्दस्य तु गतिवाचकत्वम्। तदुक्तं "स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा" इति द्वितीयः पक्षः। तृतीयस्तु सम्भूय धातूपसर्गौ अर्थमाहतुः उपसर्गस्तु शक्तिमात्रं कुरुते इति अर्थाभिधाने सहकारिण उपसर्गाः। उक्तञ्च वाक्यपदीये—"शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यत" इति, उक्तेषु पक्षत्रयेषु कः पक्षः श्रेयानितिविचारावसरे उपसर्गाणां द्योतकत्वमेवेति वस्तुस्थितिः। प्रतिष्ठत इत्यत्र धातूनामनेकार्थत्वात् स्थाधातोरेव गतिरर्थः। प्रशब्दस्तु तद्द्योतकः। तदुक्तं वाक्यपदीये—"स्थादिभिः केवलैर्यच्च गमनादिर्न गम्यते। तत्रानुमानाद्द्विविधात् तद्धर्मा प्रादिरुच्यते इति।" अस्यार्थः—तिष्ठतिर्गतिनिवृत्तिं प्रसिद्ध्या अभिदधाति। अतः केवलेन तेन गमनं न प्रतिपाद्यते।

ज्योत्स्ना

अनेकार्थाः धातव इति कृत्वा अनुमानाद् गतिवाचकत्वमपि तस्य व्यवस्थाप्यते । उपसर्गस्तु तद्द्योतक एव । धातूनामनेकार्थत्वमुपसर्गाणाञ्च द्योतकत्वमनुमानेन साधयन्नाह—तत्रेति । अनुमानाकारश्च, धातुरनेकार्थः धातुत्वात् उभयवादिसम्मतानेकार्थयज्धातुवत् इति सामान्यानुमानेन धातूनामनेकार्थत्वं, प्रशब्दो द्योतकः प्रशब्दत्वात् प्रपचतीत्यादिदृष्टप्रशब्दवदिति विशेषानुमानेन उपसर्गाणां द्योतकत्वं व्यवस्थापितम् ।

एवं चादिनिपातेष्वपि पक्षत्रयं बोध्यम् । केचिद् उपसर्गवद्द्योतकाः केचिच्च वाचकाः । केचन सम्भूयार्थस्य वाचका इति । तदुक्तं हरिणा "निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः । आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः" इति । अत्रापि द्योतकत्वपक्ष एव न्याय्यः । केवलानां चादीनामप्रयोगात् । यदि वाचकाः स्युस्तदा गवादिवत् केवला अपि प्रयुज्येरन् । तस्मान्न वाचकाः केवलानामप्रयोगात् प्रत्ययवदित्यनुमानं फलितम् । तदुक्तं "चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः । प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते" इति वाक्यपदीये । एवञ्च प्रादीनां चादीनाञ्च निपातानां द्योतकत्वमेवेति हरीणां हृदयम् । नागेशभट्टेभ्योऽपि द्योतकत्वपक्ष एव रोचते । प्रकृतसन्दर्भेषु भूयो भूयो द्योतकत्वपक्षस्यैव समर्थनात् ।

प्राञ्चस्तु निपातत्वावच्छिन्नानां सकलनिपातानां द्योतकत्ववाचकत्वे मन्वते । न तु प्रादीनां द्योतकत्वं चादीनां पुनर्वाचकत्वमेव इति नैयायिकरीतिः साध्वी । वैषम्ये मूलाभावात् । अतएव द्योतकत्वपक्षं समर्थ्य "निपातानां वाचकत्वमन्वयव्यतिरेकयोः" इत्यादिना वाचकत्वपक्षोऽपि समर्थितो भूषणादौ । उपसर्गातिरिक्तनिपाता वाचका द्योतकाश्चेति भगवान् पतञ्जलिः । अव्ययं विभक्तीतिसूत्रे भाष्ये सुमद्राः सुमगधाः सपुत्रः इत्यादावव्ययीभावसमासमाशङ्क्य पूर्वपदप्रधानस्य अव्ययीभावत्वेन अत्र पूर्वपदप्राधान्यं नास्तीत्युक्त्वा "अथवा नेमे समासार्थाः निर्दिश्यन्ते किन्तर्हि अव्ययार्था इमे निर्दिश्यन्ते । एतेष्वर्थेषु यदव्ययं वर्तते तत्सुबन्तेन

तच्चावधारणं त्रिविधम् । विशेष्यसङ्गतैवकारेऽन्ययोगव्यवच्छेदरूपं, विशेषणसङ्गतैवकारेऽयोगव्यवच्छेदरूपं, क्रियासङ्गतैवकारेऽत्यन्तायोग-व्यवच्छेदरूपम् । विशेष्ये—पार्थ एव धनुर्धरः ।

---

सह समस्यते। इत्यवोचत्। कैयटेन च अव्ययस्य श्रुतत्वात् अन्तरङ्गत्वात् तस्यैव विभक्त्यादयो विशेषणानि । तत्र यदा उत्तरपदार्थत्वावच्छिन्नाः समृद्ध्यादयः प्रतिपिपादयिषिताः तदा अव्ययं समृद्ध्यादीनां वाचकम् इति तेषां तदर्थता भवति । सुमद्राः इत्यत्र तु मद्रशब्द एव समृद्धिविशिष्ट-मर्थमाह । सुशब्दस्तु समृद्धिद्योतकः । न तु वाचकः इत्यादि व्याख्यातम् । अनेन भाष्यकैयटव्याख्यानेन स्पष्टमेव निपातानामुभयं प्रतिभाति । उपसर्गाणान्तु द्योतकत्वमेव, स्पष्टञ्चैतत् गतिर्गताविति सूत्रभाष्ये । तत्रस्थभाष्यन्तु "ननु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन । नैतत्सार-मित्यादिना मूले एव भणितमिति दिक्। **एवशब्दस्यार्थ इति**। द्योत्योर्थ-इति भावः। **द्योतक इति**। निपातत्वादिति शेषः। अत एव–द्योतकत्वादेवे-त्यर्थः । तं विनापि–एवशब्दमन्तराऽपि । तदर्थप्रतीतिः–एवार्थावधारणा-सम्भवप्रतीतिरित्यर्थः । तस्य—एवशब्दस्येत्यर्थः ।

**त्रिविधमिति**। अयमाशयः–"अयोगमन्ययोगं चात्यन्तायोगमेव च । व्यवच्छिनत्ति धर्मस्य एवकारस्त्रिधा मतः" इत्यभियुक्तोक्तदिशा एवकारस्यार्थ-त्रयम् । तथाहि यत्र विशेषणान्वित एवकारस्तत्र विशेष्ये विशेषणस्य असंबन्धरूपमयोगं निषेधति । यथा शङ्खः पाण्डुर एवेत्यत्र पाण्डुरस्य विशेषणत्वेन तदन्वितेनैवकारेण विशेष्ये शङ्खे पाण्डुरत्वासंबन्धं व्यवच्छिन्दन् शङ्खस्य पाण्डुरत्वं नियमयति। तथा च शङ्खत्वावच्छेदेन पाण्डुरत्व-समवायाभावाभावः प्रतीयते । पाण्डुरत्वसम्बन्धाभावाभाववान् शङ्ख इति बोधः ।

यत्र पुनर्विशेष्यगत एवकारस्तत्र विशेष्येतरस्मिन् विशेषणीभूतधर्म-सम्बन्धं वारयति । यथा पार्थ एव धनुर्धरः इत्यत्र पार्थभिन्ने धनुर्धरत्व-संबन्धं वारयन् पार्थे धनुर्धरत्वं नियमयति। अत्र एवार्थोऽन्ययोगव्यवच्छेदः, अन्यशब्दस्य भेदाश्रये शक्तिः, योगः—संबन्धः व्यवच्छेदोऽभावः, पार्थस्य

पार्थेतरावृत्ति यद्धनुर्धरत्वं तादृशधनुर्धरत्ववान् पार्थ इति बोधः इत्यन्यस्मिन्धनुर्धरत्वसम्बन्धव्यवच्छेदः। विशेषणे, शङ्खः पाण्डुर एव। अयोगः सम्बन्धाभावः तस्य व्यवच्छेदो निवृत्तिः, द्वाभ्यां निषेधाभ्यां प्रकृतार्थदार्ढ्यबोधनेनाव्यभिचरितपाण्डुरत्वगुणवान् शङ्ख इति बोध इत्ययोगव्यवच्छेदः। न तु नील इति हि फलति। क्रियायां, नीलं सरोजं भवत्येव। अत्यन्तोऽतिशयितोऽयोगः सम्बन्धाभावस्तस्य व्यवच्छेदोऽभावः। तथा च कदाचिन्नीलत्वगुणवदभिन्नं यत्सरोजं तत्कर्तृका सत्तेति बोधः। कदाचिदन्यादृशगुणसंयुक्तामित्यपि गम्यते इत्यत्यन्तायोगव्यवच्छेदः। क्वचिदेवशब्दं विनापि नियमप्रतीतिः। तदुक्तं भाष्ये—अभक्ष्यो ग्राम्यकुक्कुट इत्युक्ते गम्यते एतत् आरण्यो भक्ष्य इति। "सर्वं वाक्यं सावधारणम्" इति न्यायात्।

आलङ्कारिका अपि परिसङ्ख्याऽलङ्कारप्रकरणे प्रमाणान्तरेण प्राप्तस्यैव वस्तुनः पुनः शब्देन प्रतिपादनं प्रयोजनान्तराभावात् स्वतुल्यान्य-

---

प्रतियोगिकत्वसम्बन्धेन भेदेऽन्वयः। तदाश्रयस्य वृत्तित्वसम्बन्धेन सम्बन्धे, तस्य च संबन्धस्य प्रतियोगिकत्वसम्बन्धेनाभावपदार्थे तस्य धनुर्धरत्वे तस्य च पार्थेऽन्वयः। एवञ्च पार्थप्रतियोगिकभेदाश्रयसम्बन्धप्रतियोगिकाभाववद्धनुर्धरत्ववान् पार्थ इति बोधः। यत्र तु क्रियान्वित एवकारः तत्र अत्यन्तः सर्वदा योऽयोगः—असंबन्धः तस्य निषेधकः। तत्क्रियाश्रये कुत्रचिदपि संबन्धबोधक इति तु फलितोऽर्थः। यथा 'नीलं सरोजं भवत्येव' अत्र हि न सकले कमले नीलत्वं नियम्यते नाप्यकमलेऽनीलत्वम्, अपितु यस्मिन्कस्मिन्नपि कमले नीलत्वसम्बन्धः।

अत्र एवकारेण सरोजत्वव्यापकत्वं नीलभवनाभावे प्रतिषिध्यते। एवञ्च सरोजनिष्ठो योऽभावस्तत्प्रतियोगी नीलभवनाभावः, सरोजनिष्ठं नील भवनमिति यावत्, अभावाभावस्य प्रतियोगिरूपत्वात्।

"अभावविरहात्मत्वं वस्तुनः प्रतियोगिता". इत्युदयनाचार्योक्तेः। क्वचिदेवशब्दं विनापि नियमप्रतीतौ आलङ्कारिकान् प्रमाणयति——आलङ्कारिका इति। परिसङ्ख्यालङ्कारेति, लक्षणन्तु "किञ्चित्

व्यवच्छेदं गमयतीति ।

भागवतेऽपि—

लोके व्यवायामिषमद्यसेवा
नित्यास्तु जन्तोर्न हि तत्र चोदना ।
व्यवस्थितिस्तेषु विवाहयज्ञ-
सुराग्रहैरासु निवृत्तिरिष्टा ॥ इति ॥

व्यवायो मैथुनम्, आमिषं मत्स्यादि, मद्यम्-एतेषां सेवा जन्तोः प्राणिमात्रस्य नित्या रागतः प्राप्ताः । अतस्तत्र चोदनाविधिर्नास्ति । नन्वेवम् "ऋतौ भार्य्यामुपेयात्" "हुतशेषम्भक्षयेत्" "सौत्रामण्यां सुराग्रहान् गृह्णाति" इत्येतेषां वैयर्थ्यम् । भार्या विवाहिताम् । तत्राह-व्यवस्थितिरिति । तेषु पुनः प्रापणमित्यर्थः । नियमस्यान्यनिवृत्तिफलकत्वादाह—आसु निवृत्तिरिष्टेति । अन्येष्विति शेषः । तदुक्तम्—

---

पृष्टमपृष्टं वा कथितं यत् प्रकल्पते । तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता" (का.प्र.उ. १० । ११९) इति । अर्थस्तु–प्रमाणान्तरेण–शास्त्र-पुराणादिरूपमानान्तरेणावगतं वस्तु शब्देन प्रतिपादितं सत् स्वसदृश-वस्त्वन्तरव्यवच्छेदरूपप्रयोजनातिरिक्तप्रयोजनाभावात् सदृशवस्त्वन्तरव्यव-च्छेदाय यत् पर्यवस्यति सा भवेत् परिसंख्या । मानान्तरप्राप्तस्यानुवादो व्यर्थः सन् परिशेषादन्यव्यावृत्तिं फलयतीति भावः । उदाहरणं "कौटि-ल्यं कचनिचये करचरणाधरदलेषु रागस्ते । काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति" इति । अत्र कौटिल्यादेरितराधिकरणकत्वं व्यवच्छेद्यं व्यङ्ग्यमिति भावः । एवञ्चात्र(एव)शब्दं विनापि स्वतुल्यान्यव्यवच्छेदस्य व्यङ्ग्यत्वं स्पष्टमेवेति भावः । अधिकं काव्यप्रकाशे द्रष्टव्यम् ।

**मद्यसेवेति** । तथा च तैत्तिरीयब्राह्मणम्– "ब्राह्मणं परिक्रीणीयादुच्छो-षणस्य पातारं यदि ब्राह्मणं न विन्देत वल्मीकवपायामवनमयेत् सा तत्र प्रायश्चित्तिः" इति । ब्राह्मणो ह्याहुत्या उच्छोषणस्य पाता । अकरणे प्रत्यवायाभावरूपनित्यत्वाभावादाह—**रागत इति** । नित्या इत्यस्य व्याख्यानं रागत प्राप्ता इति । **वैयर्थ्यमिति** । रागत एव मैथुनादीनां

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते ॥ इति ॥

स्वर्गकामोऽश्वमेधेन यजेतेति विधिः । क्षुत्प्रतिघातो यद्यपि शशकादिमांसैः श्वादिमांसैश्च भवति, तथापि शशकादिमांसैरेव कर्त्तव्य इति परिसङ्ख्यायते "पञ्च पञ्चनखा भक्ष्या" इत्यनेन । नखविदलनावहननाभ्यां व्रीहेर्निस्तुषीकरणं प्राप्तम्, तत्रावहननेन निस्तुषीकरणं पुण्यजनकमिति

---

प्राप्तत्वात् तेषां विधानं व्यर्थं स्यादिति भावः । तेषु—व्यवायामिषमद्येषु । रागतो नित्यप्राप्तत्वात् नैते नियमविषयः, पाक्षिक्यां हि प्राप्तौ नियमो भवति, किन्तु प्राप्तस्याप्यर्थस्य पुनः प्रापणमनर्थकमित्यपूर्वविधिद्वारा अन्यनिवृत्तिः फलति तदाह—**आसु निवृत्तिरिति**। आसु—तेषां सेवासु ।

**विधिरत्यन्तमिति** । अयमर्थः—अत्यन्तमप्राप्तौ विधिः—यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः । यथा 'स्वर्गकामो यजेत' अत्र स्वर्गफलकत्वं यागस्य न प्रमाणान्तरेण प्राप्तं किन्तु अनेनैव वचनेन इत्यपूर्वविधित्वमस्य । **नियम इति** । यो विधिः पक्षे प्राप्तमर्थं नियमयति स नियमविधिः । यथा व्रीहीन् अवहन्ति । अस्य वचनस्याभावे तण्डुलनिष्पादनाय वैतुष्यकार्यं नखविदलनेन अवघातेन च प्राप्तं, द्वयोर्युगपदसम्भवेन नखविदलनप्राप्तिवेलायामवहननस्य प्राप्त्यभावात् तस्य पाक्षिकी प्राप्तिः स्यात् सति च तस्मिन् विधौ अवघातेनैव वैतुष्यं संपादनीयमिति नियमे जाते विदलनं सर्वात्मना निवर्तते । अवघातेनैव वैतुष्यकरणेऽपूर्वोत्पत्तिस्वीकारात् इति नियमविधिः । **तत्र चान्यत्र च प्राप्तौ** । उभयस्य युगपत्प्राप्तौ इतरनिवृत्तिफलको विधिः परिसंख्याविधिः । यथा 'पञ्च पञ्चनखा भक्ष्याः' इति । अनेन वाक्येन न भक्षणं विधीयते तस्य रागतः प्राप्तत्वात् । नायं नियमविधिः, युगपत्प्राप्तेः । तथा च पञ्चपञ्चनखपञ्चेतरपञ्चनखभक्षणस्य युगपत्प्राप्तौ पञ्चपञ्चनखभक्षणंनैव क्षुन्निवृत्तिः कार्या इत्यनेन वाक्येन परिसंख्यायते । पञ्चेतरपञ्चनखभक्षणन्तु निवर्तते इति परिसंख्याविधिरयम् ।

'व्रीहीनवहन्ति' इत्यनेन नियम्यते। यद्यपि परिसङ्ख्यायां नियमे च स्वार्थहानिः प्राप्तबाध. परार्थकल्पना चेति दोषत्रयम्, तथाप्यनन्यगत्या स्वीक्रियते इति वृद्धाः। 'पञ्च पञ्चनखा' इत्यस्य नियमत्वेन भाष्ये व्यवहृतत्वात् अन्यनिवृत्तिरूपफलैक्याच्च नियमपदेन परिसङ्ख्याऽपि व्याकरणे गृह्यत इति संक्षेपः।

यद्यपि लकाराणामेवार्थनिरूपणं तार्किकैः कृतम्, तथापि 'उच्चारित एव शब्दोऽर्थप्रत्यायको नानुच्चारित' इति भाष्याल्लोके तथैवानुभवाच्च तदादेशतिङामर्थो निरूप्यते। "वर्तमाने लट्" इत्यादिविधायक "लः कर्मणि" इति शक्तिग्राहकसूत्राणामादेशार्थं स्थानिन्यारोप्य प्रवृत्तिः।

---

ननु परिसंख्यायां दोषत्रयसत्त्वेऽपि नियमे दोषत्रयोक्तिः कथं संगच्छते। पाक्षिकाप्राप्तिकाप्राप्तांशपरिपूरणफलो नियमः। अन्यनिवृत्तिफला च परिसंख्येति द्वयोर्भेदादत आह–**पञ्च पञ्चनखेति**। अप्राप्तांशपरिपूरण-रूपफलबोधनद्वाराऽऽर्थान्यनिवृत्तेर्नियमेऽपि सत्त्वात् द्वयोरभेदादुभयत्र दोषत्रयोक्तिर्नासङ्गतेति भावः।

इति ज्योत्स्नायां निपातार्थविचारः।

## अथ दशलकारादेशार्थाः।

**तार्किकैरिति**। तार्किकाणामयमभिप्रायो यत् लत्वस्य कर्त्तृकर्मादि-निष्ठशक्यतानिरूपितशक्ततावच्छेदकत्वे लाघवं तिबादीनां च शक्ततावच्छे-दकत्वे गौरवमिति लकारा एव वाचका न तिबादय इति। भाष्यादिति, अनेन भाष्येण लोकेऽर्थविषयकबोधजनकानामेवार्थनिरूपणमुचितम्। कार्यकारण-भावश्च यत्किञ्चिदर्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति उच्चारितशब्द-निष्ठवृत्तिज्ञानाधीनोपस्थितिः कारणमिति भावः।

ननु वैयाकरणमते तिबादीनां वाचकत्वे कर्त्तृकर्मणोर्वर्तमाने च लकारविधानमसङ्गतं स्यादित्यत आह—वर्तमाने लट् इति। अयं भावः "उच्चारितः शब्दः प्रत्यायको नानुच्चारितः" इति न्यायेन लाघवात् शास्त्रप्रक्रियामात्रनिर्वाहाय स्थानित्वेन कल्पिते लकारे तिबादिगतां

तत्र सङ्ख्याविशेष—कालविशेष—कारकविशेष–भावा लादेशमात्रस्यार्थाः। तथाहि–लडादेशस्य वर्तमानकालः, शबादिसमभिव्याहारे कर्ता, यक्चिण्समभिव्याहारे भावकर्म्मणी, उभयसमभिव्याहारे एकत्वादिसंख्या चार्थः। तदाह—

फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः।
व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम्॥

फलव्यापारौ तु धात्वर्थावित्युक्तमेव। तत्र तिङ्समभिव्याहारे तदर्थसंख्या तदर्थकारके विशेषणम्। कालस्तु व्यापारे। तदाह—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥

तिङर्थः कर्ता व्यापारे, कर्म च फले विशेषणम्। "क्रियाप्रधान-

---

बोधजनकतां शक्तिं प्रकल्प्य लकारस्य विधानेऽपि 'योयदर्थाभिधानसमर्थः स तस्यादेशः, इति न्यायेन, लकारस्य प्रयोगघटकतयाऽनुच्चारितत्वेन च तिबादिशक्तिबोधने एव सूत्रतात्पर्यादिति वैयाकरणाभिप्रायः। **शबादिसमभिव्याहारे इति**। समभिव्याहृतत्वञ्च पदविशिष्टत्वं वै. स्वपूर्वत्व, स्वोत्तरत्वैतदन्यतरसम्बन्धेन।

**फलव्यापारयोरिति**। निर्द्धारणे षष्ठी। निर्द्धारणे बहुवचनान्तस्यैव प्रयोगदर्शनेन तादृशषष्ठ्यसंभवे तु 'मध्ये' इति शेषो बोध्यः। तत्र "षष्ठी शेषे" इति षष्ठी। एवञ्च तङादयो धातूपस्थाप्ययोः फलव्यापारयोर्मध्ये फले आख्यातार्थाऽऽश्रयान्वयं द्योतयन्ति। शबादयो व्यापारे आश्रयान्वयं द्योतयन्ति–व्यञ्जनया बोधयन्तीत्यर्थः। एवञ्च यत्र यत्र यगादिसमभिव्याहारः तत्र तत्राख्यातस्य कर्मबोधकत्वमिति। यत्र यत्र च शबादिसमभिव्याहारः तत्र तत्राख्यातस्य कर्तृबोधकत्वमिति चान्वयव्याप्तिः। यत्र यत्राऽऽख्यातस्य — कर्मबोधकत्वाभावस्तत्र तत्र यगादिसमभिव्याहाराभाव इति, यत्र यत्राख्यातस्य कर्तृबोधकत्वाभावस्तत्र तत्र शबादिसमभिव्याहाराभाव इति च व्यतिरेकव्याप्तिः फलति। तदर्थसंख्यातिङर्थसंख्या। तदर्थकारके—तिङर्थकारके। **विशेषणमिति**। समान-

माख्यातम् " इति यास्कोक्तौ क्रियापदं करणव्युत्पत्त्या व्यापारपरं कर्मव्युत्पत्त्या फलपरमिति बोध्यम् । तथा च ग्रामं गच्छति चैत्र इत्यत्रैकत्वावच्छिन्नचैत्राभिन्नकर्तृको वर्तमानकालिको ग्रामाभिन्नकर्मनिष्ठो यस्संयोगः तदनुकूलो व्यापारः, ग्रामो गम्यते मैत्रेणेत्यत्र तु मैत्रकर्तृकवर्तमानकालिकव्यापारजन्यो ग्रामाभिन्न-कर्मनिष्ठः संयोग इति च बोधः ।

---

प्रत्ययोपात्तत्वादिति भावः । अयमत्र विवेकः—तिङर्थसंख्या कर्तृप्रत्ययसमभिव्याहारे कर्तरि, कर्मप्रत्ययसमभिव्याहारे च कर्मणि विशेषणमिति भावः । **बोध इति** । इदमत्राकूतम्—भावप्रधानमाख्यातमिति यास्कवचनात् क्रियाप्राधान्यबोधक-" भूवादयो धातवः " इति सूत्रस्थभाष्याच्च कर्त्राख्याते कर्माख्याते वा सर्वत्र व्यापारमुख्यविशेष्यक एव बोधः । अत एव "फलेप्रधानं व्यापारस्तिङर्थस्तु विशेषणम् " इति दीक्षितोक्तिः संगच्छेत । तथा च ग्रामं गच्छति चैत्र इत्यत्र ग्रामाभिन्नकर्मनिष्ठसंयोगानुकूलः समवायसम्बन्धावच्छिन्नैकत्वावच्छिन्नचैत्राभिन्नाश्रयको वर्तमानकालिको व्यापारः । ग्रामो गम्यते चैत्रेणेत्यादौ तु चैत्राश्रयको वर्तमानकालिकः समवायसम्बन्धावच्छिन्नैकत्वावच्छिन्नग्रामरूपकर्मनिष्ठसंयोगानुकूलो व्यापार इति प्राचीनवैयाकरणाः । कर्तृप्रत्ययसमभिव्याहारे व्यापारमुख्यविशेष्यकः, कर्मप्रत्ययसमभिव्याहारे च फलमुख्यविशेष्यकः शाब्दबोधः ।

नन्वेवं 'फले प्रधानं व्यापारः' इत्यस्यानुपपत्तिरिति चेन्न, कर्तरि आख्याताभिप्रायेण तस्योपपत्तेः । फले प्रधानं व्यापार इत्यत्राकारश्छेदेन प्रधानाप्रधानयोरुभयोर्बोधेन कर्तृप्रत्ययसमभिव्याहारे व्यापारस्य प्राधान्यं कर्मप्रत्ययसमभिव्याहारे चाप्राधान्यमिति बोधाच्च । अत्र 'सुप आत्मनः क्यच्' इति सूत्रस्थं भाष्यमप्युपोद्बलकम्—तथाहि आत्मनः पुत्रमिच्छतीत्यत्रेव इष्टः पुत्रः, इष्यते पुत्रः इत्यादावपि क्यच् कथं नेत्याशङ्क्य "इह भवन्तस्तावदाहुः । न भवितव्यमिति । किं कारणम् । समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च । यश्चेहार्थो वाक्येन गम्यते, इष्टः पुत्रः, इष्यते पुत्र इति नासौ जातुचित् प्रत्ययान्तेन " इति । वृत्तिविग्रहयोः समानार्थकत्वनियमेन अत्र वाक्ये फलस्य, वृत्तौ व्यापारस्य च मुख्यविशेष्यतया भानात्

वर्तमानकालत्वं च प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम् ।

---

तयोः समानार्थकत्वाभावेन न क्वापि जिति भाष्यतात्पर्यपर्यालोचनेन स्पष्ट एव फलमुख्यविशेष्यको बोधः प्रतीयते । उभयत्र पुत्रकर्मकेच्छानुकूलो व्यापार इति बोधे भिन्नार्थकत्वकथनमसंगतं स्यादिति तु नव्या इति शिवनन्दनपाण्डेयाः ।

प्रारब्धेति । इदं क्रियागतं वर्तमानत्वम्, प्रारब्धत्वादेस्तत्रैव सम्भवात् । प्रारब्धः—तत्तत्फलानुकूलव्यापारध्वंससमानाधिकरणस्तत्तत्फलानुकूलकृतिविषयः । अपरिसमाप्तः—तत्तत्फलानुकूलचरमक्रियाध्वंसप्रागभावाधिकरणकालवृत्तिः, ध्वंसानधिकरणकालवृत्तिर्वा यः क्रियात्मकोऽर्थस्तत्त्वं वर्तमानक्रियात्वम् । तादृशक्रियाधिकरणत्वोपलक्षितकालत्वं वर्तमानकालत्वम् । लक्षणमिदं क्रियात्मककालत्वाभिप्रायेण । धातुविशिष्टत्वं वर्तमानत्वम्, वै. स्वाधिकरणत्वं, स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतक्रियाधिकरणत्वम्, स्वजन्यबोधविषययावद्व्यापारप्रतियोगिकध्वंसानधिकरणत्वम् , स्वजन्यबोधविषययावद्व्यापारप्रतियोगिकप्रागभावानाधिकरणत्वमेतच्चतुष्टयसम्बन्धेन, लक्षणसमन्वयश्च —तत्तद्धातुवाच्याद्यक्रियामादाय चरमक्रियापर्यन्ताधिकरणीभूतः कालो वर्तमानत्वेन व्यवह्रियते, तत्रैव 'पचति,' 'गच्छति' इत्यादिप्रयोगदर्शनात् । तथा च तादृशकाले पच्यादिधातुविशिष्टत्वमस्ति । तथाहि—स्वम्—पच्यादिधातुस्तदधिकरणत्वं 'पचति' इत्यादिप्रयोगमादाय पच्यादिधातुजन्यबोधविषयत्वेन तात्पर्यविषयीभूता क्रिया पाकादिस्तदधिकरणत्वमपि तत्र काले, पच्यादिधातुजन्यबोधविषयसकलव्यापारप्रतियोगिकध्वंसस्योक्तकालेऽसत्त्वेन तृतीयसंबन्धोऽप्युपपद्यते ।

अत्र यत्किञ्चित्क्रियाप्रतियोगिकध्वंसस्य सत्त्वेनाव्याप्तिवारणाय ध्वंसे यावत्क्रियाप्रतियोगिकत्वनिवेशः । पच्यादिधातुजन्यबोधविषयसकलव्यापारप्रतियोगिकप्रागभावाधिकरणत्वस्य तादृशकालपूर्वकाले एव सत्त्वेन तादृशप्रागभावानधिकरणत्वमपि तत्र सुलभम् । अत्रापि यत्किञ्चित्क्रियाप्रतियोगिकप्रागभावाधिकरणत्वस्य तत्र काले सत्त्वेनाव्याप्ति-

लिट्तिङस्तु भूतानद्यतनकालः परोक्षत्वं चाधिकोऽर्थः । शेषं लड्वत् ।

---

परिहाराय प्रागभावे यावत्क्रियाप्रतियोगिकत्वनिवेश इति । प्रथमसंबन्धेन द्विवादनमारभ्य चतुर्वादनपर्यन्तं जातपाकाधिकरणकालमादाय न दोषः, तदानीमुच्चरितधात्वधिकरणत्वाभावात् धातूच्चारणाधिकरणे तद्बोध्यक्रियानधिकरणे च काले 'पचति' इति प्रयोगवारणाय द्वितीयः सम्बन्धः ।

भूतपाकक्रियामादाय उच्चारणाधिकरणकालपर्यन्तकालस्याधिकरणत्वतात्पर्येण पचतीति प्रयोगवारणाय तृतीयः संबन्धः । एवं भविष्यत्पाकाधिकरणकालमवधीकृत्य उच्चारणकालं यावत् कालमादाय तादृशप्रयोगो माभूदिति चतुर्थः संबन्धः । परे तु लट्प्रयोगाधिकरणकालसम्बन्धित्वं लट्प्रयोगाधिकरणकालोपाधिवृत्तित्वं वा वर्तमानत्वमिति परिष्कुर्वन्ति । वर्तमानत्वादिकालो लडादिद्योत्यः, वाच्योऽपि । पक्षद्वयस्यापि भाष्यादौ प्रतिपादनात् प्रमाणसिद्धत्वाच्च । तथाहि—तत्तद्धातूनामेव वर्तमानोऽर्थः । लट् तु तद्व्यञ्जकः । न चानेकेषां धातूनां तत्र शक्तिकल्पने शक्ततावच्छेदकनानात्वात् गौरवमिति वाच्यम्, व्यापारसन्तानस्यैव कालत्वेनाभ्युपगमात् । तस्य च धात्वर्थत्वात् । कालस्य व्यापारसन्तानातिरिक्तत्वे प्रमाणाभावात् । तथा च तस्मिन् द्योत्ये लडादय इति वर्तमाने लडिति सूत्रार्थः । तस्माद् द्योतकत्वमेव लटः । एवंवाचकत्वमपि । वर्तमाने लडिति सूत्रात् वर्तमानकाले लड्विधानात् । व्यापारसन्तानस्य कालात्मकत्वाभावाच्च । तथा चोक्तं हरिणा—"क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका" इति । अनेन हरिवचनेन स्पष्टमेव क्रियापरिच्छेदकत्वं कालस्य प्रतिपादितम् । न च स्वपरिच्छेदकत्वं स्वस्य संभवति । तस्मात् वाचकत्वमेव लट इत्यन्यत्र द्रष्टव्यम् ।

**भूतानद्यतनकाल इति ।** अद्यतनानद्यतनभेदेन कालो द्विविधः । द्विविधोऽपि भूतभविष्यद्रूपः । गतरात्रेर्निशीथादूर्ध्वम् आगामिरात्रेर्निशीथात् पूर्वो यावान्कालः साऽद्यतनपदेनोच्यते । तद्भिन्नभूतकालवृत्तिः

परोक्षत्वं च कारके विशेषणं न तु क्रियायाम्, तस्या अतीन्द्रियत्वेन लिट्सूत्रे भाष्ये प्रतिपादनात् व्यभिचाराभावात्। कृभ्वाद्यनुप्रयोगस्थले कृभ्वसां क्रियासामान्यमर्थः आम्प्रकृतेस्तु तत्तत्क्रियाविशेषः। सामान्यविशेषयोरभेदान्वयः अकर्मकप्रकृतिकामन्तानुप्रयुक्तकृभ्वसामकर्मिकैव क्रिया।

वस्तुतस्तु अनुप्रयुक्तानां कृभ्वसां फलशून्यक्रियासामान्यवाचकत्वमेव। सकर्मकाकर्मकत्वव्यवहारस्तु आम्प्रकृतिभूतधातारेवेति निष्कर्षः। एवञ्च एधाञ्चक्रे चैत्र इत्यत्र एकत्वावच्छिन्नपरोक्षत्वावच्छिन्नचैत्रकर्तृका भूतानद्यतनकालाधिकरणिका वृद्ध्यभिन्ना क्रियेति बोधः। परोक्षत्वं च साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम्। भूतानद्यतनत्वं च अद्यतनाष्टप्रहरीव्यतिरिक्तत्वे सति भूतत्वम्। लुडादेशस्य तु भविष्यदनद्यतना-

---

परोक्षा या क्रिया तद्वाचकाद्धातोर्लिडित्यर्थकात् 'परोक्षे लिट्' इति सूत्रादित्यर्थः। द्योतकत्वपक्षे इदम्। वाचकत्वपक्षे तु तादृशकाले वाच्ये लिडित्याद्यर्थः। अद्यतने भूते, अनद्यतने भविष्यति, भूतेऽप्यपरोक्षे च न लिट्प्रयोगः। शेषम्-संख्याकर्तृकर्मादयोऽर्थाः यथा लटस्तथा लिटोऽपीत्यर्थः।

ननु "क्रिया नामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्" इति भाष्यात् तस्याः अतीन्द्रियत्वेन क्रियायां परोक्षत्वस्य व्यभिचाराभावेन 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इतिन्यायविरोधादित्यतआह—**परोक्षत्वं च कारके विशेषणमिति**। पिण्डीभूताया निदर्शयितुमशक्यत्वेऽप्यवयवशः 'साक्षात् करोमि, इति प्रतीतिविषयत्वसम्भवात्। अन्यथा 'पश्य मृगो धावति' इत्यत्र तस्या दर्शनकर्मता न स्यादित्यपि बोध्यम्। ननु अभेदसम्बन्धेन शाब्दबोधं प्रति प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्वैरूप्योपस्थितेर्हेतुत्वेन कृभ्वसामाम्प्रकृतेश्च क्रियावाचकत्वेन कथमुभयोरभेदान्वय इत्यत आह—

**सामान्यविशेषयोरभेदान्वय इति**। अत एव द्रोणो व्रीहिरित्यत्र द्रोणपदार्थस्य विशेषपरिमाणस्य प्रत्ययार्थेन सामान्यपरिमाणेन साकमभेदान्वय उपपद्यते।

र्थोऽधिकः । शेषं लङ्वत् । भविष्यत्त्वं च वर्तमानप्रागभावप्रतियोगिक्रियो-पलक्षितत्वम् । लृट्तिङस्तु भविष्यत्सामान्यमर्थः । लेट्तिङस्तु विध्यादि-रर्थः । "छन्दसि लिङर्थे लेट्" इति सूत्रात् । लेट्क्रियातो लेटोऽडाटा-विति विशेषः । भवाति भवतीति प्रयोगदर्शनात् । लोट्तिङस्तु विध्या-दिरर्थः । तत्राधीष्टं सत्कारपूर्वको व्यापारः, आगच्छतु भवान् जलं गृह्णातु इत्यादौ, सम्प्रश्नोऽनुमतिः, गच्छाति चेत् भवान् गच्छत्वित्यादौ । लङा-देशस्य तु भूतानद्यतनत्वमधिकोऽर्थः । शेषं लङ्वत् । लिङादेशस्य तु विध्यादिरर्थः । तत्र विध्यादिचतुष्टयानुस्यूतप्रवर्त्तनात्वेन चतुर्णां वाच्यता लाघवात् । तदुक्तं हरिणा—

अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥ इति ।

---

ननु परोक्षत्वं यदि 'प्रत्यक्षप्रमाणान्यप्रमाणजन्यज्ञानविषयत्वम्, तदा प्रत्यक्षक्रियाया अपि शाब्दज्ञानविषयत्वे, अनुमितिज्ञानविषयत्वे वा 'पपाच' इत्यादिप्रयोगापत्तिरत आह—**परोक्षत्वञ्चेति**। **विध्यादि-चतुष्टयेति**। विध्यादिचतुष्टये अनुस्यूतम्—एकरूपेण स्थितं यत्प्रवर्त-नात्वं तदेव विध्याद्यर्थनिष्ठशक्यतावच्छेदकम्, न तु विधित्वादिकम्, तेषामनेकत्वेन गौरवात् शक्यताऽवच्छेदकभेदेन शक्तेर्नानात्वप्रसङ्गाच्चेति भावः। **प्रवर्तनारूपमिति**। यद्विषयकत्वेन ज्ञानस्य प्रवृत्तिजनकत्वं सैव प्रवर्तना। ज्ञानस्य प्रवृत्तिजनकत्वञ्च इष्टसाधनताविषयकत्वेन 'इदं मदिष्टसाधनम्' इति ज्ञानादेः प्रवृत्तिदर्शनात्। तथा च इष्टसाधनत्वमेव प्रवर्तना। प्रवर्तनाया रूपम्—धर्मः, प्रवर्तनात्वमित्यर्थः। अनुस्यूतम्—सम्बद्धम्, अनुपूर्वकात् सीव्यतेः क्ते ऊठि अनुस्यूतमिति। तत्रैव प्रवर्तनायामेव। यद्यपि तत्पदेन प्रवर्तनात्वस्य ग्रहणमुचितम्। पूर्वत्र प्रवर्तनात्वस्यैवोक्तत्वात्, तथापि लिङादिना विध्यादेरेव बोधदर्शनात्तदाश्र-यस्य ग्रहणम्। आकृत्यधिकरणन्यायेन धर्ममात्रे शक्तिरिति स्वीकारे 'तत्र' इत्यस्य प्रवर्त्तनात्वे एवेत्यर्थः। भेदस्य–विधित्वादिविशेषस्य। ननु लिङः प्रवर्तनायां शक्त्यङ्गीकारे विधिनिमन्त्रणेति सूत्रे विध्यादीनां ग्रहणं व्यर्थमिति चेन्न, प्रवर्तनाया भेदबोधनार्थत्वेन तेषां सार्थक्यात्।

प्रवर्त्तनात्वं च—प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्, तच्चेष्टसाधनत्वस्यैवेति तदेव लिङर्थः। न तु कृतिसाध्यत्वं, तस्य यागादौ लोकत एव लाभादित्यन्यलभ्यत्वात्। न च बलवदनिष्टाननुबन्धित्वं, द्वेषाभावेनान्यथासिद्धत्वात्, इत्यन्यत्र विस्तरः। लुङादेशस्य तु भूतसामान्यमर्थः। भूतत्वं च वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितत्वम्। लृङादेशस्य तु क्रियातिपत्तौ गम्यमानायां हेतुहेतुमद्भावे च गम्यमाने भूतत्वं भविष्यत्त्वञ्चार्थः। आपादना तु गम्यमाना। भूते, एधश्चेदलप्स्यत ओदनमपक्ष्यत्। भविष्यति, सुवृष्टिश्चेदभविष्यत्सुभिक्षमभविष्यदिति सङ्क्षेपः।

---

तथा चोक्तं—

न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
विध्यादीनामुपादानं चतुर्णामादितः कृतम्॥

अस्यार्थः—

"विशेषधर्मव्यापको हि सामान्यधर्मः" इति न्यायः।
तस्य व्युत्पादनार्थम्—अव्यभिचरितत्वप्रदर्शनार्थम्।

विधित्वादिरूपव्याप्यधर्मस्य प्रवर्त्तनात्वं व्यापकम्, इति न्यायविषयस्य ज्ञानं सम्यग् यथा स्यात् तदर्थमित्यर्थः। प्रपञ्चार्थमिति—प्रवर्त्तनात्वस्य शक्यतावच्छेदकत्वे तेन रूपेण विध्यादिष्वेव शक्तिरिति विस्तरेण ज्ञानार्थमिति भावः। आदित इति आदावित्यर्थः। आद्यादित्वात् सप्तम्यन्तात्तसिः। तथा च 'प्रवर्त्तना-सम्प्रश्नयोर्लिङ्' इत्येव सूत्रं कर्त्तव्यमिति भावः। प्रवर्त्त्यतेऽनयेति प्रवर्तना "ण्यासश्रन्थो युच्" इति करणयुच्प्रत्ययान्तप्रवर्त्तनाशब्देन प्रवृत्त्यनुकूलज्ञानविषयस्य प्रवर्त्तनात्वाभिप्रायेणाह—**प्रवर्त्तनात्वञ्चेति। प्रवृत्तिजनकेति।** प्रवृत्तिजनकं यज्ज्ञानं 'इदं मदिष्टसाधनम्' इति तद्विषयतावच्छेदकत्वमित्यर्थः। यथा 'स्वर्गकामो यजेत' इत्यनेन 'यागो मदिष्टसाधनम्' इति ज्ञानं प्रवर्तकं भवति। तज्ज्ञानीया विषयता विशेष्यतारूपा यागनिष्ठा तन्निरूपितप्रकारता इष्टसाधनत्वनिष्ठा इति विशेष्यतानिरूपकत्वरूपमेवावच्छेदकत्वमिष्टसाधन-

अथ नैयायिकानां मते सङ्क्षेपाल्लकाराणामर्थो निरूप्यते। तत्र लडादिलङन्ता दश लकाराः। तत्र लकारस्य कर्त्ता कालः संख्या चेति त्रयोऽर्थाः। तत्र कर्तेति पातञ्जलाः। "लः कर्म्मणि च" इति सूत्रे

---

त्वस्य। यद्यपि साक्षाद् विशेष्यतानिरूपकता प्रकारतायामेव, तथापि 'तन्निरूपकाश्रयोऽपि तन्निरूपक इति न्यायेन प्रकारताश्रयस्येष्टसाधनत्वस्यापि तन्निरूपकत्वम्। **तच्चेति**। उक्तविधप्रवर्त्तनात्वञ्च। **इष्टसाधनत्वस्येति**। प्रवृत्तित्वावच्छिन्नं प्रति इष्टसाधनत्वज्ञानस्य प्रयोजकत्वेन तद्विषयतावच्छेदकत्वमिष्टसाधनत्वेऽक्षतमिति भावः। तदेव — इष्टसाधनत्वमेव। एवपदबोध्यमर्थमाह — **नन्विति**।

नन्विष्टसाधनत्वज्ञानस्येव कृतिसाध्यत्वज्ञानस्यापि प्रवृत्तिप्रयोजकत्वम्, सुमेरुशिखरानयनं मदिष्टसाधनमिति ज्ञानसत्त्वेऽपि प्रवृत्तेरदर्शनादिति तस्यापि लिङर्थत्वमस्त्वित्याशङ्क्याह—**तस्येति**। **लोकत एवेति**। लोकतः अनुमानतो लभ्यत्वान्न लिङर्थत्वं तस्य। अनुमानप्रयोगश्च 'यागो मत्कृतिसाध्यः' मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वात्, मदीयग्रामादिगमनवत्। एवञ्च कृतिसाध्यत्वस्यानुमानलभ्यत्वान्न लिङर्थत्वमिति भावः। मधुविषसंपृक्तान्नभक्षणे लोभादिना कस्मैचिद् विषादिद्वारा मारणादिषु च प्रवृत्तिवारणाय बलवदनिष्टाजनकत्वमपि प्रवृत्तिकारणमिति प्राचीननैयायिकैः स्वीकृतं तन्निराकुर्वन्नाह—**द्वेषाभावेनेति**। प्रवृत्तिं प्रति द्वेषस्य प्रतिबन्धकत्वेन यत्कार्यं प्रति यस्य प्रतिबन्धकत्वं तदभावस्य तत्कार्यं प्रति कारणत्वमर्थतः सिद्ध्यति। अत एव मधुविषसंपृक्तान्नभोजने न लोकस्य प्रवृत्तिः तथा च तस्यैव प्रवृत्तिं प्रति कारणत्वे बलवदनिष्टाननुबन्धित्वज्ञानस्य-अन्यथासिद्धत्वान्न कारणत्वमिति भावः। **वर्त्तमानेति**। वर्त्तमानक्षणवृत्तिर्यः अतीतक्रियाध्वंसस्तत्प्रतियोगिनी या क्रिया तदुपलक्षितः कालो भूत इति भावः। इति वैयाकरणमतेन लकारार्थविचारः।

ननु लकाराणामैक्याद्दशत्वमनुपपन्नमिति चेन्न, अनुबन्धभेदेन दशत्वव्यपदेशादित्याह—दश लकारा इति। पातञ्जलाः — शाब्दिका

चकारेण कर्तुः परामर्शात् । कर्तृस्थाने व्यापार इति भाट्टाः । यत्न इति नैयायिकाः । युक्तं चैतत् । व्यापारताद्यपेक्षया लाघवेन यत्नत्वस्यैव शक्ततावच्छेदकत्वात् । शक्यतावच्छेदकश्च लकारसाधारणं लत्वमेव भवतीत्यादौ चादेशेनादेशिनो लस्यैव स्मरणादन्वयधीः ।

---

इत्यर्थः । भाट्टाः — मीमांसकैकदेशिनः, यत्नः — आख्यातार्थयत्नः । **लाघवेनेति** । तज्जन्यत्वसमानाधिकरणतज्जन्यजनकत्वरूपव्यापारापेक्षया कृतित्वजातेर्लाघवात् न व्यापारे शक्तिरिति तात्पर्यम् । नापि लकाराणां कर्त्तरि शक्तिः । कर्तृत्वस्य शक्यतावच्छेदकत्वे गौरवात् । तस्य कृतिरूपत्वात्, कृतित्वजातेः शक्यतावच्छेदकत्वे लाघवात् । वैयाकरणानामाख्यातपदजन्यशाब्दबोधं प्रति आश्रयतात्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाश्रयत्वप्रकारकोपस्थितेः कारणत्वम् । आश्रयतात्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाश्रयत्वप्रकारकोपास्थितिं प्रति तादृशाश्रयत्वप्रकारकाश्रयनिष्ठशक्तिज्ञानस्य कारणत्वं वक्तव्यमिति महद्गौरवम् । नैयायिकानां पुनः कृतित्वप्रकारकोपास्थितिः कृतिनिष्ठशक्तिज्ञानञ्च शाब्दबोधोपस्थित्योः कारणमिति लाघवम् । एवं प्रतिबन्ध्यप्रतिबन्धकभावेऽपि लाघवगौरवे द्रष्टव्ये ।

न च रथो गच्छतीत्यादौ रथस्याचेतनत्वेन कृतेश्च चेतनगुणत्वेन— तत्र बाधात् आश्रयलक्षणायां तवापि गौरवमिति वाच्यम्, आश्रयशक्तिकल्पनापेक्षया क्लृप्तायां शक्यसंबन्धरूपलक्षणायां लाघवात् । लट्त्वेन काले शक्तिः, लत्वेन लक्षणेति शक्ततालक्षतावच्छेदकयोर्भिन्नत्वान्न युगपद्वृत्तिद्वयाविरोध इति तेषां तात्पर्यम् । ननु कृतौ शक्तौ व्यवस्थापितायां सत्यां, शक्ततावच्छेदकं न तिप्त्वादिकं, गौरवात् किन्तु सर्वलकारसाधारणं लत्वं तच्च जातिरूपमित्याह—**शक्ततावच्छेदकञ्चेति** । ननु लत्वस्य शक्ततावच्छेदकत्वे पचतीत्यतः कृत्यादेर्बोधो न स्यात्, तिबादेस्तत्र शक्त्यग्रहादित्यत आह—**भवतीत्यादाविति** । **स्मरणादिति** । स्थान्यादेशभावमजानानानान्तु तिप्त्वादिना शक्तिभ्रमादेवार्थबोध इति भावः ।

आदेशेषु बहुषु शक्तिकल्पने गौरवात् । तदस्मरणे च शक्तिभ्रमादेवान्वयधीः । चैत्रो गन्ता, गतो ग्रामः, इत्यादौ सामानाधिकरण्यानुरोधेन यथायथं कर्तृकर्मणी कृद्वाच्ये । नचैवं "लटः शतृशानचौ" इत्यनेन शतृशानचोरादेशत्वात्कथं कर्त्तरि शक्तिः । आदेशिशक्त्या निर्वाह एवादेशशक्त्यकल्पनात् । चैत्रः पचन्नित्यादौ सामानाधिकरण्यानुरोधादादेशिशक्त्याऽनिर्वाहादत्रादेशेऽपि शक्तिः ।

इयांस्तु विशेषः—लत्वेन यत्ने शक्तिः, आत्मनेपदत्वेन फले । 'मैत्रेण गम्यते ग्राम' इत्यादौ मैत्रवृत्तिकृतिजन्यगमनजन्यफलशाली ग्राम इत्यन्वयबोधात् । कृतिश्चात्र तृतीयार्थः । जन्यत्वं संसर्गः । मैत्रः कृतौ विशेषणम्, सा च गमने, तच्च फले, तच्च ग्रामे ।

---

**तदस्मरण इति** । तस्य–स्थानिनो लकारस्य स्मरणाभावे इत्यर्थः । एवञ्च तिप्त्वादिरूपेणैव शक्तिभ्रमादन्वयबोध इति व्यवस्था । वस्तुतः—तिप्त्वादितत्तद्रूपेणैव लकाराणां वाचकता न तु लत्वेन । तिबादेर्वाचकताभ्रमानुरोधेन भवतीत्याद्यानुपूर्वीज्ञानस्य तिबादिजन्यकृत्युपस्थितिसहकारेण शाब्दबोधजनकताकल्पनस्यावश्यकत्वात् । लकारजन्योपस्थितिसहकृतभवतीत्याद्यानुपूर्वीज्ञानतिबादिधर्मिकलादेशत्वज्ञानघटितशाब्दबोध - जनकत्वकल्पने गौरवादिति सुगमो मार्गः ।

**आत्मनेपदत्वेनेति** । तत्वञ्च पाणिनीयसंकेतसंबन्धेनात्मनेपदवत्त्वम् । अन्यूनानतिरिक्तधर्मस्यैवावच्छेदकत्वनियमेन आत्मनेपदत्वस्य तथात्वादिति नाननुगमशङ्कालेशोऽपीति बोध्यम् । **मैत्रवृत्तीति** । समवायसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नमैत्रत्वावच्छिन्नप्रकारतानिरूपितकृतित्वावच्छिन्नविशेष्यतासमानाधिकरणजन्यत्वसंबन्धावच्छिन्नकृतिनिष्ठप्रकारतानिरूपितगमनत्वावच्छिन्नविशेष्यतासमानाधिकरणजन्यत्वसंबन्धावच्छिन्नगमनत्वावच्छिन्नप्रकारतानिरूपितफलत्वावच्छिन्नविशेष्यतासमानाधिकरणाश्रयत्वसंबन्धावच्छिन्नफलत्वावच्छिन्नप्रकारतानिरूपितग्रामत्वावच्छिन्नग्रामनिष्ठविशेष्यताको बोध इति परिष्कृतबोधः । जगदीशतर्कालङ्कारमतेनेदम् ।

ग्रामं गच्छति मैत्र इत्यत्र तु ग्रामवृत्तिफलजनकगमनानुकूलकृतिमान्मैत्र इति बोधः। फलं च द्वितीयार्थः। जनकत्वं संसर्गः। ग्रामश्चात्र फले विशेषणम्, तद् गमने, तच्च कृतौ, सा मैत्रे इति विशेष्यविशेषणभावभेदेनैव कर्मकर्तृस्थलीयबोधयोर्विशेषः। तावन्तः पदार्थास्तूभयत्रैव तुल्याः। मैत्रेण ज्ञायते इष्यते क्रियते घट इत्यादौ तु वृत्तिस्तृतीयाया, विषयता त्वाख्यातस्यार्थः। मैत्रवृत्तिज्ञानविषयो घट इति बोधः। घटं जानाति मैत्र इत्यादौ तु विषयता द्वितीयाया, आश्रयत्वं चाख्यातस्यार्थः। घटविषयकज्ञानाश्रयो मैत्र इति बोधः।

कालश्चातीतवर्त्तमानानागतात्मा यथायथं लडादेरर्थः। लटो भवतीत्यादौ वर्त्तमानत्वं, लङ्लुङ्लिटाम् अभवत् अभूत् बभूवेत्यादौ भूतकालः, लुङ्लटोर्भविता भविष्यतीत्यादौ भविष्यत्कालः। लिङ्लोड्लेटां भवेत् भवतु आग्नेयोऽष्टाकपालो भवतीत्यादौ विधिः। सङ्ख्या च केवलार्थः।

---

भट्टाचार्यस्तु समानाधिकरणप्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभावमङ्गीकुर्वन्ति। **ग्रामवृत्तीति**। समवायसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नग्रामत्वावच्छिन्नप्रकारतानिरूपितसंयोगत्वावच्छिन्नविशेष्यत्वावच्छिन्न-जनकत्वसंबन्धावच्छिन्नफलनिष्ठप्रकारतानिरूपितगमनत्वावच्छिन्नविशेष्यत्वावच्छिन्नानुकूलत्वसंबन्धावच्छिन्नगमननिष्ठप्रकारतानिरूपितकृतित्वावच्छिन्न-विशेष्यत्वावच्छिन्नसमवायसंबन्धावच्छिन्नकृतिनिष्ठप्रकारतानिरूपितमैत्रनिष्ठ-विशेष्यताशाली शाब्दबोध इत्यर्थः। विशेष्यविशेषणभावभेदेनेति। कर्त्तृप्रत्ययस्थले कर्त्तुर्विशेष्यत्वं कृतेर्विशेषणत्वं, कर्मप्रत्ययस्थले च कृतेर्विशेष्यत्वं, कर्त्तुश्च विशेषणत्वमिति भावः। तावन्तः—आख्यातार्थ—यत्न-संख्याकालादयः, धात्वर्थफलव्यापारौ चेत्यर्थः। **मैत्रवृत्तीति**। समवायसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नमैत्रत्वावच्छिन्नप्रकारतानिरूपितज्ञानत्वावच्छिन्नविशेष्यत्वावच्छिन्ननिरूपितत्वसंबन्धावच्छिन्नज्ञाननिष्ठप्रकारतानिरूपितविषयतात्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नविषयतानिष्ठ-प्रकारतानिरूपितघटानिष्ठविशेष्यताशाली परिष्कृतः शाब्दबोधः।

लेटस्तु छन्दस्येव प्रयोगः । तत्र दीर्घत्वमपि विकल्पेन, भवति भवातीति दर्शनात् । तत्र व्यापारादिबोधकेन लटा वर्त्तमानत्वं व्यापारादावेव बोध्यते । पचतीत्यादितो वर्तमानपाकानुकूलव्यापारवानिति बोधात्, एवमन्यत्रापि । व्यापारबोधकाख्यातजन्यवर्त्तमानत्वप्रकारबोधे आख्यात-जन्यव्यापारोपस्थितेर्हेतुत्वकल्पनान्नातिप्रसङ्गः ।

व्यापाराबोधकज्ञाधात्वादिसमभिव्याहृताख्यातजन्यवर्त्तमानत्वप्रकारकबोधे तु तादृशधातुजन्योपस्थितिर्हेतुः । कार्यताकारणतावच्छेदिका च प्रत्यासत्त्या विषयतैवेति नातिप्रसङ्गः । जानाति इच्छति यतते इत्यादौ वर्त्तमानत्वाश्रयज्ञानाश्रयत्वादिबोधस्यैवानुभविकत्वात् ।

---

**व्यापारादाविति** । तिङ्वाच्यकृतावित्यर्थः । यत्नव्यापारयोः पर्यायत्वेन व्यवहारस्य क्वचन दृष्टत्वात् । धात्वर्थव्यापारे तु वर्त्तमानत्वं नान्वेति, विक्लित्त्यनुकूलव्यापारस्याधिश्रयणादेः सत्त्वे पुरुषयत्नस्य चासत्त्वेऽयं न पचतीति प्रयोगात् । **एवमिति** । अन्यत्रापि—लकारेष्वपि, कालस्य आख्यातार्थे एवान्वयः । **नातिप्रसङ्ग** इति । धात्वर्थव्यापारे नातिव्याप्तिरित्यर्थः ।

**व्यापाराबोधकेति** । अयं भावः—जानातीत्यादौ ज्ञानमात्रं धात्वर्थः, ज्ञाने एव फलत्वं व्यापारत्वं चारोप्य विषयतारूपफलतावच्छेदकसंबन्धेन घटादेर्ज्ञानरूपफलाश्रयत्वात् कर्मत्वम् । समवायरूपव्यापारतावच्छेदकसंबन्धेन व्यापाराश्रयत्वात् कर्त्तृत्वमिति गौणकर्मत्वं जानातीत्यादिसविषयार्थकधातूनाम् । आख्यातस्य च न कृतौ शक्तिः, किन्तु आश्रये लक्षणा ज्ञानानुकूलकृतेर्बोधात् । एवञ्चाख्यातार्थाश्रये वर्तमानकालस्यान्वयाङ्गीकारे आश्रयस्य वर्तमानतायां ज्ञानस्यासत्त्वेऽपि जानातीति प्रयोगापत्तेः । अतो धात्वर्थज्ञाने वर्तमानकालस्यान्वयः स्वीकार्य इति । **नातिप्रसङ्ग इति** । कालिकादिसंबन्धेन कारणस्य कालादावपि सत्त्वेन न तत्र वर्तमानत्वप्रकारकबोधातिव्याप्तिरिति भावः । अत्रैवानुभवं प्रमाणयति—**जानातीत्यादिनेति** । वर्तमानकालिकज्ञानाश्रयत्ववानिति बोधः । एवं वर्त्तमान-

तत्र लटा शक्त्या वर्त्तमानत्वं, लक्षणयाऽऽश्रयत्वं बोध्यत इति विशेषः लटा स्वाधिकरणकालोपाधिस्पन्द एव वर्त्तमानः प्रत्याय्यते। वर्त्तमानसामीप्ये विहितेन तु स्वानधिकरणसमीपवर्त्ती तादृशकालः। तत्रापि शक्तिर्लक्षणा वेत्यन्यदेतत्।

---

कालिकेच्छाश्रयत्ववान्, वर्तमानकालिकयत्नाश्रयत्ववानित्यादिक्रमेण बोधः। **स्वाधिकरणेति**। स्वस्य — लट्प्रयोगस्य अधिकरणं यः कालः स उपाधिः विशेषणं, यस्य स्पन्दस्य 'क्रियायाः' स एवेत्यर्थः। **वर्तमानसामीप्ये विहितेनत्विति**। अयं भावः — क्वचिद् वर्तमानसामीप्यमपि लडाद्यर्थः, "वर्तमानसामीप्ये वर्तमानवद्वे" ति सूत्रात्। तच्च धातुविशिष्टत्वम्, वै. स्वविशिष्टत्वम् स्वविशिष्टत्वम्, एतदन्यतरसंबन्धेन। आद्ये वै. स्वोच्चारणाधिकरणक्षणप्रागभावाधिकरणक्षणोत्पत्तिकाक्रियाधिकरणत्वेन विवक्षितत्वम्, स्वोच्चारणाधिकरणक्षणप्रागभावभिकरणक्षणप्रागभावाधिकरणक्षणोत्पत्तिकक्रियानधिकरणत्वम्, एतदुभयसंबन्धेन। द्वितीये वै. स्वोच्चारणध्वंसाधिकरणक्षणोत्पत्तिकक्रियाधिकरणत्वम्, स्वोच्चारणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकक्रियानधिकरणत्वम्, एतदुभयसंबन्धेन यदा कुतश्चिदागत्य स्थितः केनचित्पृष्टो ब्रवीति 'एष आगच्छामि' इति तदा आङ्पूर्वकगमधातूच्चारणाधिकरणीभूतकालाव्यवहितपूर्वकाल एवागमनमिति विवक्षितम्।

एवञ्चेत्थं लक्षणसमन्वयः-स्वविशिष्टत्वमित्यत्र स्वो धातुस्तदुच्चारणाधिकरणीभूतो यः क्षणः तत्क्षणप्रागभावाधिकरणं क्षणस्तदव्यवहितपूर्वक्षणस्तत्र-तत्क्षणोत्पत्तिकागमनक्रियाधिकरणत्वेन विवक्षितत्वमस्तीति प्रथमः संबन्धस्तत्र। प्रथमसंबन्धवैशिष्ट्यनियामकद्वितीयसंबन्धेऽपि स्वो धातुस्तदुच्चारणाधिकरणक्षणस्य यः प्रागभावस्तदधिकरणं य उच्चारणक्षणाव्यवहितप्राक्क्षण आगमनाधिकरणत्वेन विवक्षितस्तत्क्षणस्य प्रागभावाधिकरणीभूताः क्षणास्ततः पूर्ववर्तिनस्तत्क्षणोत्पत्तिकागमनक्रियानधिकरणत्वमपि तत्रास्ति। भविष्यत्कालिकगमनप्रश्ने 'एष गच्छामि' इत्युत्तरे द्वितीयस्वविशिष्टत्वमादाय लक्षणसमन्वयः। तथाहि—स्वो धातुस्तदुच्चारणध्वंसाधिकरणे

नन्वेकपदोपस्थितयोः कृतिवर्तमानत्वयोः कथं मिथोऽन्वयः। तत्पद-जन्यशाब्दबोधे पदान्तरजन्योपस्थितेर्हेतुत्वात्। कार्यतावच्छेदिका च प्रत्यासत्तिः प्रकारता। कारणतावच्छेदिका च विशेष्यतेति। अन्यथा हरिपदार्थयोः, दण्डेनेत्यादौ च करणत्वैकत्वयोर्मिथोऽन्वयापत्तेः। मैवम्। तत्तत्पदान्यत्वस्योक्तव्युत्पत्तौ प्रवेशात्। कथमन्यथैवकारार्थयोरन्ययोगव्यवच्छेदयोर्मिथोऽन्वयः।

---

उत्तरक्षणे उत्पत्स्यमाना या गमनक्रिया तदधिकरणत्वं तत्र। तथा स्वो धातुः तदुच्चारणध्वंसाधिकरणक्षण उच्चारणक्षणाव्यवहितोत्तरक्षणः तत्क्षणध्वंसाधिकरणक्षणास्तदुत्तरास्तत्रोत्पत्स्यामाना या गमनक्रिया तदनधिकरणत्वमपि तत्र। आद्यस्योदाहरणम्—'कदाऽऽगतो भवान्'। एष आगच्छामि, इति। द्वितीयस्य 'कदा गमिष्यासि'। 'एष गच्छामि' इति। कार्यतावच्छेदिका च प्रत्यासत्तिः—कार्यतावच्छेदकसंबन्धश्चेत्यर्थः।

**कारणतावच्छेदिका चेति**। प्रत्यासत्तिरिति शेषः। कारणतावच्छेदकसंबन्ध इत्यर्थः। एवञ्च प्रकारतासंबन्धेन यत्किञ्चित्पदजन्यशाब्दबोधं प्रति विशेष्यतासंबन्धेन पदान्तरजन्योपस्थितिः कारणमिति कार्यकारणभावः फलितः। एवञ्चैकपदोपस्थापितार्थद्वयस्य परस्परान्वयबोधोऽव्युत्पन्न इति व्युत्पत्तिः फलति। अन्यथा-एकपदोपस्थितयोः पदार्थयोरन्वयस्वीकारे। हरिपदार्थयोः—अश्वेन्द्रयोः आधाराधेयभावसंबन्धेनान्वयापत्तिरित्यर्थः। विस्तरस्तु धात्वर्थविचारावसरे द्रष्टव्यः। तत्तत्पदान्यत्वस्येति। तत्पदजन्यशाब्दबोधे धातुतिङादिभिन्नपदान्तरजन्योपस्थितेर्हेतुत्वस्योक्तव्युत्पत्तौ प्रवेशाददोष इत्यर्थः। कथमन्यथा—उक्तव्युत्पत्तौ तथासंकोचाभावे। सकृदुच्चरितन्यायेन हरिशब्देन युगपदुभयविषयकस्याऽभिधया शाब्दबोधस्यासंभवादित्यपि बोध्यम्। **लडर्थ इति**। लटो वर्तमानत्वे शक्तिः, प्रतियोगित्वे लक्षणेति हृदयम्। ननु शक्यार्थबाधपूर्विका लक्षणेति नियमात् वृत्तिद्वयविरोधात् कथं वर्तमानोत्पत्तिकत्वप्रातियोगित्वयोः समकालं बोध इत्यत आह—**वृत्तिद्वयस्येति**। 'गङ्गायां मीनघोषौ स्त, इत्यादौ एककालावच्छेदेन जलप्रवाहतटयोर्बोधस्य

घटो नश्यतीत्यादौ वर्त्तमानोत्पत्तिकत्वं प्रतियोगित्वं च लडर्थः । आद्यं नाशे प्रकारः, द्वितीयं घटे प्रकारः । वर्त्तमानोत्पत्तिकनाशप्रतियोगी घट इति बोधस्यानुभविकत्वात् । अत्र च वृत्तिद्वयस्य युगपद्बोधकत्वं सर्वैरेषितव्यम् । तादृशोत्पत्तिकत्वप्रतियोगित्वयोरर्थयोर्युगपदेव बोधात् । नच तादृशोत्पत्तिकत्वमेवार्थोऽस्तु । धात्वर्थस्य नाशस्य घटे प्रातिपदिकार्थे साक्षादन्वयासम्भवात् । नच प्रतियोगित्वमेवार्थोऽस्त्विति वाच्यम् । चिरनष्टेऽपि नश्यतीति प्रसंगात् ।

एतेनात्र वर्त्तमानत्वमेवार्थो नोत्पत्तिरित्यपास्तम् ।

---

दर्शनात् तस्य विरोधस्य असार्वत्रिकत्वं प्रतीयते । साक्षादिति । निपातातिरिक्तनामार्थयोः भेदसंबन्धेन साक्षादन्वयस्याव्युत्पन्नत्वादिति भावः । एतेन–ध्वंसस्यानाश्यत्वेन वर्तमानकालेऽपि सत्त्वात् चिरनष्टेऽपि नश्यतीति प्रयोगप्रसङ्गेनेत्यर्थः । परे तु वर्तमानत्वं, प्रतियोगित्वञ्च,–लडर्थः । वर्तमानस्योत्पत्तिमत्त्वसम्बन्धेन नाशेऽन्वयान्न काचनापि क्षतिरित्याहुः । नव्यनैयायिकास्तु–धात्वर्थ एवोत्पत्तिः । तथाहि नाशत्वं हि उत्पत्तिमदभावत्वम् । तत्र धातुवाच्यतावच्छेदकोत्पत्तौ वर्तमानकालान्वयेन न चिरकालविनष्टे नश्यतीति प्रयोगापत्तिरित्याहुः ।

केचित्तु–धातोर्नाश एवार्थः । आख्यातस्य प्रतियोगित्वे लक्षणा । वर्तमानकालस्य स्ववृत्त्युत्पत्तिकनाशीयत्वसंबन्धेन प्रतियोगित्वेऽन्वयः । एवञ्च घटो नश्यतीत्यत्र घटवृत्तिनाशप्रतियोगित्वं वर्तमानकालोत्पत्तिकनाशीयत्वसंबन्धेन वर्तमानत्ववदिति बोधो नोत्पत्तिर्धात्वर्थ इत्याहुः ।

प्राचीनवैयाकरणास्तु-नाशानुकूलव्यापारो नशधात्वर्थः । स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम् । प्रतियोगित्ववैशिष्ट्यञ्च निरूपकतासम्बन्धेन बोध्यम् । नाशश्च चरमक्षणसंबन्धः । क्षणे चरमत्वञ्च स्वाधिकरणक्षणप्रागभावानधिकरणत्वरूपम् । स्वम्–घटादि, घटे स्वरूपसंबन्धेन नाशप्रतियोगिता, सामानाधिकरण्यसंबन्धेन तद्विशिष्टा या दण्डाद्यभिघातरूपा सामग्री, तस्याः समवधानम्—स्थितिः । तथा च

केचित्तु लत्वमेवात्र प्रतियोगित्वस्य वृत्त्यवच्छेदकं, लट्त्वन्तु तादृशोत्पत्तिकत्वस्य। एकधर्मावच्छिन्नवृत्तिद्वयस्यैव न युगपद्बोधकत्वम्। अन्यथा दण्डेनेत्यादौ करणत्वैकत्वयोर्बोधो न स्यादित्याहुः।

अन्ये तु नश्यतीत्यादौ लटा नाशसामग्र्येव बोध्यते। तेन न चिरनष्टे नश्यतीति प्रसङ्गः। अतएव विनश्यत्ता विनाशसामग्रीसान्निध्यमित्याहुः प्रामाणिकाः। आख्यातात्क्रियाविशेष्यको बोध इति वैयाकरणाः भाट्टाश्च। आद्यनये धात्वर्थः क्रिया। चैत्रस्तण्डुलं पचतीत्यादितश्चैत्रकर्तृकतण्डुलकर्मकपाक इति धीः। अन्त्यनये भावना क्रिया प्रत्ययार्थः। चैत्रीयपाककरणिका तण्डुलकर्मिका भावनेति बोधः।

प्रथमान्तार्थविशेष्यक एव बोधः। ओदनकर्मकपाकानुकूलकृतिमांश्चैत्र इति बोध इति नैयायिकाः। द्वितीयाद्यर्थकर्मकरणत्वादेः क्रियायामेव सर्वमतेऽन्वयः।

लङस्तु शक्यो ह्योऽनद्यतनकालः। लुङस्तु भूतसामान्यम्। भूतत्वं च वर्तमानध्वंसप्रतियोग्युत्पत्तिकत्वम्, नतु तादृशप्रतियोगित्वमेव। चिरोत्प-

---

प्रतियोगित्वसमानाधिकरणनाशसामग्रीरूपो व्यापारो घटे। नाशश्च प्रतियोगितासंबन्धेन तत्रैवेति। फलसमानाधिकरणव्यापारवाचकत्वरूपमकर्मकत्वं नशधातोः। तथा च नाशरूपं फलम्, तादृशसामग्रीरूपो व्यापारश्च नशेरर्थः। तादृशसामग्रीरूपव्यापारे कालान्वयः। अत एव तस्यां सत्यां नश्यतीति, तदत्यये 'नष्टः' इति, तद्भावित्वे नङ्क्ष्यतीति प्रयोग इत्याहुः।

**वृत्त्यवच्छेदकमिति**। प्रतियोगित्वनिष्ठशक्यतानिरूपितशक्ततावच्छेदकं लत्वमित्यर्थः। तादृशोत्पत्तिकत्वस्य—वर्तमानोत्पत्तिकत्वस्य। आद्यनये—वैयाकरणनये। अन्त्यनये—भाट्टनये। प्रत्ययार्थः तिङर्थः।

**वर्तमानध्वंसेति**। वर्तमाने ध्वंसः, वर्तमानश्चासौ ध्वंस इति वा। तेन वर्तमानकालवृत्तिर्यो ध्वंसः—अतीतक्रियाध्वंसः, वर्तमानो यो ध्वंस इति वा तत्प्रतियोगिनी तादृशक्रिया, तदुत्पत्तिकत्वमतीतकालस्येति भावः। अतएव घटनाशस्य विद्यमानतादशायामपि विनष्टो घट इति प्रयोगः,

न्नेऽपि पूर्वेद्युरभवदिति प्रत्ययापत्तेः। नष्ट इत्यादौ नाशे तदन्वयासम्भवाच्च उत्पत्तेस्तु देशकालादावन्वयान्न दोषः। अभवदित्यादौ तु धातुनोत्पत्तिः प्रत्याय्यते, नष्ट इत्यादौ तादृशोत्पत्तिकत्वं प्रत्ययेनेति विशेषः। लिटस्तु भूतकाल इव परोक्षत्वमप्यर्थः। अहं चकारेत्यादिप्रयोगादर्शनात्।

ननु चैवं "णलुत्तमो वा" इति ज्ञापकात् उत्तमपुरुषस्तत्र स्यादिति वाच्यम्। 'सुप्तोऽहं किल विललाप' 'मत्तोऽहं किल विचचार' इत्यादौ चित्तविक्षेपादिना पारोक्ष्यमुपपाद्य तत्र सूत्रसार्थक्यसम्भवात्। तत्र च परोक्षत्वेन पारोक्ष्यसादृश्ये तात्पर्यम्। चक्रे सुबन्धुः, इति तु न लिट्प्रयोगोऽपितु तिङन्तप्रतिरूपको निपातः।

लुङ्लृटोस्तु भविष्यत्कालः। भविष्यत्त्वं वर्तमानप्रागभावप्रतियोग्युत्प-

---

तदुत्पत्तेर्वर्तमाननाशप्रतियोगित्वात्। परन्तु अत्रोत्पत्तिघटिते लक्षणे—उत्पत्त्य-र्थकधातुस्थले उत्पत्तेर्द्वैधाभानप्रसङ्गः स्यादिति प्राचीना उत्पत्त्यघटितं वर्तमानध्वंसप्रतियोगित्वं भूतत्वं परिष्कुर्वन्ति। एतन्मते च नश्यत्यादेर्ना-शानुकूलव्यापारार्थकतया कालान्वयस्यापि व्यापार एव समर्थितत्वेन च तदप्रसक्तेरुत्पत्त्यघटितत्वेन द्वैधाभानाऽसम्भवो बोध्यः। उत्पत्तिपदानु-पादाने वर्तमानक्षणवृत्तिध्वंसोऽतीतक्रियाध्वंसः, तत्प्रतियोगित्वस्यातीत-क्रियायां सत्त्वेऽपि क्रियाया अपि कालत्वेन सामान्यातीतेऽपि वर्तमान-त्वात् तादृशप्रयोगः स्यात्। तदुपादाने तु वर्तमानक्षणवृत्तिध्वंसप्रतियो-गिन्या अतीतक्रियाया उत्पत्तिर्यस्मिन् इति बहुव्रीहिणा यस्मिन्काले तादृशक्रियोत्पत्तिः स एवातीतकालो लक्ष्यते। तादृशोत्पत्तिकत्वं तु पूर्वे-द्युर्नास्तीति न काप्यनुपपत्तिरिति प्राचीनमतं निषेधति—नन्विति। वस्तु-तस्तु 'आत्मा आसीत्' इति प्रयोगोपपत्तये भविष्यत्त्ववद् भूतत्वस्यापि उत्पत्तिघटितस्य लङर्थत्वमावश्यकमिति बोध्यम्।

**वर्तमानप्रागभावेति**। वर्तमानकालवृत्तिः यः प्रागभावः—भावि-क्रियाऽभावः, तत्प्रतियोग्युत्पत्तिकत्वं भविष्यत्कालस्य। प्रतियोगित्वमात्र-स्य-उत्पत्त्यघटितलक्षणस्य। तथा च वर्तमानप्रागभावप्रतियोगित्वस्य क्रि-

त्तिकत्वम् । उत्पत्तौ च देशविशेषः कालविशेषश्चाधिकरणत्वेनान्वेति । गृहे घटो भविता, अद्य घटो भविष्यतीत्यादौ धातुनोत्पत्तिः प्रत्याय्यते, वर्तमानप्रागभावप्रतियोगित्वमाश्रयत्वं च प्रत्ययेन। गृहाधिकरणकवर्त्तमान-प्रागभावप्रतियोग्युत्पत्त्याश्रयो घटः, अद्यतनप्रागभावप्रतियोग्युत्पत्त्याश्रयो घट इत्यन्वयबोधात् । वर्त्तमानप्रागभावप्रतियोगित्वमात्रस्य लुडाद्यर्थत्वे श्वो गृहे समुत्पद्य परश्वः प्राङ्गणं गमिष्यति मैत्रे परश्वः प्राङ्गणे मैत्रो भविष्यतीति प्रसङ्गः ।

केचित्तु देशविशेषः कालविशेषश्च प्रागभावे प्रतियोगिनि चान्वेति । परश्वः प्राङ्गणे मैत्रो भविष्यतीत्यस्य परश्वोवृत्तिः प्राङ्गणवृत्तिर्यः प्रागभावस्तत्प्रतियोग्युत्पत्त्याश्रयः परश्वोवृत्तिः प्राङ्गणवृत्तिर्मैत्र इति बोधः । तेन नोक्तातिप्रसङ्गः । एतेन श्वोभाविनि घटे अद्य भविष्यतीति प्रसङ्गो निरस्त इत्याहुः ।

नङ्क्ष्यतीत्यादौ वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं प्रतियोगित्वं च प्रत्ययार्थः। श्वो घटो नङ्क्ष्यतीत्यादौ श्वोवृत्तिः वर्तमानप्रागभावप्रतियोगिनी योत्पत्तिस्तदाश्रयनाशप्रतियोगी घट इत्यन्वयबोधः। यत्त्वत्र वर्त्तमानप्राग-भावप्रतियोगित्वमेव प्रत्ययार्थ इति, तन्न । श्वोभाविनाशके घटे अद्य-नङ्क्ष्यतीति प्रसङ्गात् ।

---

यात्मककाले सत्वात् तादृशः प्रयोगः स्यात् । उत्पत्तिघटितत्वे तु तादृशी उत्पत्तिः अतीतक्रियायाः परश्वो नास्तीति न तादृशः प्रयोग इति भावः ।

**देशविशेष इत्यादि** । देशभेदस्य कालभेदस्य च वृत्तित्वसंबन्धे-नान्वय इत्यर्थः । तेन—देशविशेषकालविशेषयोः प्रागभावे प्रतियोगिनि च वृत्तित्वसंबन्धेनान्वयस्वीकारेण । उक्तातिप्रसङ्गः—श्वोगृहे समुत्पद्य परश्वः प्राङ्गणं गमिष्यति मैत्रे 'परश्वः प्राङ्गणे मैत्रो भविष्यतीति प्रसङ्गः । **श्वोभाविनाशक इति** । अत्र बहुव्रीहिसमासकप्प्रत्ययो, न तु ण्वुल् प्रत्ययः, अर्थासङ्गतेः ।

ननु कियत्यामधिश्रयणादिक्रियायां जातायामवशिष्टफूत्कारादिव्या-पाराभिप्रायेण यथा 'पचती' ति प्रयोगो भवति तथा यत्किञ्चिद्-

पक्ष्यतीत्यादौ आद्यपाकव्यक्तिप्रागभावगर्भमेव भविष्यत्त्वम्, पक्ववानित्यादौ चरमपाकव्यक्तिध्वंसगर्भमेव भूतत्वं भासते। तत्तत्समभिव्याहारस्य तादृशबोधे हेतुत्वात्। तेन पाकमध्ये कस्याश्चित्पाकव्यक्तेरनुत्पादेऽपि कस्याश्चिदतीतत्वेऽपि न पक्ष्यति पक्ववानित्यादिप्रयोगः।

लिङो विधिराशीश्चार्थः। यजेतेत्यादौ विधिः, आशीस्तु भूयादित्यादौ। सा च शुभाशंसनं, तदिच्छेति यावत्। लोटस्तु विधिरनुमतिर्वा। गच्छत्वित्यत्रानुमतिविषयगमनानुकूलकृतिमानिति बोधस्यानुभविकत्वात्। विधिः प्रवर्तनेति भाट्टाः।

---

क्रियायाः भविष्यत्त्वमादाय 'पक्ष्यति' इति प्रयोगापत्तिः। नच पाकत्वावच्छेदेन भविष्यत्त्वान्वयस्य विवक्षितत्वान्न दोषः, अतीतपाकस्यापि पाकत्वावच्छिन्नत्वेन पाकत्वावच्छेदेन तदन्वयासम्भवात्। नच तत्पाकत्वावच्छेदेन भविष्यत्त्वान्वयविवक्षेति वाच्यम्, पचतिना तत्पाकत्वावच्छिन्ने शक्त्यभावेन तत्पाकत्वेनानुपस्थितेः। नच तादृशपाके लक्षणा, गौरवापत्तेरिति चेन्न, तत्तत्क्रियाबोधजनकत्वप्रकारकतात्पर्यविषयीभूतधातुसमभिव्याहृतलृडादिना भविष्यत्त्वप्रकारकबोधं प्रति तत्तत्क्रियाद्यावयवकव्यापारविशेष्यकवर्तमानप्रागभावप्रतियोगित्वप्रकारकज्ञानस्य सहकारिकारणत्वस्वीकारेणादोषात्। कियत्क्रियायां जातायां 'पाकक्रियाया आद्यो व्यापारो वर्तमानप्रागभावप्रतियोगी' इति ज्ञानासम्भवेन तादृशप्रयोगानापत्तेः। भ्रमात्मकज्ञानसत्त्वे चेष्टापत्तेः। एतत्सर्वं मनसि निधाय 'पक्ष्यतीत्यारभ्य' पक्ववानित्यादिप्रयोगः, इत्यन्तेन प्रतिपादितं ग्रन्थकृतेति। सा च—आशीश्च, प्रयोक्तृसमवेताहितप्राप्तिविषयकेच्छारूपैव। हितञ्च स्वस्य परस्य वा। इच्छायाश्च विषयतासंबन्धेन लिङादिप्रकृतिभूतधात्वर्थेऽन्वयः। एवञ्च 'भूयात् ते शिवप्रसादः' इत्यनेन वक्तृसमवेतहितप्राप्तिविषयकेच्छाविषयस्वत्संबन्धिशिवप्रसादकर्तृकं भवनमिति बोधः।

**प्रवर्तनेति भाट्टा इति।** सा च लिङादिश्रवणे 'अयं मां प्रेरयति' इति नियमेन प्रतीतेरभिधाख्या प्रेरणापरपर्याया व्यापाररूपा लिङादिवाच्या। इयं च लिङ्गसंख्यानन्वयित्वाद् व्यापारपदेन, प्रवर्तकनिष्ठत्वात् प्रवर्तनापदेन

लिङ्निष्ठो व्यापारः पदार्थान्तरम्, लिङ्पदज्ञानमेव वा। तस्य प्रवर्तनात्वेन ज्ञानं शब्दाधीनप्रवृत्तौ कारणम्। लिङ्श्रवणे आचार्यो मां प्रवर्तयतीति ज्ञानाद् गवानयनादौ प्रवृत्तेः। आचार्यनिष्ठप्रवर्तना त्वभिप्रायविशेष एवेत्याहुः। तन्न, स्तनपानादिप्रवृत्ताविष्टसाधनताज्ञानस्य हेतुताया आवश्यकत्वात् तत एवोपपत्तौ प्रवर्त्तनाज्ञानस्य हेतुत्वे मानाभावात्। स्वर्गकामो यजेतेत्यादौ प्रवर्तनाविषयो यागकरणिका स्वर्गकर्मिका भावनेति बोधस्य परैरभ्युपगमात् प्रवर्तनाविषयत्वमात्रज्ञानात् प्रवृत्त्यनुपपत्तेरावश्यकस्वर्गसाधनत्वादिज्ञानादेव तत्र प्रवृत्तेः।

---

च व्यवह्रियते। प्रेरणात्वेन तस्याः सविषयकत्वमपि। शक्यतावच्छेदकं च प्रेर्यादिधात्वर्थतावच्छेदकतया सिद्धं प्रेरणात्वमखण्डोपाधिः। स च व्यापारः सम्भवाल्लोके प्रवर्तकपुरुषनिष्ठोऽभिप्रायविशेष एव। तत्प्रवर्तकत्वं च लिङाद्युच्चारयितृत्वम्। वेदे तु प्रयोक्तुरसंभवाल्लिङाद्यन्तशब्दस्वरूप एव। प्रवर्तकत्वञ्च लिङाद्युच्चारयितृत्वे सति स्वतन्त्रत्वम्। राजादिप्रेरितपदातेर्लिङाद्युच्चारयितृत्वेऽपि प्रवर्तकत्वेनाव्यवह्रियमाणत्वात्। **पदार्थान्तरमिति**। वस्तुतस्तु—व्यापारस्य पदार्थान्तरत्वे न किमपि प्रमाणम्। क्लृप्तेन लिङ्पदज्ञानेनैवोपपत्तौ पदार्थान्तररूपव्यापारकल्पने महदनौचित्यञ्च। यतो हि प्रवृत्तिहेतुर्व्यापारः प्रवर्तना। विधिशब्दो हि पुरुषप्रवृत्तिरूपार्थभावनां दशलकारसाधारणाख्यातत्वेन बोधयति।

ज्ञातैव सा अनुष्ठातुं शक्यत इति भवति विधिशब्दस्य ज्ञानद्वाराप्रवृत्तिहेतुत्वम्। तस्य च प्रवृत्तिज्ञानद्वारा प्रवृत्तिहेतुत्वं 'विधिशब्दः प्रवृत्तिबोधहेतुशक्तिमान्' इत्येवं ज्ञातस्यैवेति तादृशशक्तिमत्त्वेन ज्ञानमेव तस्य प्रवृत्तिहेतुर्व्यापार इति स एव प्रवर्तनाख्यां लभते। **तस्येति**। ज्ञानस्येत्यर्थः। अयं भावः प्रवर्तनात्वेनैव ज्ञानस्य प्रवृत्तिं प्रति कारणत्वान्न लोकवेदयोरननुगमः। लिङ्श्रवणेऽयं मां प्रवर्तयतीति प्रतीतिसाक्षिकस्य प्रवर्तनात्वस्य आज्ञादिष्विव शब्दव्यापारेऽपि सत्त्वात्। **स्तनपानादीति**। सद्यो जातशिशोः अयं मां दुग्धपाने प्रवर्तयतीति बोधाभावात् प्रवृत्तिर्नैव

कार्य विधिरिति प्राभाकराः । स्वर्गकामो यजेतेत्यादौ स्वर्गकामनियो-ज्यकं यागविषयकं कार्यमिति प्राथमिको बोधः । सनियोज्यकं यागविषयकं

---

स्यात्, भवति च प्रवृत्तिस्तेषामपि, एवं तिरश्चामपि लिङ्श्रवणमेव दुश्शकम्, अतः इष्टसाधनताज्ञानं कारणं मन्तव्यम्, तच्चेदृशे स्थले जन्मान्तरीयं फलबलात्कल्प्यते । एवञ्चेष्टसाधनताज्ञानेनैव निर्वाहे प्रवर्तनाज्ञानत्वस्य हेतुतावच्छेदकत्वे मानाभावः ।

**कार्यं विधिरिति प्राभाकरा इति** । इदमत्राकूतम्—आशुतर-विनाशिनो यागादेः कालान्तरभाविस्वर्गादिसाधनत्वस्य ग्रहीतुमशक्यत्वा-न्नेष्टसाधनत्वं विध्यर्थः । द्वारानुपस्थित्या च न परम्परया साधनत्वस्यापि ग्रहः संभवति । योग्यताज्ञानस्य शाब्दबुद्धिहेतुत्वात् । सा चान्वयप्रयो-जकरूपा, यथा घटेन जलमाहरेत्यत्र सच्छिद्रेतरघटत्वम् । न चैवमपि साधनत्वसामान्येन बोध उपपद्यत एवेति वाच्यम् । एकविशेषबाधे सामान्य-ज्ञानस्य तदितरप्रकारकत्वनियमात् । तस्मात् कार्यत्वरूपेणापूर्वं लिङादि-शक्यम् । कार्यत्वरूपेण घटादौ शक्तिग्रहाद् योग्यतावशादपूर्वव्यक्तिलाभः । नहि यागविषयकं कार्यमपूर्वादन्यत् संभवति । नच ज्ञानादिकं तादृशं संभवत्येवेति वाच्यम् । कार्ये स्वर्गकामस्य नियोज्यनियोजकभावलक्षणा-न्वयाङ्गीकारेणादोषात् । तथा हि कामी नियोज्यो नियोजकं कार्यम् । नियोजकत्वञ्च तत्कामिकार्यतया प्रतीयमानत्वम् ।

शाब्दबोधप्रयोजकान्वयप्रयोजकं काम्यसाधनत्वम् । न हि कामी काम्यादन्यत् काम्यसाधनत्वेन ज्ञातं कार्यतयाऽवैति । यागविषयकज्ञानादिकं काम्यस्वर्गादिसाधनमतो योग्यताबलाद्यागविषयकं कार्यं स्वर्गकामीयं स्वर्गकामो यागविषयककार्यवानिति वा शाब्दानुभवो जायमानोऽपूर्वालम्बनो भवति । एवं च काम्ये क्लृप्तशक्तिर्लिङादिर्नित्यनैमित्तिकयोर्निषेधेनाऽपूर्व-वाचकः । फलाश्रवणाच्च तत्र फलाभावः । वैदिककर्मण्युद्देश्यत्वेन बोधिता-पूर्वमुद्दिश्यैव हि प्रवर्तते । एवं च काम्ये फलावाप्तिरानुषङ्गिकी नित्येऽ-प्यपूर्वस्योद्देश्यस्य सत्त्वात् प्रवृत्तिः । तस्मात् कृत्युद्देश्यरूपं कार्यमेव शक्यमिति । **प्राथमिको बोध इति** । अत्र प्रथमबोधोत्तरमपूर्वोपस्थितौ

स्थायिस्वर्गसाधनं कार्यमिति द्वितीयः। स्वर्गकामनियोज्यको यागः स्वर्गकामकार्य्य इति तृतीयः। स्वर्गकामो यागकर्तेति चतुर्थः। अहं स्वर्गकामोऽतो यागो मत्कृतिसाध्य इति पञ्चमः। नच प्रथम एव स्वर्गकामकार्य्यो याग इति बोधोऽस्तु, तथा च कार्यत्वे एव शक्तिर्न कार्ये इति वाच्यम्। यागादिक्रियायां नियोज्यान्वयं विना कार्यत्वान्वयानुपपत्तेः। नियोज्यत्वं हि क्रियानिष्ठकाम्यसाधनताज्ञानाधीनमत्कार्यमिति बोधवत्त्वम्। तच्चु स्वर्गकामनाविशिष्टे योग्यतावच्छेदकतया भासते। घटेन जलमाहरेत्यत्र घटे छिद्रेतरत्ववत्। नच यागे स्वर्गसाधनत्वज्ञानं विनेदृशं नियोज्यत्वं भातुमर्हति। न वा यागे स्वर्गसाधनत्वं प्रथममेव शक्यं ज्ञातुम्।

तद्धि साक्षात् परम्परया वा। नाद्यः। आशुविनाशिनो यागस्य कालान्तरभाविनि स्वर्गरूपफले साक्षादहेतुत्वात्। नान्त्यः। परम्पराघटकापूर्वानुपस्थितेः। अतो यागविषयकं कार्यमिति प्रथमबोधादपूर्वोपस्थितौ तद्द्वारा यागे स्वर्गसाधनत्वग्रहात् तत्र कार्यत्वबोध इत्युक्तम्। नियोज्यत्वं च पदानुपस्थितमपि योग्यतया शाब्दबोधे भासते द्वारमित्यत्र पिधेहीतिवत्।

प्रवर्तकज्ञानविषयो विधिरिति नैयायिकाः। प्रवर्तकं च कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वानां ज्ञानम्। अतस्तेषु लिङ्शक्ति-

---

तत्र द्वितीयबोधेन स्थायित्वस्वर्गसाधनत्वयोः ग्रहे तद्द्वारा यागे स्वर्गसाधनत्वग्रहात् तत्र कार्यत्वबोध उपपादनीयः। अतएव चातीन्द्रियस्य तस्य कार्यत्वोपपत्तिः। चतुर्थबोधस्तु प्रथमप्रतीतकृतेराश्रयान्वयलाभार्थम्। पञ्चमस्तु यागे असाधारणप्रवृत्त्युपपादनार्थमिति ध्येयम्।

**प्रवर्तकज्ञानविषयो विधिरिति नैयायिका इति।** अयमाशयः—अपूर्वस्य वाच्यत्वे मानाभावः। न चोक्तानुपपत्तिरेव मानम्। एकविशेषबाधेऽपि समान्यरूपेणैव तदितरबोधः। घटेन जलमाहरेत्यत्र हि योग्यतया वस्तुतो यश्छिद्ररहितो घटः स घटत्वेनैव बोधविषयो भवति नतु सच्छिद्रेतरत्वविशिष्टघटत्वेन तदुपस्थापकाभावात्। नच लक्षणया, घटपदेनैव तेन रूपेणोपस्थितेर्मानाभावात्। न चान्वयप्रयोजकरूपवत्त्वरूपयोग्यता-

त्रयम् । सुमेरुशृङ्गाहरणनिष्फलाचरणमधुविषसंपृक्तान्नभोजनेषु प्रवृत्ति-वारणाय यथासंख्यं त्रयाणामेव ज्ञानं प्रवर्तकम् ।

यत्तु समुदिते शक्तिरेकैवेति । तन्न, विशेष्य विशेषणभावे विनिगमका-भावेन त्रिष्वेव पृथक्शक्तेः । एवञ्च स्वर्गकामो यजेतेत्यादौ स्वर्गकामीयो यागः कृतिसाध्यः, इष्टसाधनं बलवदनिष्टाननुबन्धी चेति बोध इत्येके ।

वस्तुतो नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नतया तादृशया-गानुकूलकृतिमान् स्वर्गकाम इत्येव बोधः । कृतिसाध्यत्वं च प्रवृत्ति-साध्यत्वम् । अतो न समुद्रतरणादौ प्रवृत्तिः । इष्टसाधनत्वं चेष्टनिष्ठसाध्यता-निरूपकत्वमतो न तृप्तस्य भोजने प्रवृत्तिः । बलवदनिष्टाननुबन्धित्वं तु स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम् । नहि सुखं दुःखे-

---

ज्ञानस्य हेतुतया तदुपस्थितिरावश्यकीति वाच्यम् । वृत्त्या पदजन्यपदार्थो-पस्थितेरेव शाब्दबोधहेतुतया तेन रूपेण भानासंभवात् । उपस्थिताबा-धितपदार्थान्तरभानप्रसङ्गाच्च । एवञ्च साधनत्वसामान्यबोधानुपपत्तिः ।

ननु तथाप्याशुतरविनाशिनः कालान्तरभाविफलजनकत्वे फलसमय-स्यापि व्यापारजनकत्वस्य योग्यतयाऽपूर्वानुपस्थितौ तादृशयोग्यताज्ञानासं-भवाद्यागादावपीष्टसाधनत्वं ग्रहीतुमशक्यमेवेति चेन्न, द्रवद्रव्यत्वस्य करका-त्मकजलेऽपि सत्त्वेन तदभिप्रायकस्य पयसा सिञ्चतीति वाक्यस्यापि योग्यत्वापत्त्या तज्ज्ञानदशायां सेको नैतज्जलकरणक इति बाधकप्रमाण-समयेऽपि तज्जलकरणकशाब्दबोधापत्त्या चान्वयप्रयोजकरूपवत्त्वस्य योग्य-तात्वानभ्युपगमात् । अपि तु तत्पदार्थे तत्पदार्थवत्त्वस्यैव तत्त्वाभ्युपगमात् संशयनिश्चयसाधारणतज्ज्ञानस्यैव कारणतया तन्निश्चयासंभवेऽपि संशया-त्मकतज्ज्ञानस्य धात्वर्थनिष्ठस्यैव प्रवर्तकत्वादपूर्वस्य तथात्वसंभावनाऽपि न, तादृशस्य लोकत एव संभवाच्चेत्याद्ययुक्तमेवेति प्रवर्तकज्ञानविषयं विधिं तार्कि-का मन्यन्ते । तेषु—कृतिसाध्यत्वादिषु । **लिङ्शक्तित्रयमिति** । कृति-साध्यत्वनिरूपिता लिङ्निष्ठैका शक्तिः, इष्टसाधनत्वनिरूपिता लिङ्निष्ठा अपरा शक्तिः, एवं बलवदनिष्टाननुबन्धित्वनिरूपिता लिङ्निष्ठा तृतीया शक्तिरिति शक्तित्रयमिच्छन्ति । **स्वजन्येति** । स्वः-यागः, तज्जन्येष्टोत्पत्तिः

र्विना लभ्यते इति न्यायेन नान्तरीयकं किञ्चिद् दुःखमिष्टोत्पत्ताववश्यं भावि तदातिरिक्तदुःखराहित्यमेव तत्त्वम् ।

'ब्राह्मणो न हन्तव्यः, इत्यादौ नञः कृतिसाध्यत्वेष्टसाधनत्वनिषेधे स्वारस्याभावात्तेन बलवदनिष्टाननुबन्धित्वनिषेधाद् ब्राह्मणवधो बलवदनिष्टजनक इत्यर्थः पर्य्यवस्यति । एतेन समुदिते लिङः शक्तिकल्पनमपास्तम् ।

---

स्वर्गः, तत्र नान्तरीयकम्–अनिवार्यम् । दुःखम्–उपवासादिजन्यम् । तस्मादाधिकस्य दुःखस्य यागे अजनकत्वाल्लक्षणसमन्वयः ।

**ब्राह्मणो न हन्तव्य इति** । अत्र नञर्थोऽभावः, तस्मिन् लिङर्थस्य बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपस्य स्वप्रतियोगिकत्वसंबन्धेनान्वयेऽभावस्य च स्वरूपसंबन्धेन हनने धात्वर्थेऽन्वयः । तथा च बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वप्रतियोगिकाभावविशिष्टं ब्राह्मणहननमिति बोधः । अत्र विशेषणस्य बलवदनिष्टाजनकत्वस्य विशेष्यस्येष्टसाधनत्वस्य चाभावप्रयुक्तो विशिष्टाभावस्तेन बलवदनिष्टजनकत्वं हनने प्रतीयते नैयायिकमते । अत्र धात्वर्थे नञ्रूपनामार्थस्यान्वयः । गुरुमते च हननस्य स्वप्रतियोगिकत्वसंबन्धेन नञर्थाभावेऽन्वयोऽभावस्य च प्रयोज्यत्वसंबन्धेन लिङर्थेऽपूर्वेऽन्वयः, अपूर्वञ्च पुण्यं, तथा च ब्राह्मणहननप्रतियोगिकाभावप्रयोज्यमपूर्वमिति बोधः । नैयायिकमते ब्राह्मणहननमनिष्टजनकं, न तु तद्धननाभावः पुण्यजनकः । गुरुमते ब्राह्मणहननाभावजन्यं पुण्यं नतु ब्राह्मणहननमनिष्टजनकमिति प्रतीयत इति भेदः ।

ननु तर्हि ब्राह्मणहनने कस्मान्न प्रवर्तते गुरुमते इति चेत्–पुण्यप्रयोजकाभावप्रतियोगित्वरूपस्य पुण्यप्रतिबन्धकत्वस्य हनने शब्दात् प्रतीतौ पुण्यकामस्य पुण्यप्रतिबन्धके ब्राह्मणहनने प्रवृत्त्यनुपपत्तेरिति भावः । एतेन–बलवदनिष्टाननुबन्धित्वस्यैव निषेधे स्वारस्येन, **अपास्तमिति** । समुदिते लिङः शक्तिस्वीकर्त्तृमते कृतिसाध्यत्वेष्टसाधनत्वयोरपि निषेधे संप्राप्ते वाक्यार्थासंङ्गतिः स्यादिति तात्पर्यम् दण्डिनमानयेत्यादौ दण्डादौ द्वितीयार्थकर्मत्वान्वयवारणाय प्रकृत्यर्थनिष्ठविषयतानिरूपितविषयतासंबन्धेन

यद्यपि प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययस्येति व्युत्पत्त्या नञर्थे बलवदनिष्टाननुबन्धित्वान्वयोऽसम्भवी, तथाप्यन्यथाऽनुपपत्त्या एतदतिरिक्तस्थले एव सा व्युत्पत्तिः। अतएव नातिरात्रे षोडशिनं गृह्णातीत्यादौ षोडशिग्रहणाभाव इष्टसाधनमिति बोध इति दीधितिकृतः। न हन्तव्य इत्यादौ हननाभावविषयकं कार्यमिति बोध इति गुरवः। ननु पचतीत्यादौ लडाद्यर्थवर्त्तमानत्वादेर्यत्ने एवान्वयान्न सा व्युत्पत्तिः। मैवम्।

यत्र प्रत्ययत्वं तत्र प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्याप्तेः। यः प्रत्ययार्थः स प्रकृत्यर्थस्य विशेष्यतया भासते इति व्याप्तेश्च।

लेटस्तु यच्छब्दासमभिव्याहृतस्यैव विधिरर्थः। समिधो यजतीत्यादौ विधिप्रत्ययात्। देवांश्च याभिर्यजते ददाति च य एवं विद्वानमावास्यां यजते इत्यादौ तदप्रत्ययादिति॥

लङस्तु भूतत्वं क्रियातिपत्तिश्चार्थः। अतिपत्तिरनिष्पत्तिरापादनारूपा। सा च शक्या। सा चापादना तर्कः। तर्कत्वं च मानसत्वव्याप्यो जातिविशेषः।

---

शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभावमूलक 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वव्युत्पत्त्या विरोधात् प्रत्ययार्थभूतस्य बलवदनिष्टाननुबन्धित्वस्य नञर्थेऽन्वयो न स्यादित्याह—**यद्यपीति**। **तथापीति**। अत्र व्युत्पत्तौ प्रत्ययपदेन विधिप्रत्ययातिरिक्तप्रत्ययस्य ग्रहणेनादोष इति भावः। **अन्यथानुपपत्त्या** इति बलवदनिष्टाननुबन्धित्वस्य प्रत्ययार्थभूतस्य नञर्थेऽन्वयाभावेऽसिद्ध्या च। अतएव व्युत्पत्तौ संकोचादेव।

**यत्र प्रत्ययत्वमिति**। अनुमानप्रयोगश्च—प्रत्ययः प्रकृत्यर्थान्वितस्वार्थबोधकः, प्रत्ययत्वात् यन्नैवं तन्नैवमिति। यत्नादौ व्यभिचारवारणं तु तदतिरिक्तनिवेशेनेति बोध्यम्। **तर्क इति**। तर्कश्च व्याप्यारोपेण व्यापकारोपः। आरोपश्च आहार्यज्ञानम्, तच्च बाधकालिकेच्छाजन्यज्ञानरूपम्। यथा निर्वह्निः स्यान्निर्धूमः स्यादिति। अत्र व्याप्यस्य वह्न्यभाव-

एधांश्चेदलप्स्यत ओदनमपक्ष्यत् इत्यादौ एधकर्मको भूतत्वेनापादनाविषयो यो लाभस्तदनुकूलकृतिमान् ओदनकर्मको भूतत्वेनापादनाविषयो यः पाकस्तदनुकूलकृतिमांश्चेति बोधः । भविष्यति क्रियातिपदनेऽपि लृङ् । यदि सुवृष्टिरभविष्यत्तदा सुभिक्षमभविष्यदिति प्रयोगदर्शनात् । भूतत्वभविष्यत्त्वयोर्बोधनियमस्तात्पर्यात् । यदि स्यादित्यादौ लिङोऽप्यापादनायां शक्तिः । यदि निर्वह्निः स्यात्तर्हि निर्धूमः स्यादित्यादौ तस्या एव प्रतीतेः । लाघवेन स्थानिनां वाचकत्वात् सङ्ख्यापि लकारार्थः ॥

## अथ कारकाणि निरूप्यन्ते ।

कर्ता कर्म च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणमित्याहुः कारकाणि षट् ॥

---

रूपस्य आरोपेण व्यापकस्य धूमाभावस्यारोपः । प्रकृते च एधाभावात् ओदनाभाव आरोप्यत इति भावः । ननु लृङः भूतत्वभविष्यत्त्वनिरूपितशक्तिमत्त्वे कुत्र कस्य बोध इति कथं निश्चय इत्याशङ्क्याह—**तात्पर्यादिति** । **लकारार्थ इति** । आदेशानां बहुत्वेन शक्ततावच्छेदकत्वे गौरवात् लाघवात् लकारस्यैव वाचकत्वमिति भावः ।

इति ज्योत्स्नायां लकारार्थनिर्णयः ।

**अथेति** । अथशब्दस्यानन्तर्यमर्थः, तच्च ध्वंसाधिकरणकालवृत्तित्वम्, तस्य धात्वर्थे निरूपणेऽन्वयः । निपूर्वकरूपधात्वर्थः—शिष्यसमवेतज्ञानानुकूलो व्यापारः सच शब्दरूपः । आख्यातार्थः आश्रयत्वम्, अस्याभेदेन कारकपदार्थेऽन्वयः । कारकपदोत्तरद्वितीयाया विषयत्वमर्थः, ज्ञानार्थकधातुसमभिव्याहृतद्वितीयाया विषयतार्थकत्वनियमात् । मयेति कर्त्ता अध्याहार्यः । निरूप्यन्ते इत्यत्र वर्तमानसामीप्ये लट् तथा च वर्तमानकालाव्यवहितोत्तरकालवृत्तित्वमपि आख्यातार्थः, तस्य च व्यापारेऽन्वयः । तथा च ग्रन्थकर्तृनिष्ठवर्तमानकालाव्यवहितोत्तरकालवृत्तिलकारार्थनिरूपणप्रतियोगिकध्वंसाधिकरणकालवृत्ति,—व्यापारजन्यबहुत्वविशिष्टकारकविषयक-ज्ञानमिति बोधो नव्यमते । प्राचीनमते तु व्यापारस्यैव प्राधान्यं सर्वत्रेति बोध्यम् । कारकाणि विभजते—कर्त्तेत्यादि ।

तत्र क्रियानिष्पादकत्वं कारकत्वम् । तच्च कर्त्रादीनां षण्णामपि ।

---

ननु सामान्यज्ञानमन्तरा विशेषविषयिणी जिज्ञासा नोदेतीति कारकसामान्यमनिरूप्य कारकविशेषनिरूपणमसङ्गतमिति कारकसामान्यं लक्षयति क्रियानिष्पादकत्वमिति । भाष्ये " करोति–क्रियां निर्वर्तयति " इति व्युत्पत्तिप्रदर्शनात् । निष्पादयति–उत्पादयति–निष्पादको जनकः । तेन क्रियाजनकत्वं कारकत्वं लब्धम् । जनकत्वञ्चात्र कारणत्वरूपं विवक्षितम् । कारणत्वञ्च अन्यथासिद्धिशून्यत्वे सति कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । तथा च "ब्राह्मणस्य पुत्रं पन्थानं पृच्छति" इत्यादौ ब्राह्मणस्य न कारकत्वम् पुत्रेणान्यथासिद्ध्या तत्त्वाभावात् । क्रियाजनकत्वादेवैषां कारकाणां क्रियायामेवान्वयः ।

ननु सम्प्रदानासत्त्वेऽपि तज्ज्ञानमात्रेणैव तदुद्देशेन दानदर्शनात् सम्प्रदानस्य क्रियाजनकत्वाभावेन कारकत्वं न स्यादिति चेन्न, असन्निहितसंप्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वेन स्वज्ञानपूर्वकालकत्वेनैव जनकत्वात् सम्प्रदानज्ञानवर्तिन्या दानजनकतायाः संप्रदाने आरोप इति तात्पर्यात् । नन्वेवमपि घटस्यानुत्पत्तिदशायामेव 'घटं करोति' इतीष्यते स न स्यात् तदानीं घटाभावेन तत्र जनकत्वासम्भवात्, एवं घटं स्मरतीत्यादावपि घटे स्मरणजनकत्वासम्भवात् कारकत्वानापत्तिरिति, चेन्न बौद्धघटादेः पूर्वकालत्वेन स्मृत्यादिनिष्पादकत्वात् । अत्राप्याद्ये मृदादिवृत्तिजनकत्वस्य, अन्त्ये संबन्धिज्ञाननिष्ठजनकत्वस्यारोप इति तात्पर्यम् । अयं भावः—वैयाकरणमते बौद्धस्यैवार्थस्य पदशक्यत्वात् शाब्दबोधविषयत्वेन बौद्धार्थविषयकबोधतात्पर्येणैव पदानामुच्चारणात् घटादिपदानां क्रियाजनक—कर्मादिरूपार्थविषयकबोधतात्पर्येणोच्चरितत्वरूप "कर्मणि द्वितीया" (पा. सू. २ । ३ । २) इत्यादि शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वेन ततः परं द्वितीयादिविभक्तीनां साधुत्वं सूपपादम् । प्रवृत्तिविषयता तु तत्तद्बौद्धार्थरूपिततत्तद्बाह्यार्थेष्वेति नातिप्रसङ्गः । बौद्धार्थरूपिते बाह्यार्थे जनकत्वव्यवहारस्तु क्वचिद्

तत्र प्रकृतधातुवाच्यव्यापाराश्रयत्वं कर्तृत्वम्।

---

उक्तरीत्याऽऽरोपेणैवोपपादनीय इति रहस्यम्।

तार्किकास्तु—क्रियान्वयित्वं कारकत्वम्। अन्वयश्च विभक्त्यर्थमभ्यन्तरीकृत्य बोध्यः। क्रियावृत्तिविषयतानिरूपितविभक्त्यर्थनिष्ठविषयतानिरूपितविषयताश्रयत्वमिति यावत्। स्तोकं पचतीत्यत्र क्रियाविशेषणस्य स्तोकस्य कारकत्ववारणाय विभक्त्यर्थस्याभ्यन्तरीकरणम्। ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र ब्राह्मणस्य विभक्त्यर्थद्वाराऽपि क्रियान्वयित्वाभावान्न कारकत्वमिति विवृण्वन्ति। तदसमीचीनम्—भूमौ शेते, स्थाल्यां पचतीत्यादौ भूमिस्थाल्योः कर्तृकर्मद्वारा क्रियान्वयित्वेन विभक्त्यर्थद्वारा अन्वयाभावात् कारकत्वानापत्तेः। कर्त्तुरपि कारकत्वानापत्तेश्चेति अलं परचर्चया।

तच्च—क्रियानिष्पादकत्वञ्च। तत्र-षण्णां कारकाणां मध्ये। **प्रकृतेति**। अत्र व्यापाराश्रयत्वं समवायसंबन्धेन बोध्यम्, तेन कालिकसंबन्धमादाय नातिव्याप्तिरिति भावः। अयं भावः-कर्त्तृप्रत्ययसमभिव्याहारे स्वजन्यबोधीयमुख्यविशेष्यताश्रयो योऽर्थस्तदाश्रयत्वसंबन्धेन धातुविशिष्टः कर्त्ता। विशेष्यतायां मुख्यत्वं च स्वप्रयोजकप्रयोज्यविशेष्यतानिरूपितप्रकारताऽसामानाधिकरण्यम्। 'पक्वस्तण्डुलो देवदत्तेन' इत्यत्र फलस्य प्राधान्येऽपि देवदत्तस्य कर्तृत्वसिद्धये कर्तृप्रत्ययसमभिव्याहार इति।

नन्वेवं 'चैत्रेण मैत्रस्तण्डुलं पाचयति' इत्यादौ णिचो द्योतकत्वेन विक्लित्त्यनुकूलव्यापारानुकूलव्यापारस्य पचधातुवाच्यतया प्रयोज्यव्यापारस्य मुख्यविशेष्यताश्रयत्वरूपप्रधानत्वाभावेन तदाश्रयस्य कर्तृत्वानापत्तेरिति चेन्न, णिचो वाचकत्वेन विक्लित्त्यनुकूलव्यापारवाचकपचधातुनिरूपितकर्त्तृत्वस्य प्रयोज्यकर्त्तरि पाचिनिरूपितकर्त्तृत्वस्य च प्रयोजके सुलभत्वेनादोषात्। नचात्र करणतृतीयया निर्वाहः। काष्ठादेः करणत्वविवक्षायां देवदत्तादेस्तदविवक्षायामपि कर्त्तृत्वप्रयुक्ततृतीयार्थं, 'देवदत्तः शतेन बन्धयति' इत्यादौ शतपदात् "अकर्त्तर्यृणे पञ्चमी" इति पञ्चमीनिषेधार्थञ्च कर्त्तृत्वस्यावश्यकत्वादित्यलं पल्लवितेन।

धातुनोक्तक्रिये नित्यं कारके कर्तृतष्येते ।

इति हर्युक्तेः । अन्यकारकनिष्ठो व्यापारस्तु न प्रकृतधातुवाच्यः । यथा वह्निना पचतीत्यत्र वह्निनिष्ठः प्रज्वलनादिः । अन्यकारकनिष्ठ-व्यापाराश्रयस्य कर्तृत्ववारणाय धातुवाच्येति । तत्रोक्ते तु कारकमात्रे प्रथमैव । तिङ्समानाधिकरणे प्रथमा, अभिहिते प्रथमेति वार्तिकद्वयात् । सूत्रमते तु कर्तृकर्माद्यर्थकप्रत्ययेन कर्त्रादेरुक्तत्वात् प्रथमायाः प्रातिपदिकार्थ एवार्थः । तस्य चाख्यातार्थकर्त्रादिनाऽभेदान्वयेन प्रथमार्थस्य कारकत्वम् । अत एवाख्यातार्थद्वारकक्रियान्वयात् तदर्थस्य क्रियाजनकत्वादस्याः कारक-विभक्तित्वेन भाष्ये व्यवहारः । चैत्रो भवतीत्यत्र एकत्वावच्छिन्नचैत्राभिन्न-कर्तृकं भवनमिति बोधः । आख्यातकृतादिना कर्त्रादेरभिधानेऽपि प्रथमयाऽनुद्भूतकर्तृत्वादिशक्तिः प्रतिपाद्यते इति तात्पर्यम् । कर्माख्याते तु चैत्रेण

---

निर्दुष्टकर्तृत्वञ्च—धातुनिष्ठशक्तिविशिष्टार्थाऽऽश्रयत्वम्, वै. स्वज्ञान-प्रयोज्यशाब्दबोधीयानुकूलत्वसंबन्धावच्छिन्नप्रकारतात्वावच्छिन्नप्रतियोगिता काभाववत्त्व—स्वज्ञानीयविषयताश्रयत्वैतदुभयसंबन्धेन । प्रतियोगिता च—स्वाश्रयत्व स्वावच्छेदकताऽऽश्रयत्वाऽन्यतरसंबन्धावच्छिन्ना ग्राह्या । यथा 'घटं करोति चैत्रः' इत्यत्र 'कृञ्पदम् उत्पत्त्यनुकूलव्यापारत्वा-वच्छिन्नविषयकबोधजनकतावत्' इति शक्तिज्ञानम् । तत्र व्यापाररूपोऽर्थः शक्तिविशिष्टः तथाहि—स्व(शक्ति) ज्ञानप्रयोज्यानुकूलत्वसंबन्धावच्छिन्ना-प्रकारता उत्पत्तौ, तादृशप्रकारतात्वावच्छिन्नप्रतियोगिताकाभावश्च व्यापारे, स्व 'शक्ति' ज्ञानीयविषयताश्रयत्वमपि व्यापारे, व्यापारस्य शक्तिज्ञानी-यविषयत्वात् । उक्ता प्रकारता चाश्रयत्वसंबन्धेनोत्पत्तौ, अवच्छेदकत्व-संबन्धेनोत्पत्तित्वे चास्ति, व्यापारे च नास्ति, इत्यन्यतरसम्बन्धावच्छिन्ना प्रकारतानिष्ठा प्रतियोगिता जातेति तादृशव्यापाराश्रयत्वेन चैत्रस्य कर्तृत्वं सिद्धम् । तादृशकर्तृत्वे हरिं प्रमाणयति—धातुनोक्तेति । तस्य—प्राति-पदिकार्थस्य । तदर्थस्य—प्रथमार्थस्य । अस्याः—प्रथमाविभक्तेः ।

**आख्यातकृदादिनेति** । आख्यातेन, कृता आदिना—निपातेन

ग्रामो गम्यते इत्यत्र चैत्रकर्तृकव्यापारजन्य एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठः संयोग इति बोधः। सम्बोधनप्रथमार्थस्यापि अनुवाद्यत्वेनोद्देश्यतया युष्मदर्थाभेदेन विधेयक्रियायामन्वयात् क्रियाजनकत्वरूपं कारकत्वम्। देवदत्त त्वं गच्छेत्यादौ अभिमुखीभवद्देवदत्ताभिन्नयुष्मदर्थोद्देश्यकप्रवर्तनादिविषयो गमनमिति बोधः। अत एव—

आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा।

यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः॥ इत्यभियुक्तोक्तम्— सुपां कर्मादयो प्यर्थाः संख्या चैव तथा तिङाम् इति भाष्यं च सङ्गच्छते। अनुक्तकर्त्रादिषु तृतीयादयो विभक्तयः, अनभिहिताधिकारे तासां विधानादित्यन्यत्र विस्तरः॥

---

चेत्यर्थः। **चैत्रकर्त्तृकेति**। उपपत्तिस्तु चैत्रपदोत्तरतृतीयाया आश्रयोऽर्थः, कर्तरि तृतीयाया विधानात्। तत्राभेदेन चैत्रपदार्थस्यान्वयः। आश्रयस्य च निष्ठत्वसम्बन्धेन धात्वर्थव्यापारेऽन्वयः। कर्मप्रत्ययार्थोऽप्याश्रयः। तत्राभेदेन ग्रामस्यान्वयः। आश्रयस्य च वृत्तित्वसंबन्धेन संयोगेऽन्वयः। संयोगे एव व्यापारस्य जन्यत्वसम्बन्धेनान्वयः। आख्यातार्थैकत्वसङ्ख्यायाः समवायेन ग्रामेऽन्वयः। कर्मणि प्रत्यये फलमुख्यविशेष्यक एव बोधो नव्यमते इति भावः।

सम्बोधनविभक्तेरपि कारकविभक्तित्वं साधयति—**सम्बोधनात्। अभिमुखीभवद्देवदत्तेति**। अयम्भावः "सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते। इति हर्युक्तेः, लाघवाच्च बोधाय सम्मुखीभावः सम्बोधनमिति व्युत्पत्तेः मुखपरावृत्त्याद्यभिव्यङ्ग्योऽभिमुखीभाव एवात्र संबोधनम्। तस्य च सङ्ख्याया इव प्रकृत्यर्थे देवदत्ते आश्रयत्वसम्बन्धेनान्वयः। तस्य विभक्त्यर्थत्वं प्रकृत्यर्थत्वमेव वेत्यन्यदेतत्. प्रकृत्यर्थस्य च 'क्रियासु विनियुज्यते' इत्युक्तया प्रवर्तनान्वयद्वारा विध्यर्थप्रवर्तनायामेवान्वयः। तथाऽन्वयस्वीकारादेव 'नामार्थधात्वर्थयोरभेदान्वय एव" इति व्युत्पत्तिविरोधोऽपि न। प्रवर्तनायाश्च विषयत्वसम्बन्धेन गमनक्रियायामन्वयः।

ननु क्रियानिमित्तत्वं कारकत्वमिति स्वीकार्यमिति चेत्, न। चैत्रस्य तण्डुलं पचतीत्यत्र सम्बन्धिनि चैत्रादावतिव्याप्तेः। अनुमत्यादिप्रकाशनद्वारा सम्प्रदानादेरिव तण्डुलादिद्वारा सम्बन्धिनोऽपि क्रियानिमित्तत्वात्। किन्तु क्रियाऽन्वितविभक्त्यर्थान्वितत्वं क्रियानिर्वर्त्तकत्वं वा कारकत्वम्। विशेष्यतया क्रिया सुप्तिङन्यतरविभक्त्यर्थेऽन्वेति। सच विशेष्यतयैव चैत्रघटादौ। षष्ठ्यर्थस्य तण्डुलादिनामार्थान्विततया क्रियाऽनन्वितत्वात्। अतएव षष्ठ्यर्थस्योपपदविभक्त्यर्थस्य च न कारकत्वम्, क्रियान्वयाभावादिति शाब्दिकाः। उपपदविभक्तीनामपि सम्बन्ध एवार्थः। चैत्रस्य पचतीत्यादावपि तण्डुलादिपदाध्याहारेणैव बोधः। षष्ठ्यर्थसम्बन्धस्य नामार्थेनैव क्रियायाः कर्मत्वादिनैव साकाङ्क्षत्वेन सम्बन्धक्रिययोर्निराकाङ्क्षत्वात्।

---

प्रवर्तनाविषयत्वं च तत्साध्यत्वं, तत्साध्यप्रवृत्तिविषयत्वं वा। एवञ्च फलितः शाब्दबोधो मूले स्पष्टितः। अत एव—प्रकृतधातुवाच्यव्यापाराश्रयत्वरूपकर्तृत्वादेव। **क्रियान्वितविभक्त्यर्थान्वितत्वमिति**। क्रियानिष्ठावच्छेदकतानिरूपितसुप्तिङन्यतरार्थनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्त्वं तत्त्वमिति निष्कर्षः। तदेवोपपाद्यते—**विशेष्यतयेति**। सच विभक्त्यर्थश्च। अत एव—क्रियाऽनन्वितत्वादेव। उपपदविभक्त्यर्थस्येति 'नमः स्वस्ती' तिविहितनमआदिपदोद्देश्यकचतुर्थ्यादिविभक्त्यर्थस्येत्यर्थः।

ननु षष्ठ्यर्थसम्बन्धानुयोगिवाचकपदासत्त्वे अगत्या षष्ठ्यर्थस्य-क्रियान्वयेन कारकत्वापत्तिस्तदवस्थैवेत्याह—**चैत्रस्येति**। अयमत्र विवेकः—प्राचीनाः करोति स्वसम्बन्धेन क्रियायां विशेषरूपतामापादयति इति व्युत्पत्तेः महासंज्ञया क्रियान्वयित्वमेव कारककर्मादिसंज्ञोद्देश्यतावच्छेदकम्। कारकशब्दस्य क्रियापरत्वपक्षे शीघ्रोपस्थितिकत्वेनान्वयीत्यध्याहारेण तदन्वयित्वस्यैव कर्मादिसंज्ञोद्देश्यतावच्छेदकत्वलाभात्। रूढ्यर्थत्वावच्छेदकं तु कारकपदवत्त्वं तज्ज्ञाप्यशक्तिमत्त्वं वा। तेन न 'कारकाणां क्रियान्वयः' इति प्रयोगानुपपत्तिः। ब्राह्मणस्य पुत्रं पृच्छतीत्यादौ

यत्तु कारकान्तराप्रयोज्यत्वे सति कारकचक्रप्रयोजकत्वं कर्तृत्वमिति। तन्न। स्थाली पचति असिश्छिनत्तीत्यादौ स्थाल्यादेः कारकचक्राप्रयोजकत्वात्कारकान्तरप्रयोज्यत्वाच्च तत्त्वं न स्यादित्यलम् ।

---

क्रियान्वयित्वाभावान्न ब्राह्मणादेः कारकत्वम् । घटं करोतीत्यादौ घटादेः क्रियान्वयित्वस्य सत्त्वादाञ्जस्येनैव कारकत्वमुपपद्यत इति न आरोपापेक्षा, अधिकरणस्यापि कर्त्तृ–कर्मघटितपरम्परासम्बन्धेन 'स्ववृत्तिवृत्तित्वसम्बन्धेन' साक्षादेव क्रियायामन्वय इति न कारकत्वानुपपत्तिः। 'अक्षशौण्डः' इत्यादौ समासस्तु शौण्डादिपदस्य आसक्तशौण्डादौ लक्षणाश्रयणादुपपादनीय इत्याहुः ।

नवीनास्तु–'करोतीति कारकमिति व्युत्पत्त्या क्रियाजनकत्वस्यैव आञ्जस्येन लाभात् तदेव कारकत्वमिति अधिकरणस्य कर्त्तृकर्मद्वारा क्रियान्वयेन क्रियाजनकत्वरूपकारकत्वस्योपपत्तेः। 'अक्षशौण्डः' इत्यादौ समासो लक्षणाश्रयणं विनैव सिध्यति न तत्र लक्षणा। अत एव अक्षविषयकशौण्डत्ववान् इति विवक्षितबोधस्तत उपपद्यते। अक्षशौण्डस्य धनमस्तीत्यादौ तु अगत्या लक्षणाश्रयणम्। तत्र शौण्डत्वस्य अविधेयत्वेन लक्षणाश्रयणे बाधकाभावादित्याहुः ।

वस्तुतस्तु प्राचीनमतापेक्षया नवीनमते न किमपि लाघवं तत्रापि लक्षणास्वीकारात्। प्राचीनमते 'अक्षशौण्डः' इत्यत्र शौण्डत्वस्य विधेयत्वेन 'न विधौ परः शब्दार्थः' इति बाधसत्त्वेन लक्षणाभावो न शङ्कनीयः, अस्य न्यायस्य क्वाचित्कत्वात्, क्रियाया एव विधेयत्वस्वीकाराच्च, सर्वं वाक्यं क्रियया परिसमाप्यत, इति न्यायादिति शुक्लः ।

तार्किकाभिमतं कर्त्तृत्वं दूषयति–कारकान्तरेति। अन्यानि कारकाणि कारकान्तराणि, तैरप्रयोज्यत्वे–अप्रवर्त्यत्वे, अथ च कर्मादिकारकाणां चक्रम्—समुदायः, तत्प्रयोक्तृत्वम् प्रवर्तकत्वम्। एतदुभयं च 'चैत्रः काष्ठैस्तण्डुलान् स्थाल्यां पचति इत्यादौ चैत्रे एव न काष्ठादौ। **तत्त्वं न स्यादिति**। प्रवर्तनायाश्चेतनधर्मत्वेनाचेतने स्थाल्यादौ तद्बाधात् कर्त्तृत्वं न स्यादिति भावः ।

कर्मत्वं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् ।

---

केचित्तु कर्तृत्वं कारकचक्रप्रयोजकत्वमेव भाष्यसम्मतं समर्थयन्ते । अचेतने आरोपितस्य तस्याबाधात् । अतएव 'भिक्षा वासयति' इति प्रयोग उपपद्यते । अतएव "प्रधानेन समवाये स्थाली परतन्त्रा' किम्पुनः प्रधानम् ? कर्ता । कथं ज्ञायते कर्त्ता प्रधानमिति ? यत् सर्वेषु साधनेषु सन्निहितेषु कर्ता प्रवर्तयिता भवति इति" 'कारके' इति सूत्रस्थं भाष्यं सङ्गच्छते ।

**प्रकृतधात्वर्थेति** । 'कुलालो घटं करोति' इत्यत्र प्रकृतो धातुः कृञ्धातुः तदर्थः प्रधानीभूतः—इतरानिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारत्वानधिकरणीभूतः—उत्पत्त्यनुकूलो व्यापारः, तत्प्रयोज्यं प्रकृतधात्वर्थफलम् — उत्पत्तिः, तदाश्रयत्वेनोद्देश्यता घटे 'घट उत्पत्त्याश्रयो भवतु' इति कर्त्तुरुद्देश्यात् इति घटस्य कर्मत्वं सिद्धम् । फलाश्रयत्वञ्च फलतावच्छेदकसम्बन्धेन ग्राह्यम् । फलतावच्छेदकसम्बन्धश्च–येन सम्बन्धेन फलाश्रयत्वप्रकारिकेच्छा भवति स सम्बन्धः। स च तत्तद्धातुभेदाद्भिन्नः। यथा ग्रामं गच्छतीत्यत्रानुयोगित्वविशिष्टः समवायः फलतावच्छेदकसम्बन्धः । 'तेन सम्बन्धेन संयोगाश्रयो ग्रामो भवतु' इत्याकारकेच्छीयफलनिष्ठविषयतावच्छेदकत्वस्य समवाये एव सत्त्वेन तत्सम्बन्धेन फलाश्रयस्यैव कर्मत्वं न तु कालिकादिना फलाश्रयस्य, तस्य सम्बन्धस्य फलतावच्छेदकत्वाभावात् । अतएव संयोगस्य द्विष्ठत्वेन तस्य समवायेन ग्राम इव चैत्रे सत्त्वेऽपि 'चैत्रो ग्रामङ्गच्छतीतिवच्चैत्रः स्वङ्गच्छतीति न प्रयोगः । अनुयोगित्वविशिष्टसमवायस्य चैत्रेऽसत्त्वात् ।

एवं ग्रामं त्यजतीत्यादौ प्रतियोगित्वविशिष्टः समवायः फलतावच्छेदकः । 'ग्रामाद्विभजते' इत्यादौ चानुयोगित्वविशिष्टः समवायः फलतावच्छेदकः । अत एव त्यजिविभज्योरुभयोर्विभागावच्छिन्नव्यापारवाचकत्वेऽपि 'ग्रामं त्यजतीतिवत्, ग्रामं विभजती'ति न प्रयोगः, ग्रामस्यानुयोगित्वविशिष्टसमवायेन विभागावच्छिन्नव्यापारवत्त्वेनोद्देश्यत्वाभावात् ।

इदमेव कर्मलक्षणे ईप्सिततमत्वम्। गां पयो दोग्धीत्यादौ पयोवृत्तिर्यो विभागस्तदनुकूलो व्यापारो गोवृत्तिः तदनुकूलश्च गोपवृत्तिः। अत्र पयसः कर्मत्वसिद्ध्यै प्रयोज्यत्वनिवेशः।

---

अत्र च फले कर्तृनिष्ठव्यापारप्रयोज्यविभागरूपफलाश्रयत्वस्य सत्त्वेन सकर्मकत्वम्। नच 'चैत्रमैत्रोभयकर्तृकविभागस्थले प्रतियोगित्वविशिष्टसमवायेन चैत्रे विभागरूपफलसत्त्वेऽपि' चैत्रो मैत्रं विभजते इति प्रयोगापत्तिरिति वाच्यम्, अकर्मकधातुस्थले फलसामानाधिकरण्यस्य व्यापारे सत्त्वेन तत्र फलाधिकरणतायाः समवायेन विवक्षितत्वेन मैत्रवृत्तित्वविशिष्टसमवायेन फलस्य चैत्रेऽभावेनादोषात्, परत्वात् कर्तृसंज्ञया बाधाच्च। **प्रधानीभूतेति**। अत्र किन्तावत् प्राधान्यम्। न तावत् इतरनिष्ठविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणविशेष्यताश्रयत्वं, ग्रामं गच्छन् पुस्तकं पठतीत्यादौ गमधात्वर्थव्यापारस्य शत्रर्थकर्त्तरि प्रकारत्वेन तादृशविशेष्यताया अभावात् ग्रामस्य कर्मत्वानापत्तेरिति चेत्। अत्रोच्यते प्रकृतधातुविशिष्टविशेष्यतावत्त्वं प्रकृतधात्वर्थप्रधानत्वम्। वै०—स्ववाच्यफलवृत्तिप्रकारतानिरूपितत्व, स्वप्रयोज्यप्रकारत्वासमानाधिकरणत्वोभयसम्बन्धेन। तथा च गमधातुप्रयोज्यप्रकारत्वासामानाधिकरण्यस्य तद्धातुवाच्यफलवृत्तिप्रकारतानिरूपितत्वस्य च गमधातुवाच्यव्यापारवृत्तिविशेष्यतायां सत्त्वात् तदाश्रयव्यापारस्य प्राधान्यमक्षतमिति भावः। **इदमेवेति**। अनेनास्य लक्षणस्य सूत्रार्थानुसारित्वं फलितम्।

**दोग्धीत्यादाविति**। विभागानुकूलव्यापारानुकूलो व्यापारो दुहेरर्थः। ननु जन्यत्वनिवेशेनैवेष्टसिद्धौ किंप्रयोज्यत्वनिवेशेन? अत आह—**प्रयोज्यत्वनिवेश इति**। अयम्भावः गोव्यापारं विना पयसि व्यापारपूर्वकविभागानुत्पत्तेः गोपव्यापारजन्यो गोव्यापारो धातुवाच्यः।

तज्जन्यस्तु पयोनिष्ठव्यापारपूर्वको विभागः। तत्र पयोनिष्ठव्यापारस्य विभागनान्तरीयकत्वान्न धातुवाच्यतेति न तदुल्लेखः। एवञ्च पयोनिष्ठविभागरूपफलस्य गोपनिष्ठधात्वर्थप्रधानव्यापारजन्यत्वाभावात् कर्मसंज्ञा

जन्यत्वनिवेशे तन्न स्यात्। प्रयागात्काशीं गच्छतीत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेति। नहि विभागः प्रकृतधात्वर्थः किन्तु नान्तरीयकतया गमने उत्पद्यते। प्रयागस्य फलतावच्छेदकसम्बन्धेन फलाश्रयत्वेनानुद्देश्यत्वाच्च।

ननु प्रकृतधात्वर्थग्रहणेनैवात्र वारणादुद्देश्यत्वनिवेशः किमर्थः इति चेत्, न। तस्यासाधारणं प्रयोजनं काशीं गच्छन्पथि मृत इति काश्याः फलाश्रयत्वाभावेऽपि फलाश्रयत्वेनोद्देश्यत्वसत्त्वात्कर्मत्वम्। ननु काशीं गच्छति चैत्रे चैत्रः काशीं गच्छति न प्रयागमिति प्रयोगानुपपत्तिः, प्रयागस्य फलाश्रयत्वेनोद्देश्यत्वाभावादिति चेत्, उच्यते। कर्मलक्षणे ईप्सिततमपदस्य स्वार्थविशिष्टयोग्यताविशेषे लक्षणा। तथाच प्रकृतधात्वर्थ-प्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशा-लित्वं कर्मत्वम्।

---

न स्यादिति साक्षात् परम्परासाधारणं प्रयोज्यत्वं निवेशनीयमिति भावः। **तन्न स्यादिति**। प्रधानीभूतगोपवृत्तिव्यापारजन्यत्वस्य गोव्यापारे एव सत्त्वात् विभागे तदभावेन पयसः कर्मत्वं न स्यात्। साक्षात् परम्परासाधा-रणप्रयोज्यत्वस्य निवेशे तु प्रधानव्यापारप्रयोज्यत्वस्य विभागेऽपि सत्त्वात् तदाश्रयत्वेन पयसः कर्मत्वसिद्धिः।

गोर्विभागाश्रयत्वेन तु न कर्मत्वं, पयोनिष्ठ—विभागीयसम्बन्धस्यैव फलतावच्छेदकत्वात्, तत्त्वेनानुद्देश्यत्वाच्चेति भावः। **कर्मत्ववारणायेति**। पापप्रक्षेपादिकर्तृव्यापारेण काश्याः संयोगस्येव प्रयागात् विभाग-स्यापि जायमानत्वेन संयोगाश्रयत्वात् काश्या इव प्रयागस्यापि प्राप्तकर्म-त्ववारणायेत्यर्थः। **नहि विभागः प्रकृतधात्वर्थ इति** उत्तरदेशसंयोगा-नुकूलव्यापारस्यैव गमधात्वर्थत्वात्। **नान्तरीयकतयेति**। अन्तरा—विना भवम्—अन्तरीयम् "गहादिभ्यश्छ" इति छप्रत्ययः। ततः स्वार्थे कः। ततो नञा सुप्सुपेति समासः। अवश्यंभावितयेत्यर्थः। गमनिष्ठव्याप्यतानिरू-पितव्यापकतावत्त्वं विभागे वर्तते इति तु निष्कर्षः। **फलतावच्छेदकेति**। अत्रत्यं तत्त्वं प्रागेवावेदितम्।

तच्च प्रयागस्याप्यस्तीति कर्मत्वं तस्य सुलभम्। एतेन कार्यान्तरं कुर्वति चैत्रे किं ग्रामं गच्छति अथवा ओदनं पचतीति प्रश्ने न ग्रामं गच्छति नौदनं पचतीत्यादिप्रयोगा व्याख्याताः। यत्र तु ताडनादिना पराधीनतया विषभोजनादिकं तत्र विषादि तादृशफलाश्रयत्वेनोद्देश्यमेव। अत एव "आतश्च विषमीप्सितं यद्भक्षयति ताडनात्" इति भाष्यं स ङ्गच्छते।

एतेन कशाभिहतः कारागारं गच्छतीति व्याख्यातम्। कालत्रये काशीगमनशून्ये चैत्रे काशीं गच्छति चैत्र इति वारणाय विशेष इति।

---

**तच्चेति**। उक्तफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वमित्यर्थः। तथाच प्रयागस्य संयोगरूपफलाश्रयत्वेनोद्देश्यत्वाभावेऽपि निरुक्तयोग्यताविशेषशालित्वात् कर्मत्वं सिद्धमिति भावः। केचित्तु—"परौ भुवोऽवज्ञाने" इति ज्ञापकात् धातूनामनेकार्थत्वात् नञ्समभिव्याहारस्थले धातूनामपि अभावोऽप्यर्थः, नञ्पदं तात्पर्यग्राहकम्। एवञ्च प्रकृते संयोगाभावानुकूलव्यापारवाचकत्वेन गमधातोः संयोगाभावाश्रयत्वेनोद्देश्यत्वात् प्रयागस्यापि कर्मत्वं सेत्स्यतीत्याहुस्तन्न,— असमस्तनञः "सम्बोधनान्तं कृत्वोऽर्थाः" इति नियमात् क्रियायामेवान्वयात् संयोगाभावबोधने प्रमाणाभावात्। वस्तुतस्तु समभिव्याहृतधातुवाच्यव्यापारविशिष्टत्वं कर्मत्वमिति, वै० स्वाभावप्रयोज्याभावाश्रयत्व, स्वप्रयोज्यप्रकृतधात्वर्थफलवत्त्वप्रकारकेच्छानिरूपितविषयताश्रयत्वान्यतरसम्बन्धेन। आद्यसम्बन्धेन प्रयागस्य कर्मत्वं सेत्स्यतीति न काप्यनुपपत्तिः। एतेन— योग्यतानिवेशेन। **व्याख्याता इति** प्रधानीभूतव्यापारप्रयोज्यफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वेन कर्मत्वे सिद्धे इमे प्रयोगाः साधुत्वेन समाहिता इति भावः।

ननु विषस्यानुद्देश्यत्वेन विषं भुङ्क्ते इति प्रयोगो न स्यादित्याह— **ताडनादिनेति**। विषे भक्षिते ताडनात् सद्यःपीडाकरात् मुक्तिर्भविष्यतीति तत्रापि उद्देश्यत्वमक्षतमिति भावः।

अत्र भाष्यं प्रमाणयति— **अत एवेति**। विषभक्षणस्योद्देश्यत्वादेवेत्यर्थः।

काश्याः फलाश्रयत्वेनोद्देश्यत्वयोग्यतासत्त्वेऽपि तद्विशेषाभावान्न कर्मत्वम् । तद्विशेषश्च व्यापारसमकालिकस्तटस्थजनगम्यः । किञ्च ईदृशस्थले तद्विशेषवत्त्वेऽपि निषेध एवानुभवसिद्ध इति काशीं न गच्छतीति किमनुपपन्नम् ।

नन्वन्नं भक्षयन् विषं भुङ्क्ते, ग्रामं गच्छंस्तृणं स्पृशतीत्यादौ विषतृणयोरुद्देश्यत्वाभावात् कथं कर्मत्वमिति चेच्छृणु । "तथायुक्तम्" इति लक्षणान्तरात् । प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वमनीप्सितकर्मत्वमिति तदर्थात् । प्रयागात् काशीं गच्छतीत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेति ।

द्वेष्योदासीनकर्मसङ्ग्रहार्थमिदं लक्षणम् । दुहादीनां व्यापारद्वयार्थकत्वपक्षे "अकथितञ्च" इति व्यर्थम्, पूर्वेणैवेष्टसिद्धेः । एकव्यापारबोधकत्वपक्षे तु सम्बन्धषष्ठीबाधनार्थम् । तत्पक्षे कर्मसम्बन्धित्वे सति अपादानादिविशेषाविवक्षितत्वमकथितकर्मत्वमिति तृतीयलक्षणेन 'गां पयो दोग्धि' इत्यादौ गामित्यस्य कर्मत्वसिद्धिरित्यन्यत्र विस्तरः ।

यत्तु तार्किकाः—कर्मत्वं तु न करणव्यापारवत्त्वम्, तद्धि करणजन्य-

---

लक्षणमिति । अन्यथा फलाश्रयत्वेनोद्देश्यत्वाभावात् द्वेष्योदासीनादीनां न स्यादिति भावः ।

**व्यापारद्वयेति** । एतत्तत्त्वं कर्मलक्षणघटकप्रयोज्यत्वप्रयोजननिरूपणावसरे प्रतिपादितम् । **पूर्वेणैवेति** । कर्तुरीप्सिततमं कर्मेति सूत्रेणेत्यर्थः । **सम्बन्धषष्ठीबाधनार्थमिति** । अस्य "अकथितञ्चे" ति सूत्रमित्यस्य शेषो बोध्यः । **करणजन्येति** । करणव्यापारजन्येत्यर्थः ।

ननु चैत्रं चैत्रो गच्छतीतिप्रयोगवारणाय धात्वर्थक्रियायां परसमवेतत्वं विशेषणीयम् । परत्वञ्च द्वितीयया स्वप्रकृत्यर्थापेक्षया बोध्यते । तेन द्वितीयाप्रकृतित्वेन विवक्षितार्थभिन्नसमवेतव्यापारजन्यं यत्फलं तादृशफलाश्रयस्यैव कर्मत्वं स्वीकार्यम् । प्रकृते द्वितीयाप्रकृतित्वेन विवक्षितचैत्रार्थप्रतियोगिकभेदस्य चैत्रेऽसत्त्वात् तत्समवेतव्यापारजन्यसंयोगरूपफलाश्रयस्य

व्यापारवत्त्वम् । दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणजन्यव्यापारवति दात्रादावतिव्याप्तेः । नापि क्रियाजन्यफलशालित्वं तत् । चैत्रश्चैत्रं गच्छतीत्यापत्तेः । संयोगरूपफलस्योभयकर्मकर्तृनिष्ठत्वात् । नापि परसमवेतक्रियाजन्यफलशालित्वं तत् । गमिपत्योः पूर्वस्मिन्देशे त्यजेश्चोत्तरस्मिन् देशे कर्मत्वप्रसाङ्गत् । नदी वर्धत इत्यादौ अवयवोपचयरूपवृद्धिक्रियायाः तीरप्राप्तिरूपफलाश्रये तीरे कर्मत्वापत्तेश्चेति ।

अत्र ब्रूमः—धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम्—तादृशफलं च गमेस्संयोगस्त्यजेर्विभागः पतेरधोदेशसंयोगः । अधोदेशरूपकर्मणो धात्वर्थनिविष्टत्वादकर्मकत्वेन पर्णं वृक्षाद्भूमौ पततीति । संयोगमात्रफलपक्षे वृक्षाद् भूमिं पततीति । ननु चतुर्थलक्षणेऽपि चैत्रश्चैत्रं गच्छतीत्यापत्तिः तत्र हि

---

न कर्मत्वम् । ग्रामप्रतियोगिकभेदवच्चैत्रसमवेतव्यापारजन्यफलाश्रयत्वात् ग्रामस्य कर्मत्वं सिद्ध्यति । कार्यकारणभावस्तु—स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन परसमवेतत्वप्रकारकबोधं प्रति भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्यभावनोपस्थितिः कारणमिति, तदपि दूषयति—**नापीत्यादिना । कर्मत्वप्रसङ्गादिति ।** कर्तृव्यापारजन्यसंयोगाश्रयस्य ग्रामस्येव तादृशविभागाश्रयस्य पूर्वदेशस्यापि कर्मत्वं स्यादेव । एवं त्यजधातुयोगेऽपि व्यापारजन्यविभागाश्रयत्वात् पूर्वदेशस्येवोत्तरदेशस्यापि तज्जन्यसंयोगाश्रयत्वात् कर्मत्वं दुर्निवारमेव स्यात् । **धात्वर्थतावच्छेदकेति ।** धात्वर्थता—धातुजन्योपस्थितीयविशेष्यता तदवच्छेदकेत्यर्थः । धात्वर्थविशेष्यविशेषणमिति यावत् । एवञ्च संयोगानुकूलव्यापारस्य गमिपत्यर्थत्वात् व्यापारनिष्ठविशेष्यताया अवच्छेदकत्वं विशेषणीभूतसंयोगे एवास्ति न तु विभागे, विभागस्य धातुवाच्यत्वाभावात् । एवं विभागानुकूलव्यापारस्य त्यजधात्वर्थत्वात् व्यापारनिष्ठविशेष्यताया अवच्छेदकत्वं विशेषणीभूते विभागे एवास्ति न तु संयोगे, संयोगस्य धातुवाच्यत्वाभावात् । एतदेवोपपादयति—**तादृशफलमित्यादिना** । धात्वर्थेनोपसंग्रहादिति नियमादिति भावः । चतुर्थलक्षणेऽपि—'धात्वर्थतावच्छेदकफलशालित्वमि'ति

धात्वर्थतावच्छेदकफलं संयोग इति चेत्, न। लक्षणे व्यापारानधिकरणत्वे सतीति विशेषणदानादित्याहुः। तन्न।

काशीं गच्छन् पथि मृत इत्यादौ काश्याः, काशीं गच्छति न प्रयागमित्यादौ प्रयागस्य, ग्रामं न गच्छतीत्यादौ ग्रामस्य च तादृशफलशालित्वाभावादेतस्य लक्षणस्यात्र सर्वत्राव्याप्तेः।

ननु वृक्षं त्यजति खग इत्यत्र वृक्षस्य विभागरूपफलाश्रयत्वेनापादानत्वमस्त्विति चेत्, न। अत्र हि विभागः प्रकृतधात्वर्थः। यत्र च विभागो

---

लक्षणेऽपीत्यर्थः। **संयोग इतीति**। तथा च तादृशफल-संयोगाश्रयत्वाच्चैत्रस्य कर्मत्वापत्तिस्तदवस्थैवेति भावः। **विशेषणदानादिति**। धात्वर्थतावच्छेदकफले विशेषणदानादित्यर्थः। एवञ्च व्यापाराधिकरणवृत्त्यत्यन्ताभावीयप्रतीयोगित (न) वच्छेदकधर्मावच्छिन्नधात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति लक्षणं सम्पन्नम्। चैत्रीयसंयोगस्य तथात्वान्न दोष इति भावः। केचित्तु—भेदः, आधेयत्वञ्च कर्मप्रत्ययार्थः। तत्र भेदे प्रकृत्यर्थस्य पूर्ववदेवान्वयः। भेदस्य सामानाधिकरण्यसम्बन्धेन व्यापारेऽन्वयः। आधेयत्वे च निरूपितत्वसम्बन्धेन प्रकृत्यर्थस्य। आधेयत्वस्य च स्वरूपसम्बन्धेन संयोगेऽन्वयः। तथा च 'ग्रामं गच्छति चैत्र' इत्यत्र ग्रामवृत्तिसंयोगजनको ग्रामप्रतियोगिकभेदसमानाधिकरणो यो व्यापारस्तज्जनककृतिमाँश्चैत्र इति बोधः।

नचैवमपि 'चैत्रश्चैत्रं न गच्छति, इत्यस्याप्रामाण्यापत्तिः,' चैत्रनिष्ठः चैत्रभिन्नसमवेताक्रियाजन्यसंयोगजनको यो व्यापारस्तस्याप्रसिद्धत्वादिति वाच्यम्, नञ्समभिव्याहारे धात्वर्थव्यापारे चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य भानोपगमेनादोषात्। तादृशावच्छेदकत्वञ्च मैत्रत्वादौ प्रसिद्धमेव। एवञ्च 'चैत्रश्चैत्रं न गच्छति' इत्यतः चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववान् यः चैत्रवृत्तिसंयोगानुकूलो व्यापारस्तज्जनककृतिमांश्चैत्र इति बोध इत्याहुः। **विभागरूपफलाश्रयत्वेनेति**। यथाकथञ्चिद् विभागाश्रयत्वमपादानत्वमित्यभिमानेनेदमिति। **अपादानत्वमिति**। तत्तत्कर्तृसमवेतत्वत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वमपादानत्वमिति लक्षणादि-

न प्रकृतधात्वर्थस्तद्विभागाश्रयस्यैवापादानत्वम्, यथा वृक्षात्पततीत्यादौ। यत्र च प्रकृतधात्वर्थो विभागस्तत्रोभयप्राप्तौ "अपादानमुत्तराणि कारकाणि बाधन्ते" इति भाष्ययुक्तेः कर्मत्वम्। अनुक्ते कर्मणि षष्ठीद्वितीये, भारतस्य श्रवणं, भारतं शृणोतीति यथा।

सकर्मकत्वं च फलव्यधिकरणव्यापारवाचकत्वम्। फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम्। अद्य देवदत्तो भवति उत्पद्यत इत्यर्थः। अत्रोत्पत्तिरूपं फलं बहिर्निस्सरणं च व्यापारः देवदत्तनिष्ठ एव। व्यापारमात्रवाचकत्वं वाऽकर्मकत्वम्। अस्ति भवति विद्यते वर्तत इत्यादिधातुषु फलस्य सर्वैर्दुर्विज्ञेयत्वात्। सत्ता हि स्थितिरूपो व्यापारविशेषः। देवदत्तोऽस्तीत्यादौ देवदत्तकर्तृका सत्तेत्येव बोधाच्च। "फलव्यापारयोर्धातुवाचक" इति तु बाहुल्याभिप्रायेणेति दिक्।

स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वं करणत्वम्। इदमेव साधकतमत्वम्।

---

त्यर्थः। **विभाग इति**। फलतावच्छेदकसंबन्धेन च फलाश्रयत्वमिति शेषो बोध्यः।

इति द्वितीयाकारकविचारः।

## "अथ तृतीयाकारकविचारः"

**स्वनिष्ठेति**। यस्य करणत्वं विवक्षितं तत् स्वम्। यथा दण्डेन घटं करोतीत्यत्र दण्ड इति। स्वोक्तार्थस्य सप्रमाणतां दर्शयितुं सूत्रैकदेशमुपन्यस्यति—**साधकतमत्वमिति**। अयम्भावः–तमबर्थः प्रकर्षः, प्रकर्षश्च कारकान्तरापेक्षया, न तु करणान्तरापेक्षया, कारकसामान्यवाचकसाधकशब्दात्तमपो विधानात्। तेन देवदत्तोऽश्वेन दीपिकया यथा गच्छति, इति प्रयोगः सिद्ध्यति। कारणान्तरापेक्षया प्रकृष्टस्य करणत्वे तु युगपदेकस्यैव करणत्वं स्यात्, एकस्यैव कस्याचित्प्रकृष्टत्वात्। प्रकर्षश्च अव्यवधानेन फलजनको यो व्यापारस्तद्वत्तेत्यर्थः। एवञ्च यद्व्यापाराव्यवधानेन फलनिष्पत्तिः तत्त्वं करणत्वं फलति। तथा

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥

इति हर्युक्तेः । क्रियाया इत्यस्य फलात्मिकाया इत्यर्थः ।

रामेण बाणेन हतो वालीत्यादौ धनुराकर्षणादेर्व्यापारस्य बाणव्यापारात्पूर्वमपि कर्तरि सत्त्वात् । रामाभिन्नकर्तृनिष्ठव्यापारप्रयोज्यो यो बाणनिष्ठो व्यापारस्तज्जन्यं यत् प्राणवियोगरूपं फलं तदाश्रयो वालीति बोधाच्च । रामो बाणेन वालिनं हन्तीत्यादौ कर्तृप्रत्यये बाणव्यापारजन्यो यो वालिनिष्ठः प्राणवियोगस्तदनुकूलो रामकर्तृको व्यापार इति बोधः ।

---

च सर्वाण्यपि कारकाणि विवक्षया करणानि । अत्र हरिं प्रमाणयति- क्रियाया इति । फलात्मिकाया इति क्रियते या सा क्रियेति व्युत्पत्त्या फलस्यापि क्रियात्वेन व्यवहारः । अयमत्र संग्रहः—भूषणकृत् करणतृतीयायाः आश्रयव्यापारौ शक्यौ, 'आश्रयोऽवधिरुद्देश्यः' इति कारिकायामाश्रयपदस्य व्यापारोपलक्षणत्वम् । अत्र साधकतममिति सूत्रं मानम् । 'रामेण बाणेन हतो वाली' इत्यत्र बाणस्याभेदेन तृतीयार्थाश्रये, तस्याधेयतया तृतीयार्थव्यापारे, तस्य जन्यत्वसम्बन्धेन प्राणवियोगे फले, तस्याश्रतया वालिन्यन्वयः । रामस्याभेदसम्बन्धेन तृतीयार्थाश्रये तस्याधेयतया धात्वर्थव्यापारे, तस्य जन्यतया फले, तस्याश्रयतया वालिन्यन्वयः । एवञ्च रामाभिन्नाश्रयवृत्तिव्यापारजन्यो बाणाभिन्नाश्रयवृत्तिव्यापारजन्यश्च यः प्राणवियोगस्तदाश्रयो वालीति बोधः इत्याह ।

अन्ये तु व्यापारे शक्तिमस्वीकृत्य तृतीयार्थस्यैवाश्रयस्य स्ववृत्तिव्यापारजन्यत्वादिनाऽन्वयमाहुः । परे तु यथा कर्त्तृतृतीयायाः कर्त्तृत्वादिशक्तिमान्, कर्त्तृक्रियाभावः सम्बन्धश्चार्थः तथा करणतृतीयायाः करणत्वशक्तिमान्, क्रियाकरणभावः सम्बन्धश्चार्थः । तच्छक्तिमत्त्वं व्यापारवत्त्वमेव । शाब्दबोधश्च मूले स्पष्ट एव । अन्वयस्तु पूर्ववदेवेत्याहुः । नैयायिकास्तु असाधारणं कारणं करणम् । कारणेऽसाधारण्यञ्च व्यापारवत्त्वमेव, न तु फलायोगव्यवच्छिन्नत्वम्, तस्य यावत्कारणघटिततया

अर्थाद्रामव्यापारप्रयोज्यो बाणव्यापार इति पार्ष्णिको बोधः । कर्त्रादि-पञ्चकारकाणां करणत्ववारणाय व्यापाराव्यवधानेनेति दिक् ।

क्रियामात्रकर्मसम्बन्धाय क्रियायामुद्देश्यं यत् कारकं तत्त्वं सम्प्रदानत्वम् । यथा ब्राह्मणाय गां ददातीत्यादौ दानक्रियाकर्मीभूतगोसम्बन्धाय ब्राह्मणो दानक्रियोद्देश्यः । गोब्राह्मणयोः स्वस्वामिभावः सम्बन्धः, चैत्रो मैत्राय वार्ताः कथयतीत्यत्र मैत्रवार्तयोर्ज्ञेयज्ञातृभावः सम्बन्धश्च । यत्तु वृत्तिकाराः सम्यक्प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थसंज्ञेयम् । तथा च गोनिष्ठस्वस्व-त्वनिवृत्तिसमानाधिकरणपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपाक्रियोद्देश्यस्य ब्राह्म-णादेरेव सम्प्रदानत्वम् । पुनर्ग्रहणाय रजकस्य वस्त्रदानं रजकस्य वस्त्रं ददातीति सम्बन्धसामान्ये षष्ठ्येवेत्याहुः ॥ तन्न । "खण्डिकोपाध्यायः शिष्याय चपेटां ददाति" इति भाष्यविरोधात् । "कर्मणा यमभिप्रैति" इति सूत्रव्याख्यावसरे भाष्यकृताऽन्वर्थसंज्ञाया अस्वीकाराच्च । अत एव—

तदाचक्ष्वासुरेन्द्राय स च युक्तङ्करोतु यत् ।

इति सप्तशतीश्लोकः सङ्गच्छते । तस्माद्रजकाय वस्त्रं ददातीत्यादि भवत्येव । अत्राधीनीकरणेऽर्थे ददातिः । चपेटां ददातीत्यत्र न्यसनेऽर्थे इति ।

---

गौरवेण तद्धर्मावच्छिन्ने शक्त्यसिद्धेः । स एव च प्रकर्षः साधकतममिति तमपा बोध्यते । व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपः । एवञ्च जनकत्वस्याव्यवधानाघटितत्वेन लाभस्य नान्तरीयकत्वान्न तत्र पृथक् शक्तिरिति व्यापारमात्रं करणतृतीयार्थः, तस्मिन् प्रकृत्यर्थस्याधेयतासम्बन्धे-नान्वयः । शेषं पूर्ववदित्याहुः । **व्यापाराव्यवधानेनेति** । कर्त्रादि-कारकाणां व्यापारानन्तरभावितत्तत्कारकाणां व्यापारसहकारेणैव क्रिया-निष्पत्तिरिति भावः ।

इति तृतीयाकारकविचारः ।

## "अथ चतुर्थीकारकविचारः"

**क्रियामात्रेति** । अत्र मात्रपदं कात्स्न्यर्थकम् । तेन सकलक्रिया-कर्मसम्बन्धायेत्यर्थः सूचितो नतु केवलदानक्रियाकर्मसम्बन्धायेत्यर्थः ।

सम्प्रदानचतुर्थ्यर्थ उद्देश्यः । तथा च ब्राह्मणोद्देश्यकं गोकर्मकं दानमिति

---

सम्प्रदानचतुर्थ्यर्थ उद्देश्य इति । अयम्भावः 'सम्प्रदाने चतुर्थी' इति सूत्रात् सम्प्रदाने चतुर्थी भवति । संप्रदानं च "कर्मणा यमभिप्रैति स सम्प्रदानम्" इति सूत्रात् कर्मणा—करणभूतेन यमभिप्रैति—ईप्सति तत् कारकं सम्प्रदानमित्यर्थकादुद्देश्यम् । एवञ्च क्रियाया यत् कर्म तत्सम्बन्धजन्यफलाश्रयत्वेनेच्छाविषयत्वम् उद्देश्यत्वम् । 'विप्राय गां ददाति' इत्यत्र क्रिया—स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छारूपा, तत्कर्म—स्वस्वत्वध्वंसविशिष्टपरस्वत्वरूपफलाश्रयः गौः । कर्मणः करणत्वञ्च अभिसम्बन्धक्रियां प्रति, करणस्य च व्यापारवत्त्वनियमात् कर्मत्वप्रयोजकत्वेनोपस्थितस्य फलस्यैव व्यापारत्वं कल्प्यते । गोपदोत्तरद्वितीयाया आश्रयोऽर्थः । तथा च विप्रस्याभेदेनोद्देश्ये, तस्य स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धेन दाधार्थेच्छायामन्वयः । गोपदार्थस्य द्वितीयार्थाश्रयेऽभेदेन, तस्याधेयतासम्बन्धेन स्वस्वत्वध्वंससमानाधिकरणपरस्वत्वरूपफले, तस्य विषयितारूपानुकूलत्वसम्बन्धेनेच्छायामन्वयः । एवञ्च विप्रोद्देश्यिका गवाभिन्नाश्रयनिष्ठस्वस्वत्वध्वंससमानाधिकरणपरस्वत्वानुकूला राजाभिन्नाश्रयानिष्ठा वर्तमानकालावच्छिन्नेच्छा इति बोधः ।

क्रियाकर्मसम्बन्धजन्यं फलं नानाविधम् । तथाहि—'खण्डकोपाध्यायः शिष्याय चपेटां ददाती' इत्यत्र दुःखं फलम्, दाधातुश्चात्र संयोगविशेषानुकूलव्यापारार्थकः । खण्डकोपाध्यायः — क्रुद्धोपाध्याय इति कैयटः, बालोपाध्याय इत्यन्ये, एवञ्च 'चपेटासंयोगजन्यदुःखाश्रयः शिष्यो भवतु इतीच्छया दुःखरूपफलाश्रयत्वेन शिष्यस्य सम्प्रदानत्वम् । 'रजकाय वस्त्रं ददाति, इत्यत्र दाधातोरधीनीकरणमर्थः । अधीनीकरणञ्चात्र तावत्कालं मलनाशानुकूलं स्थापनम् । 'वस्त्रनिष्ठमलनाशरूपफलसम्बन्धेन भृतिमान् रजको भवतु, इतीच्छया भृतिरूपफलाश्रयत्वेनै सम्प्रदानत्वं रजकस्येति प्रघट्टकार्थः ।

नैयायिकास्तु—परस्वत्वेच्छाधीनस्वस्वत्वध्वंसेच्छा त्याग इति मते स्वस्वत्वध्वंसावच्छिन्नत्यागो दाधात्वर्थः । विशेष्यत्वं चतुर्थ्यर्थः तस्य

बोधो, मैत्रोद्देश्यकं वार्ताकर्मकं कथनमिति च । अकर्मकक्रियोद्देश्यत्वं सम्प्रदानत्वमिति लक्षणान्तरम् । यथा पत्ये शेते इत्यादि । पत्युद्देश्यकं नायिकाकर्तृकं शयनमिति बोधः ।

ननु दानादीनां तदर्थत्वात्तादर्थ्ये चतुर्थ्यैव सिद्धौ किं "कर्मणा यम–" इति सम्प्रदानसंज्ञया, "चतुर्थीसम्प्रदाने" इति सूत्रं तु "रुच्यर्थानाम्" इति विषये चतुर्थ्यर्थमिति चेत्, न । दानकर्मणो गवादेर्ब्राह्मणार्थत्वेऽपि दानक्रियायाः परलोकार्थत्वात् । अत एव तादर्थ्यचतुर्थ्या दानकर्मणो गवादेः सम्प्रदानार्थत्वेऽपि दानक्रियायास्तदर्थत्वाभावेन

---

स्वनिरूपकनिरुक्तेच्छाजन्यत्वसम्बन्धेन दाधात्वर्थत्यागे, गोरूपकर्मणस्त्वाधेयतया स्वस्वत्वध्वंसरूपफले । तथा च गोवृत्तिस्वस्वत्वध्वंसजनको निरुक्तसम्बन्धेन विप्रनिष्ठविशेष्यताविशिष्टो यस्त्यागस्तदाश्रयश्चैत्र इति 'विप्राय गां ददाति चैत्रः' इति वाक्याद् बोध इत्याहुः ।

ननूक्तसम्प्रदानलक्षणस्य कर्मघटकतयाऽकर्मकधातुयोगे 'पत्ये शेते' इत्यादौ सम्प्रदानसंज्ञा न स्यादिति लक्षणान्तरमाह–**अकर्मकेति** । 'क्रियया यमभिप्रैति स सम्प्रदानमि'ति वार्तिकानुरोधेनेदं लक्षणम् । क्रियाया अपि प्रारम्भादिक्रियानिरूपितं कृत्रिमकर्मत्वमप्युपपाद्यम् 'क्रियाग्रहणं कर्त्तव्यम्, इति वार्तिकप्रत्याख्याने तु "कर्मणा यमभिप्रैति" इति सूत्रेणैव 'पत्ये शेते' इत्यादौ चतुर्थी सिद्ध्यति । प्रारम्भक्रियाकर्मभूतं पतिसम्प्रदानकं पत्नीकर्त्तृकं शयनमिति बोधः । एवं रीत्या गत्यर्थकर्मण्यपि 'ग्रामायारभ्यते गमनमित्यर्थविवक्षायां चतुर्थीसिद्ध्या "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ" (पा. सू. २ । ३ । १२) इति सूत्रमपि प्रत्याख्यातम् । आरम्भक्रियाया भेदेनानवभासे द्वितीया, भेदेनावभासे चतुर्थीति व्यवस्थया न सङ्करः । अत एव 'सन्दर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियापि कृत्रिमं कर्म' इति सम्प्रदानसंज्ञासूत्रस्थं भाष्यमपि सङ्गच्छते । कटं करोतीत्यादौ तु आरम्भक्रियाया न भेदेनावभासः, कृधातुना अनभिधानादिति न तत्र चतुर्थीति कैयटे स्पष्टमिति भाष्यतत्त्वविदः । **परलोकार्थत्वादिति**– दानक्रियाया विप्रार्थत्वाभावेन तादर्थ्याभावात् तादर्थ्ये चतुर्थ्या अप्राप्तौ

चतुर्थ्यन्तार्थस्य दानक्रियायामन्वयानापत्त्या कारकत्वानापत्तिरिति हेला-राजः। उपकार्योपकारकत्वसम्बन्धस्तादर्थ्यार्थः। ब्राह्मणाय दधीत्यादौ ब्राह्मणोपकारकं दधीति बोधादिति दिक्।

तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वमपादान-त्वम्। तदेवावधित्वम्। विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव

---

सूत्रस्य सार्थक्यं स्पष्टमेव। **दानक्रियायामन्वयानापत्त्येति**। अयमाशयः दानक्रियायाः स्वर्गार्थत्वात् स्वर्गरूपोपकारस्य दानक्रियाकर्तृगामित्वात् तद्गतफलद्वारा तज्जनकत्वरूपतादर्थ्यस्य ब्राह्मणादिनिरूपितस्य दान-क्रियायामभावेन चतुर्थ्यन्तार्थस्य तत्रान्वयानापत्तिरित्यर्थः। 'तदिच्छा-धीनेच्छाविषयव्यापाराश्रयत्वं तादर्थ्यम्, नतु तादृशेच्छाविषयत्वमात्रम्। 'यूपाय दारु' इत्यादौ स्वेच्छा-यूपविषयिणी इच्छा, तदिच्छाधीना या व्यापारविषयिणीच्छा, तादृशेच्छाविषयो यस्तक्षणादिव्यापारस्तदाश्रयत्वं दारुण इति समन्वयः। अत एव 'यागाय याति' इत्यादौ चतुर्थीसिद्धये "तुमर्थाच्च भाववचनात्" 'पा. २।३।१५' इति सूत्रं चरितार्थम्। अत एव 'स्वर्गाय पुण्यम्" इत्यादयो न प्रयोगाः "इति वदतां गदाधरभट्टा-चार्याणां मतेऽपि तादृशेच्छाविषयव्यापाराश्रयत्वरूपतादर्थ्यस्य पुण्यादाविव दानादिक्रियायामभावात् चतुर्थ्यन्तार्थस्य क्रियान्वयानापत्तिर्ध्रुवैव। मतद्वयेऽपि मुक्तये हरिं भजतीत्यादौ चतुर्थी 'क्रियाग्रहणं कर्त्तव्यम्" इति वार्तिकादेव साध्या। तादर्थ्यरूपाविभक्त्यर्थस्य दानादावनन्वये गवादावन्वये च "ब्राह्मणाय गोदानम्' इत्यादौ सापेक्षत्वात् समासाना-पत्तिः। कारकविभक्त्यर्थसाकाङ्क्षस्यैव तादर्थ्यसापेक्षस्यापि समासाङ्गीकारे ब्राह्मणाय कम्बलरोमाणीत्यादेरप्यापत्तिरिति भावः। **कारकत्वानापत्ति-रिति**। क्रियान्वयित्वं कारकत्वमिति व्युत्पत्तेरिति भावः।

इति चतुर्थीकारकविचारः।

## अथ पञ्चमीकारकविचारः

**तत्तत्कर्तृसमवेतेति**। 'चैत्रो ग्रामादायाति' इत्यत्र कर्त्ता-चैत्रः

एव, किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिपरिकल्पितोऽपि । माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिपरिकल्पितापायाश्रयणेनैव भाष्ये पञ्चमीसाधनात् ।

अत एव चैत्रान्मैत्रः सुन्दर इत्यादिर्लोके प्रयोगः। वृक्षं त्यजति खगः इत्यादावपादानत्ववारणाय प्रकृतधात्ववाच्येति । परस्परस्मान्मेषावपसरत इत्यत्रापादानत्वाय तत्तत्कार्त्रीति । तत्तत्पशुविशेषनिष्ठव्यापारजन्यविभागाश्रयस्तत्तत्पशुविशेषः । किं च मेषपदवाच्ययोः पशुविशेषयोः क्रियाश्रयत्वविवक्षा, परस्परपदवाच्ययोस्तयोस्तु विभागाश्रयत्वविवक्षेत्यौपाधिकस्तयोर्भेदः । शब्दस्वरूपोपाधिकृतभेदोऽप्यर्थे गृह्यते । यथाऽऽत्मानमात्मना वेत्तीत्यादौ शरीरावच्छिन्नं कर्तृ, अन्तःकरणावच्छिन्नं करणं, निरवच्छिन्नं निरीहं कर्म । एकस्यैव शब्दभेदाद्भेदः । शब्दालिङ्गितस्यैव सर्वत्र भानात् । तदाह—

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इति

---

तत्र समवायसम्बन्धेन वर्तमाना क्रिया उत्तरदेशसंयोगानुकूला पादप्रक्षेपादिक्रिया, तज्जन्यः प्रकृतधातु 'गमधातु' निष्ठशक्तिनिरूपकार्थत्वाभाववान् च यो विभागः तदाश्रयत्वं ग्रामस्येति लक्षणसमन्वयः विभागस्य गमधातुवाच्यत्वाभावात् प्रकृतधात्ववाच्यत्वं सुतरां सिद्धमिति भावः । तदेव—अपादानत्वम् । वास्तव—सम्बन्धपूर्वकः—वास्तवसम्बन्धासमवायिकारणकः पूर्वशब्दस्याऽसमवायिकारणार्थकत्वेन न्यायशास्त्रे व्यपदेशात् **माथुरा इति**। न ह्यत्र माथुराणां पाटलिपुत्रकाणां च वास्तवसंयोगपूर्वको विभागः परन्तु बुद्ध्या संयोगं परिकल्प्य बुद्ध्यैव विभागोऽपि सम्पादित इति । अतएव भाष्ये 'य एष मनुष्यः प्रेक्षापूर्वकारी भवति, दुःखोऽधर्मो नानेन कृत्यमस्तीति स बुद्ध्या सम्प्राप्य निवर्तते, इति अधर्माद् जुगुप्सते, बीभत्सते इत्यादौ 'ध्रुवमपायेऽपादानम्' इत्यनेनैव पञ्चमीं[१] संसाध्य "जुगुप्साविरामे'ति वार्तिकं प्रत्याख्यातमिति । अतएव–अपादानस्य बुद्धिपरिकल्पितत्वादेव । **प्रकृतधात्ववाच्येति** । तथा चात्र विभागस्य

ननु ह्येतदौपाधिकभेदमादायैवात्रापादानत्वे सिद्धे किं तत्तत्कर्तृसमवेतेत्यनेनेति चेत्, न। पर्वतात्पततोऽश्वात् पतत्यश्ववाह इत्यादावश्वस्यापादानत्वाय तत्स्वीकारात्।

ननु वृक्षात्पर्णं पततीत्यादौ तादृशफलाश्रयत्वात्पर्णस्याप्यपादानत्वं विभागस्य द्विष्ठत्वादिति चेत्, न। परया कर्तृसंज्ञया बाधात्। अतएव "अपादानमुत्तराणि कारकाणि बाधन्ते" इति भाष्यं सङ्गच्छते। यत्तु केचिद्—गत्यनाविष्टत्वे सति तज्जन्यविभागाश्रयत्वमपादानत्वमिति।

---

धातुवाच्यत्वात् फलतावच्छेदकसम्बन्धेन विभागाश्रयत्वात् वृक्षस्य कर्मत्वं सिद्धमन्यथा पञ्चमी आपद्येतेति भावः।

ननु मेषपदवाच्ययोः पशुविशेषयोः परस्परपदवाच्ययोश्च तयोरभिन्नत्वेन मेषपदवाच्ययोः क्रियाश्रयत्वेन परस्परपदवाच्ययोरपि क्रियाश्रयत्वात्कर्त्तृत्वापत्तौ अपादानत्वानापत्तिरित्यत आह—**किञ्चेति**। उपाधिमेव प्रदर्शयति—**शब्देति**। शब्दालिङ्गितस्यैवेति—शब्दकलितस्यैवेत्यर्थः। अत्र हरिवाक्यं प्रमाणयति—**न सोऽस्तीति**। प्रत्ययः निर्विकल्पकातिरिक्तो बोधः, तत्र शब्दस्य भाने निर्विकल्पकत्वासिद्धेः। न तु शब्दजन्यबोध एव। शब्दानुगमात्—शब्दनिरूपितविषयितारूपसम्बन्धादृते भवेत्, स प्रत्ययो लोके नास्तीत्यर्थः। सर्वं ज्ञानं तादात्म्यसम्बन्धेन शब्देन अनुविद्धम्—विशिष्टम्। अर्थात् शब्दोऽपि शाब्दबोधे भासते इत्यर्थः। ज्ञाने शब्दनिरूपितं तादात्म्यमारोपितमेवेति बोधयितुमिवशब्दप्रयोगः। अत्र-परस्परान्मेषावपसरत इत्यादावित्यर्थः। **पर्वतादिति**। पर्वतावधिकपतने अश्वस्य कर्त्तृत्वम्, अश्वावधिकपतने तु अश्ववाहस्येति। एवञ्च अश्वसमवेतक्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वेन पर्वतस्य, अश्ववाहसमवेतक्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वेन अश्वस्य चापादानत्वमिति बोध्यम्। **तादृशफलेति**। पर्णसमवेतक्रियाजन्यप्रकृतधात्ववाच्यफलाश्रयत्वं यथा वृक्षस्य तथा पर्णस्यापि सत्त्वादपादानत्वापत्तिरिति भावः। **गत्यनाविष्टत्वे सतीति**। विभागजनकक्रियानाश्रयत्वे सतीत्यर्थः।

तन्न। तत्तद्वाक्ये मेषाश्वयोरपादानत्वानापत्तेः। यदपि अपसरत इति सृधातुना गतिद्वयस्याप्युपादानादेकानिष्ठां गतिं प्रतीतरस्यापादानत्वमविरुद्धमिति। तन्न। क्रियाया एकत्वात्। अत एव "न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वात्" इति भाष्यं सङ्गच्छते।

---

अत्र किन्तावत् क्रियानाश्रयत्वम्? न तावत् क्रियाश्रयनिष्ठभेदप्रतियोगित्वं। पर्णं पततीत्यादौ पर्णे द्वित्वावच्छिन्नप्रतियोगिताकभेदसत्त्वात् 'स्वस्मात् पततीति' प्रयोगापत्तेः। नापि प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकभेदो ग्राह्यः, पर्णे द्रव्यत्वावच्छिन्नप्रतियोगिताभेदाभावात् द्रव्यात् पर्णं पततीति प्रयोगानापत्तेः। पर्णस्यापि द्रव्यत्वात्, इति चेदत्रोच्यते—प्रकृत्यर्थतावच्छेदकाश्रययत्किञ्चिद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदो गृह्यते। एवञ्च प्रकृत्यर्थतावच्छेदकाश्रययत्किञ्चिद्व्यक्तित्वावच्छिन्नप्रतियोगिताकक्रियावन्निष्ठभेदप्रतियोगित्वं क्रियानाश्रयत्वम्। **तज्जन्येति**। विभागजनकक्रियाजन्येत्यर्थः। तत्तद्वाक्ये- 'परस्परान्मेषावपसरतः' 'पर्वतात् पततोऽश्वात् पतती' त्यादिवाक्ये। भूषणकारमतं खण्डयितुमनुवदति—**यदपीति**। अयमाशयः–तत्तन्मेषवृत्तिक्रियायाः व्यक्तेः तद्व्यक्तित्वेन भिन्नतया उभयोस्तत्क्रियानाश्रयत्वेनापादानत्वम्। तद्विश्लेषजनकक्रियात्वावच्छिन्नप्रतियोगिताकाभावस्यासत्त्वेऽपि तद्विश्लेषजनकक्रियानिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावस्य 'तत्क्रिया नास्ति, इत्याकारकस्य तत्तन्मेषे सत्त्वान्न कश्चन दोषलेशः। खण्डयति–**तन्नेति**। **क्रियाया एकत्वादिति**। अयमाशयः–आश्रयभेदेन क्रियाभेदसत्त्वे तन्निष्ठव्यापारयोर्भेदेऽपि सृधातुना निवृत्तभेदस्यैवापायस्योपादानात् क्रियाया एकत्वेन उभयोरपि तत्क्रियाश्रयत्वेन परत्वात् कर्तृत्वापत्तिः।

अत्र सरूपसूत्रस्थं भाष्यं प्रमाणयति—**अत एवेति**। धातुना निवृत्तभेदस्योपादानादेवेत्यर्थः।

इति पञ्चमीकारकविचारः।

पञ्चम्यर्थोऽवधिः । वृक्षावधिकं पर्णकर्त्तृकं पतनमिति बोधः । पर्वतावधिकपतनाश्रयाभिन्नाश्वावधिकमश्ववाहकर्त्तृकं पतनमिति बोधः । परस्परमेषावाधिकं द्वित्वावच्छिन्नमेषकर्त्तृकमपसरणमिति बोध इति दिक् ।

कर्तृकर्मद्वारकफलव्यापाराधारत्वमधिकरणत्वम् । यथा स्थाल्यामोदनं गृहे पचतीत्यादौ कर्मद्वारकविक्लित्तिरूपफलाधारः स्थाली, कर्त्तृद्वारकव्यापाराधारो गृहमिति । ननु साक्षात्क्रियाधारयोरोदनचैत्रयोरधिकरणत्वलब्धौ परम्परया तदाधारयोर्गृहस्थाल्योस्तत्संज्ञा त्वयुक्तेति चेत्, न परत्वात्कर्तृकर्मसंज्ञाभ्यां साक्षादाधारीभूते बाधात् । स्थाल्यधिकरणिका या ओदननिष्ठा विक्लित्तिस्तदनुकूलो गृहाधिकरणको मैत्रकर्त्तृको व्यापार इति बोधः ।

---

## अथ सप्तमीकारकविचारः ॥

**कर्त्तृकर्मद्वारेति** । अयं भावः—"आधारोऽधिकरणम्" इति सूत्रे 'कारके' (पा. सू. १ । ४ । २३) इत्यधिकारात क्रियाजनके एतत्प्रवृत्त्योपस्थितत्वादाधारः क्रियाया एव । तत्रेप्सिततम—स्वतंत्रपदाभ्यां साक्षात् स्वाश्रयत्वसम्बन्धेन क्रियाधारयोः कर्मकर्त्तृसंज्ञाभ्यां बाधात् स्वाश्रयाश्रयत्वसम्बन्धेन क्रियाश्रयस्याधिकरणत्वं सिद्धम् । तथा चोक्तं वाक्यपदीयेऽपि "कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम् । उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्" इति । अत एव 'अक्षशौण्डः' इत्यादौ-समासः, अन्यथाऽनन्वयरूपासामर्थ्यात् समासो न सिद्ध्येदिति भावः ।

ननु कालस्य साक्षात् क्रियाधारत्वेन 'समये तण्डुलान् पचति चैत्रः' इति न स्यादिति चेन्न, अत्र सूत्रे स्वरितत्वप्रतिज्ञया कालस्यापि परम्परया क्रियाश्रयत्वविवक्षायामेवाधिकरणत्वात् । साक्षादाधारत्वविवक्षायां 'समयः पचति' इत्येवेष्टम् 'भूतानि कालः पचति, इतिवत् । अयमत्र विवेकः—कैयटादिमते अधिकरणकारकस्य स्ववृत्तिवृत्तित्वसम्बन्धेन साक्षात् क्रियायामन्वयः । नव्यमते—अधिकरणकारकस्य साक्षात् कर्त्तृकर्मणोरेवान्वयः, तद्द्वारा क्रियायामन्वयः नतु साक्षात् क्रियायामिति विशेषः । एवञ्च प्राचीनमते 'अक्षेषु शौण्डः, इत्यत्र अक्षपदार्थस्य शौण्डेऽन्वयाभावात्

तच्चाधिकरणं त्रिधा। अभिव्यापकमौपश्लेषिकं वैषयिकं चेति । तत्र सकलावयवव्याप्तौ व्यापकाधारत्वम्, यथा तिलेषु तैलमस्तीत्यादि । उप समीपे श्लेषः सम्बन्ध उपश्लेषस्तत्कृतमौपश्लेषिकम्। अत एव "इको यणचि" इत्यादावौपश्लेषिकाधारे सप्तम्युक्ता "संहितायाम्" इति सूत्रे भाष्ये। तत्राजादिसामीप्यमेवेगादीनाम। "यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणम् मासिकं धान्यम्" इत्युक्तम् "तत्र च दीयते" इति सूत्रे भाष्ये।

यत्तु कटे आस्ते इत्यौपश्लोषिकोदाहरणमुक्तं कैयटेन, तदयुक्तम्, उक्तभाष्यविरोधात्।

---

समासो न स्यादिति शौण्डपदस्य आसक्तशौण्डे लक्षणां कृत्वा आसक्तिक्रियारूपे लक्ष्यार्थे शौण्डपदार्थैकदेशे साक्षादन्वयमादाय समास उपपाद्यः। नवीनमते तु अक्षस्य शौण्डरूपे कर्त्तरि अन्वयः, शौण्डस्य चास्त्यादिक्रियायामन्वयः इति न दोषः। **सकलावयवव्याप्ताविति**। सर्वावयवावच्छेदेनाधेयसम्बन्धाश्रय इत्यर्थः। एवञ्च 'अवच्छेदकत्वसम्बन्धावच्छिन्नाधेयत्वनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकताशालित्वम् अभिव्यापकत्वम्' अवच्छेदकता यादवयवनिष्ठा ग्राह्या, यथा 'तिलेषु तैलम्' इत्यत्र यावदवयवावच्छेदेन—तिले तैलस्य सत्त्वात्। तैलनिष्ठाऽऽधेयता अवच्छेदकतासम्बन्धेन यावदवयवेषु, तत्रैव समवायसम्बन्धेन तिलस्यापि सत्ता, अवयवावयविनोः समवायनियमात्। तिलः समवायसम्बन्धावच्छिन्न व्यापकताशालीत्यभिव्यापकत्वं तस्मिन्।

**तत्राजादिसामीप्यमेवेगादीनामिति** । "इको यणचि" इत्यादौ इङ्निरूपितकालिकसामीप्यावच्छेदेन संयोगस्यापि सत्त्वात् औपश्लेषिकाधिकरणत्वम्। शब्दस्य गुणत्वपक्षे तु श्लेषपदेन सम्बन्धमात्रस्य ग्रहणात् 'स्वाव्यवहितोत्तरत्वसम्बन्धेनौपश्लेषिकाधिकरणत्वं बोध्यम्। **उक्तभाष्यविरोधादिति**। "यन्मासेऽतिक्रान्ते" इति भाष्येण समीपत्वस्य सप्तम्यर्थत्वप्रतीत्या 'कटे आस्ते' इत्यत्र तस्याभावान्नौपश्लेषिकोदाहरणमिति भावः। केचित्तु एकदेशावच्छेदेन श्लेषेऽप्यौपश्लेषिकम्।

एतद्द्वयातिरिक्तं वैषयिकमधिकरणम्। कटे आस्ते, जले सन्ति मत्स्या इत्यादि। अभिव्यापकातिरिक्तं गौणमधिकरणमिति बोध्यम्। सप्तम्यर्थोऽधिकरणमिति दिक्।

ज्ञापकक्रियाश्रयवाचकादुत्पन्नायाः सत्सप्तम्यास्तु क्रियान्तरज्ञापकत्वमर्थः। तत्रानिर्णीतकालिकायाः क्रियाया निर्णीतकालिका ज्ञापिका। गोषु दुह्यमानासु गत इत्यादौ गोनिष्ठदोहनक्रियाज्ञापितगमनाश्रयश्चैत्र इति बोधः।

---

तत्र श्लेषस्य समीपमुपश्लेषम् आरोपितश्लेष इत्यर्थः। तत आगतमौपश्लेषिकम्। एकदेशावच्छेदेन सम्बन्धस्यावयविनि आरोपः। यथा 'कटे शेते' इत्यत्रावयववृत्तिसंयोगस्य अवयविनि कटे आरोपः। तत्कृतं कटात्मकमौपश्लेषिकमधिकरणम्। "स्वरितेनाधिकारः" इति सूत्रभाष्यस्वरसात्। तथा च शब्देन्दुशेखरीयं (यद्वे) त्यनेन औपश्लेषिकाधारे सप्तमीसमर्थनमप्युपपद्यते इति वर्णयन्ति।

नव्यनैयायिकास्तु—अवच्छेद्यताविशेषोऽपि सप्तम्यर्थः, तेन मूले वृक्षः कपिसंयोगी 'वृक्षवाटिकायां शब्दः' इत्यादौ सप्तमी सिद्ध्यति। अत्र क्रियान्वयित्वरूपकारकत्वसम्पादनाय 'अस्ति' 'भवती' त्यध्याहार्यम्। अथवा 'सप्तम्यधिकरणे च' इत्यत्र चकारेण सप्तमीति वदन्ति तन्न, वृक्षाधिकरणककपिसंयोगकर्तृका सत्ता, वृक्षवाटिकाधिकरणकशब्दकर्तृका—सत्तेत्यादिबोधेऽन्यत्रावयवे कपिसंयोगविशिष्टवृक्षाभावप्रतीतो असप्तम्यर्थत्वेऽपि अवच्छेद्यत्वस्य फलतः सिद्धेः। चकारेण सप्तमीविधानमपि न मनोरमम् क्रियाध्याहारेण तत्सिद्धे चकारेण विधानस्यागतिकगतिकत्वात्। 'सर्वं वाक्यं क्रियया परिसमाप्यत' इति सिद्धान्तात्। नन्वेवं 'शिरसि वेदना इत्यादौ संयोगसमवायादिरूपसंबन्धस्याधारतानियामकस्याभावात् कथं सप्तमी ? इति चेन्न, अवच्छेदकतासंबन्धस्याप्याधारतानियामकत्वात्। **एतद्द्वयातिरिक्तमिति।** औपश्लेषिकाभिव्यापकभिन्नमित्यर्थः। अत एव तत्र तत्र 'घटकत्वं सप्तम्यर्थः' इत्यादि संगच्छते। **वैषयिकमिति।** विषयात् — विषयत्वसम्बन्धात् आगतं वैषयिकम्। सत्सप्तम्याः—

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिःसम्बन्धःषष्ठ्या वाच्यः । तत्र राज्ञः पुरुष इत्यादौ षष्ठीवाच्यसम्बन्धस्याश्रयाश्रयिभावसम्बन्धेन पुरुषेऽन्वयः । राजनिरूपितसम्बन्धवान् पुरुष इति बोधात् । ननु

---

"यस्य च भावेन भावलक्षणम्" इति विहितसप्तम्या इत्यर्थः । **क्रियान्तरज्ञापकत्वमर्थ इति** । अयम्भावः—'ब्राह्मणेषु अधीयानेषु गतः, गोषु दुह्यमानासु गतः, अत्र "यस्य च भावेन भावलक्षणम्" इति सप्तमी । यस्य भावेन क्रियया क्रियान्तरं लक्ष्यते-ज्ञायते ततस्तद्वाचकात् सप्तमीति सूत्रार्थः । ब्राह्मणाधीयानादिपदयोरुभयोरपि क्रियाश्रयवाचकत्वादुभाभ्यामपि सप्तमी ।

निर्ज्ञातदेशकाला क्रिया अनिर्ज्ञातदेशकालायाः क्रियाया देशकालज्ञापनद्वारा लक्षणम् । इत्थं च निर्ज्ञातदेशादिकालक्रियाश्रयकर्तृकर्मवाचकज्ञाप्यज्ञापकभावसंबन्धार्थिका षष्ठ्यपवादिकेयं सप्तमी भवति । इति सप्तमीकारकविचारः । **सम्बन्धः षष्ठ्या वाच्य इति** । अत्रायं विवेकः—शेषषष्ठ्याः क्वचित् सम्बन्धसामान्यरूपेण सम्बन्धवाचकता । यथा 'मातुः स्मरति, इत्यादौ । क्वचिद् विशेषरूपेण स्वत्वत्वादिना यथा 'राज्ञः पुरुष' इत्यादौ । सर्वत्र सम्बन्धसामान्येनैव बोधकत्वे तु चैत्रेण रक्षिते मैत्रीयहस्त्यादौ 'नेदं चैत्रस्य धनम्' इति प्रयोगो न सङ्गच्छेत ।

अन्यथा चैत्रसम्बन्धस्यापि तत्र हस्त्यादौ सत्त्वेन निषेधानुपपत्तिः । स्वत्वत्वेन स्वत्वस्य भाने तु चैत्रीयस्य पाल्यपालकभावसम्बन्धस्य सत्त्वेऽपि तदीयस्वत्वस्याभावान्निषेधोपपत्तिः । सम्बन्धश्च सर्वोऽपि क्रियाकारकभावमूलक एव । तदुक्तम् हरिणा—

सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।
श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते ॥

'राज्ञः पुरुषः इत्यत्र स्वस्वामिभावसम्बन्धः क्रियाकारकभावपूर्वकः । यतो राजा पुरुषाय द्रव्यं ददाति; ततोऽसौ पुरुषस्य स्वामी भवति इति भाष्यादौ स्पष्टम् । क्रिया हि सिद्धस्वभावानां द्रव्याणां क्रियां विना परस्परसंबन्धमभजतां निःश्रयाणीव संबन्धं करोतीति स्पष्टं भाष्यकैयटादौ ।

सम्बन्धस्योभयनिष्ठत्वात् पुरुषशब्दादपि षष्ठ्युत्पत्तिरस्त्विति चेत् न । राजसम्बन्धिपुरुष इति विवक्षायां राजशब्दादेव षष्ठी, प्रकृत्यर्थप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्, इति व्युत्पत्त्यनुरोधात् । अन्यथा तद्विवक्षायां राजा पुरुषस्येति पुरुषशब्दात् षष्ठ्यां पुरुषार्थं प्रति षष्ठ्यर्थस्य विशेषणत्वापत्त्या व्युत्पत्तिभङ्गापत्तेः । अत एवाह—

भेद्यभेदकयोश्चैकसम्बन्धोऽन्योन्यमिष्यते ।
द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥

इति । भेदकः सम्बन्धनिरूपको, भेद्यः सम्बन्धाश्रयः ।

इति षट् कारकाणि ।

---

मातुः स्मरतीत्यादौ क्रिया श्रुता । राज्ञः पुरुष इत्यादौ त्वश्रुता दानादिक्रिया अनुमीयते । **पुरुषशब्दापीति** । इदमत्राकूतम् — भेदे सति विशेषणतया विवक्षितस्य सम्बन्धं विना विशेषणत्वासम्भवेन तदाकाङ्क्षितत्वात्तत्र सम्बन्धो व्यतिरिच्यते उद्भूततया प्रतीयते इति तत्रैव षष्ठी । विशेष्ये तु पदान्तरासमभिव्याहारे स्वार्थनिरूपितविशेष्यत्वेन भासमानत्वरूपस्वनिष्ठत्वादेव न विशेष्यतानियामकसम्बन्धाकाङ्क्षा । तत्र विशेषणेशब्देन षष्ठ्यादिनांशतः प्रतीयमानः प्रधानेऽप्युपयुज्यते तस्य द्विष्ठत्वस्वभाववत्त्वात्, राजादिनिरूपितविशेष्यताया राजादिपदसन्निधाने प्रतीयमानाया उपकारको भवतीत्यर्थः । राज्ञ इत्यादेस्तु पदान्तरसमभिव्याहारं विनाप्यध्याहृतसम्बन्धिसामान्यनिरूपितविशेषणत्वप्रतीतिरिति विशेषः । 'राज्ञ' इति हि स्वामित्वमवगम्यमानमन्यथानुपपत्त्या पुरुषे स्वत्वमवगमयति । अतः सम्बन्धस्य बहिरङ्गत्वात् पुरुषादन्तरङ्गा प्रथमैव । एवञ्च राजस्वामिकमिति ततो बोधः । अत एवाग्रे किं तदिति विशेषजिज्ञासा, पुरुषादिपदैश्च तन्निवृत्तिरिति, तदुक्तं हरिणा—

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते ॥ इति ।

अन्ये तु-प्रकृत्यर्थं प्रति प्रत्ययार्थस्य प्राधान्यानुरोधात् विशेषणवाचकपदादेव षष्ठी । तथा हि राजादिः सम्बन्धे विशेषणम्, सम्बन्धश्च पुरुषे,

## अथ नामार्थः

अत्र मीमांसकाः-शब्दानां जातौ शक्तिर्लाघवात् । व्यक्तीनामानन्त्येन तत्र शक्तौ गौरवात् ।

"नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायते" इति न्यायस्य विशेषणे शक्तिर्विशेष्ये लक्षणेति तात्पर्यात् ।

---

'राजसम्बन्धी पुरुषः' इति बोधात् । षष्ठ्यर्थसम्बन्धस्य संसर्गतयैव भानमिति भाष्यमतेऽपि प्रकारतायाः सांसर्गिकविषयताविशेष्यतोभय-निरूप्यतया प्रकारतानिरूपकविषयताशालित्वरूपप्राधान्यमक्षतमेव। नहीदं पुरुषादिशब्दात् षष्ठ्यां सत्यां निर्वहति। किञ्च विशेष्यपुरुषादौ कारक-प्रातिपदिकार्थान्यतरत्वस्यावश्यकत्वे वाऽशेषत्वान्न तद्वाचकत्वात् षष्ठी-त्याहुः। तद्विवक्षायाम्–राजसम्बन्धिपुरुषः इत्यर्थविवक्षायाम् ।

इति षष्ठ्यर्थविचारः। समाप्तोऽयं ज्योत्स्नायां कारकविचारः ।

**जातावीति**। अत्र जातिपदमुपलक्षणम्–तत्तत्प्रवृत्तिनिमित्तस्य, तेन आकाशत्वाभावत्वादीनां जातित्वाभावेऽपि न क्षतिः । यद्यपि जातेर्नामा-र्थत्वे "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" ( पा. सू. १।२-५९ ) इति सूत्रम् "सवर्णेऽण्ग्रहणमपरिभाष्यम्, आकृतिग्रहणात् सिद्धम्" इति वार्तिकम्, "आकृतिं वाजप्यायनः" इति सरूपसूत्रस्थं भाष्यञ्च मानमस्ति तथापि पराभिमतां युक्तिं प्रदर्शयति—**लाघवादिति** ।

ननु शक्तिग्राहकशिरोमणिवृद्धव्यवहारेण व्यक्तावेव शक्तिग्रहात् कथं जातौ शक्तिः सिद्ध्येदित्यत आह—**व्यक्तीनामिति** । वृद्धव्यव-हारेण प्रथमं व्यक्तौ शक्तिज्ञानेऽपि आनन्त्यात् तावतीषु शक्तिग्रहा-सम्भवात्तत्तदाश्रयभेदभिन्ननानाशक्तिकल्पने गौरवात् पश्चाज्जातावेव निर्द्धार्यत इत्यर्थः। एकव्यक्तिविषयकशक्तिज्ञानादपरव्यक्तिविषयकशाब्द-बोधाभ्युपगमे तु गोव्यक्तिविषयकशक्तिज्ञानादश्वविषयकबोधापत्त्या तद्-व्यक्तिविषयकशक्तिज्ञानस्य तद्व्यक्तिविषयकबोधे हेतुताया अवश्यकल्प्यत-

किञ्च एकस्यां व्यक्तौ शक्त्युपदेशे व्यक्त्यन्तरे तदभावेन तद्बोधाप्रसङ्गात् । गामानयेत्यादावन्वयानुपपत्त्या तदाश्रयलक्षकत्वेन निर्वाहश्चेत्याहुः ।

---

यैकविषयकज्ञानादपरव्यक्तिबोधानुदयापत्त्या सकलव्यक्तिभानार्थं तावद्व्यक्तिषु शक्तिकल्पनायां गौरवस्य स्फुटतया जातावेव शक्तिकल्पनोचिता । नच जातिशक्तिवादेऽपि गोत्वस्य शक्यत्वे तन्निष्ठशक्यतावच्छेदकं गोत्वत्वं वाच्यम् गोत्वत्वञ्च 'गवेतरासमवेतत्वे सति सकलगोसमवेतत्वरूपम्, एवञ्च तस्य व्यक्त्याद्यनेकपदार्थघटिततया अतिगौरवमिति वाच्यम्, तादात्म्येन गोत्वरूपाया जातेरेव शक्यतावच्छेदकत्वात्, शब्दार्थयोस्तादात्म्याङ्गीकारे शब्दगतजातेर्गोत्वस्याखण्डधर्मरूपत्वस्वीकारेण तस्यैवावच्छेदकत्वे गौरवाभावाच्च । किञ्च जातेः शक्यत्वे शक्तिनिरूपिकायाँ जातेरैक्येन शक्तेरेकत्वम् । उपजीव्यत्वादपि जातिरेव वाच्येति युक्तमित्याह—**नागृहीतविशेषणेति** । तथा च विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणत्वेनोपजीव्यत्वाद् विशेषणीभूतजातावेव शक्तिरुचिता, व्यक्तौ लक्षणेति तात्पर्यमिति भावः ।

ननु जातिशक्तिवादे व्यक्तिबोधाय लक्षणाया आवश्यकत्वेन व्यक्तिशक्तिवादे तदभावेन जातिशक्तिवाद एव गौरवमित्यत आह—**किञ्चेति** । यत्किञ्चिदेकव्यक्तिनिरूपितशक्तौ स्वीकृतायामपि व्यक्त्यन्तरस्य शाब्दबोधविषयतोपपत्तये व्यक्तिशक्तिवादेऽपि लक्षणाया अवश्यस्वीकर्त्तव्यत्वादिति भावः । नन्वेवमुभयत्रापि लक्षणास्वीकारसाम्येऽपि किमिति व्यक्तौ शक्तिर्न स्वीक्रियते ? इति चेन्न, जातिशक्तिवादे व्यक्तिबोधाय स्वाश्रयत्वरूपः शक्यसम्बन्धः, व्यक्तिशक्तिवादे व्यक्त्यन्तरबोधाय स्वसमवेताश्रयत्वरूपः शक्यसम्बन्धः, इति व्यक्तिशक्तिवादे लक्षणास्वरूपे गौरवात् व्यक्तौ शक्तेरस्वीकारात् । तदभावेन – शक्त्युपदेशाभावेन । तद्बोधाप्रसङ्गात्–व्यक्त्यन्तरबोधाप्रसङ्गात् । **निर्वाह इति** । लक्षणया व्यक्तिभाननिर्वाह इति व्यक्तौ शक्तिकल्पनं निष्फलमिति भावः ।

तन्न गोत्वमस्तीत्यर्थेऽन्वयानुपपत्त्यभावेन गौरस्तीति प्रयोगे व्यक्ति-भानानापत्तेः । व्यक्तीनामानन्त्येऽपि शक्यतावच्छेदकजातेरुपलक्षणत्वेन तदैक्येन च तादृशजात्युपलक्षितव्यक्तौ शक्तिस्वीकारेणानन्तशक्तिकल्पनाविरहेणागौरवात् ।

---

ननु सर्वत्रैव गोपदाज्जातिव्यक्त्युभयविषयकसर्वसम्मतबोधोपपत्तये युगपद्वृत्तिद्वयमङ्गीकार्यं, तच्च न युक्तम् युगपद्वृत्तिद्वयविरोधात्, इति चेन्न, 'गङ्गायां मीनघोषौ स्तः' इति वाक्यात् प्रवाहे मीनस्य तटे घोषस्य चान्वयबोधस्य सर्वसम्मतत्वेन युगपद्वृत्तिद्वयविरोधे मानाभावात् । शक्तिः तात्पर्याविषये लक्षणा च युगपन्नेत्येतत्तात्पर्यस्यैव तन्न्यायविषयत्वाच्च । प्रकृते तात्पर्यविषये एव लक्षणा इति न तन्न्यायविरोध इति मीमांसकाभिप्रायः । एतावत् पर्यन्तं मीमांसकमतमनूद्य खण्डयति—**तन्नेति** ।

**व्यक्तिभानानापत्तेरिति** । गौरस्तीति प्रयोगे जातिशक्तिवादिनां मते गोपदादुपस्थितस्य गोत्वस्यापि सत्तायामन्वयसम्भवेनान्वयानुपपत्तिरूपबीजाभावाल्लक्षणाया अभावेन व्यक्तिबोधानुपपत्तिरिति भावः । केचित्तु उपरितनं मतमनूद्य इति तु न युक्तम् । तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात् । अन्यथा 'गङ्गायां घोषः, इत्यत्र घोषपदस्य मीने लक्षणापत्तिः । तावताऽपि अन्वयानुपपत्तेः परिहारादित्याहुस्तन्न, 'आयुर्वैघृतम्' इति वेदवाक्यानुरोधेन अन्वयानुपपत्तेरपि लक्षणाबीजत्वात्, अन्यथा मीमांसकमते वेदस्यापौरुषेयत्वेन कर्त्तृत्वाभावात् तात्पर्यस्याप्यभावे तात्पर्यानुपपत्तिरूपबीजाभावात् लक्षणाया अभावात् ।

ननु व्यक्तीनामानन्त्यात् शक्त्यानन्त्यप्रसङ्ग इति शङ्कामपाकुर्वन्नाह—**व्यक्तीनामानन्त्येऽपीति** । अयं भावः धर्ममुपलक्षणीकृत्य शक्तिग्रहाद् वस्तुतस्तत्तद्धर्माकृतिविशिष्टा व्यक्तिर्बुद्ध्यते न तु तद्धर्मप्रकारेण । एतदेव जात्यादेरुपलक्षणत्वं यत्स्वाश्रयाणां सर्वेषां स्वरूपतः शक्तिग्रहविषयत्वं सम्पाद्य स्वयं शक्तिग्रहाविषयो बोधाविषयश्च । यथा काकवन्तो देवदत्तस्य गृहा इत्यत्र काकः स्वोपलक्षिततृणत्वादिना तद्गृहमितरेभ्यो व्यावर्तयति । तथा जातिर्व्यक्तीरुपस्थाप्य स्वोपलक्षिताभिर्व्य-

लक्ष्यतावच्छेदकतीरत्वादिवत् शक्यतावच्छेदकस्यावाच्यत्वे दोषाभावात्। "नागृहीत" इति न्यायस्य विशेषणविशिष्टविशेष्यबोधे तात्पर्येऽपि त्वदुक्ततात्पर्ये मानाभावात्। जातेरुपलक्षकत्वेन तदाश्रयसकलव्यक्तिबोधेन व्यक्त्यन्तरबोधाप्रसङ्गभङ्गाच्च। तदाह—

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो नच व्यभिचरिष्यति॥ इति॥

---

क्तिभिः शक्तिमितरेभ्यो व्यावर्तयति। एवञ्च शक्यव्यक्तीनामानन्त्येऽपि उपलक्षणीभूतघटत्वादिजातेरैक्याच्छक्तेरैक्यं कारणताया निरूपकाश्रयव्यक्तिबाहुल्येऽप्यवच्छेदकदण्डत्वादेरैक्यादैक्यवत्। शक्यतावच्छेदकभेदे एव शक्तेर्भेद इति नास्ति अनन्तशक्तिकल्पनगौरवमिति भावः।

ननु गोत्वादेः शक्यतावच्छेदकत्वे 'शक्यत्वे सति शक्यविशेषणस्यैव शक्यतावच्छेदकत्वानियमेन गोत्वादिकमपि शक्यं स्यादित्याशङ्कां निराकुर्वन्नाह—**लक्ष्यतावच्छेदकतीरत्वादिवदिति**। अयम्भावः दण्डत्वस्यान्यथासिद्धत्वेन घटं प्रति अकारणत्वेऽपि यथा कारणतावच्छेदकत्वमङ्गीक्रियते, यथा च तटत्वतटयोरेकविधशक्यसम्बन्धरूपाया लक्षणाया असम्भवेन तटत्वस्यालक्ष्यत्वेऽपि लक्ष्यतावच्छेदकत्वमङ्गीक्रियते, तथाऽत्रापि गोत्वादेरशक्यत्वेऽपि शक्यतावच्छेदकत्वे न किमपि बाधकं स्यादिति भावः।

ननु "नागृहीतविशेषणे"ति न्यायेन विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वेनोपजीव्यत्वात् जातेरेव वाच्यत्वमस्त्वित्यत आह—**नागृहीतेति**। **आनन्त्येऽपीति**। भावानाम्—व्यक्तीनामानन्त्येऽपि, एकम्—जातिरूपं धर्ममुपलक्षणं कृत्वा सुकरसम्बन्धः—सुकरशक्तिग्रहः शब्दः, नच व्यभिचरिष्यति—नासम्बद्धां व्यक्तिं बोधयिष्यति। तद्धर्मनिष्ठप्रकारतानिरूपकोपस्थितिं प्रति तद्धर्मावच्छिन्ननिरूपितशक्तिमच्छब्दज्ञानं कारणमिति कार्यकारणभावेन पदार्थोपस्थितिनिष्ठकार्यतानिरूपिता या तद्धर्मावच्छिन्ननिरूपितशक्तिमच्छब्दज्ञाननिष्ठा कारणता तन्निरूपिता या शक्त्यवच्छिन्ना शब्दनिष्ठा कारणतावच्छेदकता तस्या न व्यभिचरिष्यतीति निष्कर्षः।

युक्तं ह्येतत् ।

शक्तिग्रहं व्याकरणोपमान—

कोशाप्तवाक्याद्व्यवहारतश्च ।

वाक्यस्य शेषाद्विवृतेर्वदन्ति

सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इत्येतेषु शक्तिग्राहकशिरोमणिर्व्यवहारो व्यक्तावेव शक्तिं ग्राहयति ।

गवादिपदेन लोके व्यक्तेरेव बोधात् ॥

वस्तुतस्तु "न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थ" इति सरूपसूत्रभाष्याद्विशिष्टमेव वाच्यम्, तथैवानुभवात् । अनुभवसिद्धस्यापलापानर्हत्वाच्च ।

---

शक्तिग्राहकेति व्यवहारात् शक्तिग्रहप्रकारः शक्तिनिरूपणप्रकरणे प्रदर्शित इति तत एवावगन्तव्यः। व्यक्तिपक्षे "अणुदित्सवर्णस्य चाप्रत्ययः" इत्यत्र अण्ग्रहणम् । एकशेषारम्भश्च प्रमाणम् । तथाहि—जातिविशिष्टव्यक्तौ शक्तिस्वीकर्तृमते "तत्तज्जातिप्रकारकतदाश्रयविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्तज्जात्यवच्छिन्नविशेष्यताकशक्तिज्ञानस्य कारणत्वेन 'अ' इत्यादिपदेनैव अत्वजात्यवच्छिन्नसकलव्यक्तिभानसम्भवेन अण्ग्रहणस्य वैयर्थ्यापत्तिः स्पष्टैव । केवलजातिशक्तिवादेऽपि जातिशक्तिज्ञानस्यैव विशिष्टबोधे कारणतया, लक्षणया, अविनाभावेन वा व्यक्तिबोधसम्भवे अण्ग्रहणवैयर्थ्यं तदवस्थमेव। एवं जातिपक्षे एकेनैव शब्देन द्वयोर्बहूनां वा प्रत्यायनसम्भवात् एकशेषविधानमनर्थकं सद् व्यक्तिपक्षज्ञापकमिति भावः ।

वस्तुतस्तु एकशेषारम्भो व्यक्तेः पदार्थतायां मानं न तु केवलव्यक्तेः, जातिविशिष्टव्यक्तेः पदार्थत्वेपि तदारम्भस्यावश्यकत्वात् । अण्ग्रहणस्य भाष्यकृतप्रत्याख्यानात्, सरूपसूत्रस्य च शास्त्रीयप्रक्रियामात्रोपयोगित्वस्याकरे सिद्धान्तितत्वेन न तयोः प्रामाण्यम् इति व्यवहारमात्रमेव शरणं केवलव्यक्तिवादिनामिति तु तत्त्वम् । विशिष्टशक्तिवादस्य ज्यायस्त्वं सूचयति—वस्तुतस्त्विति। आकृतिः पदार्थः—पदवृत्तिवृत्तिज्ञानजन्यप्रतीतिविषयः, यस्य शब्दस्य, तस्य आकृतिवाचकशब्दस्य द्रव्यं नार्थ इति न किन्तु द्रव्यमप्यर्थः । विशिष्टम्—जातिविशिष्टं द्रव्यम्, द्रव्यविशिष्टा जातिर्वा ।

लिङ्गमपि नामार्थः । प्रत्ययानां द्योतकत्वात् । अन्यथा वागुपानदादिशब्देभ्य इयं तत्र वागिति स्त्रीत्वबोधानापत्तेः । अयमिति व्यवहारविषयत्वं पुंस्त्वम्, इयमिति व्यवहारविषयत्वं स्त्रीत्वम्, इदमिति व्यवहारविषयत्वं क्लीबत्वमिति विलक्षणं शास्त्रीयं स्त्रीपुन्नपुंसकत्वम् । अतएव खट्वादिशब्दवाच्यस्य स्तनकेशादिमत्त्वरूपलौकिकस्त्रीत्वाभावेऽपि तद्वाचकाट्टाबादिप्रत्ययः ।

---

यद्यपि "आकृतिपदार्थस्य द्रव्यं न पदार्थो, द्रव्यपदार्थकस्य चाकृतिर्न पदार्थ इत्युभयोरुभयं पदार्थः" इति भाष्याद् विशकलितयोरेवाकृतिव्यक्त्योः शक्तिग्रहविषयता लभ्यते तथापि 'कस्याचित् किञ्चिद् गुणभूतं किञ्चित् प्रधानम्' इत्युत्तरभाष्यपर्यालोचनया तत एव विशिष्टे शक्त्यवधारणात् तथोपादानमविरुद्धम् ।

**नामार्थ इति** । "स्वमोर्नपुंसकात्" "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यादिप्रामाण्येन 'वेधाः' 'वाग्' 'मधु' इत्यादौ प्रकृतिमात्रेण पुंस्त्वादेर्बोधेन च लिङ्गमपि प्रातिपदिकार्थ इति भावः । **स्तनकेशादिमत्त्वेति** । अयम्भावः—

"स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥

इत्यादिनोक्तस्यावयवसंस्थानविशेषरूपस्य लौकिकलिङ्गस्य खट्वादिषु अप्राणिषु अभावात् स्त्रीत्वप्रयुक्तं कार्यं न स्यादिति शास्त्रीयं लिङ्गमिह शास्त्रे गृह्यते । अत्र श्लोके—केशशब्दो भगवाची, लोमन्शब्दः शिश्नवाची, तेन भगवत्त्वं स्त्रीत्वं, शिश्नवत्त्वं पुंस्त्वं फलितम् । शास्त्रीयञ्च लिङ्गम्—सत्त्वरजस्तमसामुपचयः पुंस्त्वम्, अपचयः स्त्रीत्वम् समानावस्था नपुंसकत्वमिति । उपचयापचयावेव भाष्यकारेण प्रसवसंस्त्यानशब्दाभ्यामुक्तौ । प्रसवः आविर्भावः, संस्त्यानं तिरोभावः, इति च कैयटेन व्याख्यातम् । उपचयापचययोरपि अन्ततः सांख्यादिमते तद्रूपत्वात् । चितिशक्तिं विना सर्वेषां पदार्थानां परिणामित्वादाविर्भावतिरोभावधर्मकत्वं, मध्ये स्थितेरप्यवश्यम्भावात् स्थितिधर्मकत्वञ्चेति उपचयापचयस्थितयः पदार्थ-

संख्याऽपि नामार्थः । विभक्तीनां द्योतकत्वात् । अत एव "आदि-र्ञिटुडव" इति सूत्रे आदिरिति बहुत्वे एकवचनम् । वाच्यत्वेऽन्वयव्यति-रेकाभ्यां जसं विना नामार्थबहुत्वप्रतीत्यभावापत्तेः ।

---

मात्रधर्मा इति अप्राणिखट्वाघटादिसाधारणं गुणोपचयादिरूपं लिङ्गम् । यद्यपि अवस्थात्रयं प्राकृतपदार्थमात्रवृत्ति, तथापि कस्यचिच्छब्दस्य उपचयावस्थावैशिष्ट्येन बोधकत्वं, कस्यचिच्चापचयावस्थावैशिष्ट्येन, कस्यचित् स्थित्यवस्थावैशिष्ट्येन, कस्यचिदवस्थाद्वयवैशिष्ट्येन, कस्य-चित् अवस्थात्रयवैशिष्ट्येनेति लिङ्गानुशासनतो वृद्धव्यवहारतश्च निर्णीयते । दृश्यते च घटादिशब्देभ्यो गुणोपचयवैशिष्ट्येन प्रतीतिः । यष्ट्यादिशब्देभ्यश्च तदपचयवैशिष्ट्येन सा ।

ननु गुणोपचयादिरूपाणां पुंस्त्वादीनां निरवस्थे पुरुषेऽभावात् पुरुषः, चितिः, चैतन्यम्, इति प्रतीत्यनुपपत्तिरिति चेत् ? न, तस्य निर्धर्मकत्वेन पदवाच्यत्वासम्भवेन शाब्दप्रतीतिविषयत्वस्याप्यनङ्गीकारात् । अतएव किञ्चिद्धर्मिनिष्ठात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वोक्तिः स्त्रीत्वादीनां सङ्गच्छते । यदि तु किञ्चिद्धर्मारोपेण वाच्यत्वमुपपाद्य शाब्दप्रतीतिविषयत्व-मुपपाद्यते, तदा तु पुंस्त्वादेरपि आरोपेण पुरुष इत्यादिप्रतीरुपपद्यते इति प्रघट्टकार्थः । **नामार्थ इति** । अयम्भावः—वैयाकरणानां मते सङ्ख्याऽपि प्रकृतेरर्थः, एकवचनादिकं च एकत्वाद्यर्थे तात्पर्यग्राहकमेव । धातुप्रत्यय-प्रत्ययान्ताभिन्नार्थवच्छब्दस्वरूपत्वरूपप्रातिपदिकत्वस्यानुगतस्य शक्तता-वच्छेदकतया नानन्तशक्ततावच्छेदकत्वकल्पनं, नवा शक्त्यानन्त्यम् । नच अन्वयव्यतिरेकाभ्यां विभक्तीनामेव वाचकत्वमास्त्विति वाच्यम्, दधि, मधु इत्यादौ विभक्तेरभावेऽपि सङ्ख्याविषयकप्रतीतिसत्त्वेन व्यतिरेक-व्यभिचारात् ।

नचैवमपि एकप्रकृत्युपस्थाप्ययोरर्थयोः परस्परमन्वये आकाङ्क्षा-विरहात् घटादावेकत्वाद्यन्वयानुपपत्तिः । अन्यथा हर्यादिपदादुपस्थित-योरश्वसूर्ययोराधाराधेयभावेनान्वयापत्तिः घटादिपदस्य एकत्वादिविशिष्ट-घटादौ च न शक्तिसम्भवः, 'घटरूपं पश्य' इत्यादौ संख्यानवच्छिन्नघटा-

ज्योत्स्ना

देरेवान्वयबोधादिति वाच्यम्, आकाङ्क्षावैचित्र्यादेकप्रकृत्युपस्थाप्ययोरपि घटैकत्वयोः परस्परमन्वयसम्भवात्। अतएव खण्डशक्त्यैवकाराद्युपस्थाप्ययोरन्ययोगव्यवच्छेदाद्योः परस्परमन्वयबोधः। अधिकमन्यत्रावसेयमिति।

नैयायिकास्तु—अनन्तानां प्रकृत्यानुपूर्वीणां शक्ततावच्छेदकत्वापेक्षया अल्पतरविभक्त्याद्यानुपूर्वीणामेकत्वादिशक्ततावच्छेदकत्वस्यैवोचितत्वेन संख्यापि विभक्तेरेवार्थः। शक्तता च सुत्वौत्वजस्त्वादिना नतु स्वादितिब्रादिसाधारणैकवचनत्वादिना, एकवचनत्वादेर्दुर्वचत्वात्। प्रातिपदिकत्वस्य शक्ततावच्छेदकत्वं तु न युक्तम्, प्रातिपदिकत्वस्य दुर्निर्वचत्वात् तदज्ञानेऽपि एकत्वादिज्ञानस्यानुभविकत्वादित्याहुः। वस्तुतस्तु—न वा प्रकृतिः संख्यावाचिका, न वा विभक्तिः, प्रत्युत विभक्त्यन्तसमुदायः 'घटः' इति सङ्ख्यावच्छिन्नघटस्य वाचक इति राद्धान्तः। अत एव हरिणोक्तम्—

वाचिका द्योतिका वा स्युर्द्वित्वादीनां विभक्तयः।
यद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायकः॥

शक्ततावच्छेदकत्वं तु तत्तदानुपूर्वीणामिति न कश्चिद् दोषलेशः।

ननु सर्वमतेऽपि संख्याया गुणत्वेन गुणस्य अन्याश्रितत्वनियमात् प्रातिपदिकार्थेऽन्वयो वाच्यः। सच न समवायसम्बन्धेन वक्तुं शक्यते, तथा सति एकव्यक्तिमात्रबोधकादाकाशशब्दादपि द्विवचनबहुवचनाद्यापत्तेः। तत्तदर्थयोर्द्वित्वबहुत्वयोः समवायादिना आकाशाद्यन्वययोग्यत्वात्, समवायस्य एकत्वात्। नापि पर्याप्तिसंबन्धेनान्वयः, घटाकाशयोर्द्वित्वादेः पर्याप्तिसत्त्वे प्रत्येकमाकाशादौ तत्पर्याप्तिर्नास्तीति वक्तुमशक्यत्वात्, प्रत्येकस्योभयानतिरिक्तत्वादिति चेत्—अत्रोच्यते, उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव संसर्गतोपगमेन आकाशत्वादिव्याप्यताया द्वित्वादिपर्याप्तावसत्त्वेनातिप्रसङ्गविरहात्। यथा 'आकाशम्' इत्यत्र उद्देश्यतावच्छेदकम्—आकाशत्वं, तद्व्याप्या या पर्याप्तिः, तस्या एव सम्बन्धत्वस्वीकारात्। आकाशत्वव्याप्या च पर्याप्तिरेकत्वपर्याप्तिरेव। आकाशत्वाभाववति घटे द्वित्वपर्याप्तेः सत्त्वेन आकाशत्वव्याप्यत्वस्य द्वित्वपर्याप्तेरभावात्।

कारकमपि प्रातिपदिकार्थ इति पञ्चकं प्रातिपदिकार्थः । नन्वन्वय-व्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यमिति चेत्, न । दधि तिष्ठति दधि पश्येत्यादौ कर्त्रादिकारकप्रतीतेः प्रत्ययं विनापि सिद्धत्वात् । नच लुप्त-प्रत्ययस्मरणात्तत्प्रतीतिरिति वाच्यम् प्रत्ययलोपमजानतोऽपि नामत एव तत्प्रतीतेः ।

विशेषणतया शब्दोऽपि शाब्दबोधे भासते । युधिष्ठिर आसीदित्यादौ युधिष्ठिरशब्दवाच्यः कश्चिदासीदिति बोधात् ।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इत्यभियुक्तोक्तेः ।
ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥
विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते । इति वाक्यपदीयाच्च ।

---

**पञ्चकमिति ।**

"एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा ।
नामार्थ इति सर्वेऽपि पक्षाः शास्त्रे निरूपिताः"

इत्यनेन जातिव्यक्तिलिङ्गसङ्ख्याकारकाणां नामार्थत्वप्रतिपादनात् । प्रति-पादितं चैतत् विस्तरेण "अनभिहितसूत्रे भाष्ये । शब्दस्य शाब्दबोध-विषयत्वे विप्रतिपन्नान्नैयायिकादीन् प्रति शाब्दबोधविषयत्वं द्रढयितुमाह— **विशेषणतयेति । न सोऽस्ति प्रत्यय इति ।** इयं कारिकाऽस्मिन्नेव प्रकरणे व्याख्याता । **ग्राहकत्वमिति ।** ग्राह्यत्वम्—बोध्यत्वम्, ग्राह-कत्वम्—बोधकत्वम्, एते—ग्राह्यत्वग्राहकत्वे, 'पृथगवस्थिते' इत्युक्त्या तयोरसामनैयत्यं दर्शितम् । यथा दीपादौ तेजसि विषयसन्निधाने शक्ति-द्वयं लोके दृष्टम्, विषयासन्निधाने तु तस्मिन् ग्राह्यत्वमेव । तथा शब्दानामर्थाबाधे शक्तिद्वयम् । अर्थबाधसत्त्वे तु एकैवेति कारिकार्थः ।

विषयत्वम्—शब्दस्य शाब्दबोधविषयत्वम् । अनादृत्य—असम्पाद्य, शब्दैरर्थो न प्रकाश्यते—न बोध्यत इत्यर्थः । अयमत्र निष्कर्षः—तमसि चक्षुःसंयुक्तघटस्य प्रत्यक्षत्वं मा प्रसज्येतेति द्रव्यविषयकचाक्षुषप्रत्यक्षत्वा-

अत एव विष्णुमुच्चारयेत्यादावर्थोच्चारणासम्भवाच्छब्दप्रतीतिः। अत एवानुकरणेनानुकार्य्यस्वरूपप्रतीतिः। तथाहि—स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वमनुकरणत्वम्। स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वमनुकार्यत्वम्। तत्रानुकार्यादनुकरणं भिद्यते इति तयोर्भेदविवक्षायामनुकार्यस्वरूपप्रतिपादकत्वेनार्थवत्त्वात् प्रातिपदिकत्वात्स्वादिविधिः। भेदपक्षज्ञापकः "भुवो वुग्लुङ्लिटोः" इत्यादिनिर्देशः।

---

वच्छिन्नं प्रति आलोकसंयोगस्यापि कारणत्वं स्वीकार्यम्। एवं यथा दीपो घटपटादिपदार्थं प्रकाशयन् आत्मानपि प्रकाशयतीति ग्राह्यत्वग्राहकत्वे शक्ती तत्र स्तः, तथा अर्थविषयकशब्दनिष्ठशक्तिसहकृत एव शब्दोऽर्थस्य स्वस्य च प्रत्यायकः, यथा च घटाद्यभावे स एवालोकः स्वमात्रविषयकप्रत्यक्षजनकः तथाऽर्थे तात्पर्याभावे शब्दे च तात्पर्ये सति स एव शब्दः तद्वृत्त्यैव स्वमात्रबोधं जनयति।

दर्पणकारास्तु—ज्ञानत्वव्यापकविषयिताकत्वं न शब्दे साधयितुं शक्यते घटादिप्रत्यक्षाद्यव्यवहितप्राक्काले घटादिपदोपस्थितेरनैयत्येन तादृशप्रत्यक्षादेः घटपटादिविषयकत्वासम्भवादित्याहुः, तन्न पदपदार्थयोस्तादात्म्यमते पदोपस्थितेर्नैयत्यात्। नच तादात्म्ये "घटरूपोऽर्थो घटशब्दो न इति व्यवहारासङ्गतिः, भेदाभेदघटितस्यैव तादात्म्यस्य स्वीकारेण भेदस्योद्भूतत्वविवक्षायां तथा व्यवहारसम्भवात्। पदविषयकज्ञानजनकतायाः प्रमाणचतुष्टयेऽपि स्वीकारेण ज्ञानमात्रे तद्भानस्य निराकर्त्तुमशक्यत्वादिति गुरवः श्रीमदुपाध्यायपादाः। अत एव—शब्दस्यापि शाब्दबोधविषयत्वादेवेत्यर्थः। **स्वसदृशेति**। स्वम्–अनुकरणम्। एवमनुकार्यलक्षणे स्वपदेनानुकार्यं ग्राह्यम्। मात्रपदेनार्थस्य व्यावृत्तिः। सादृश्यञ्चात्र स्वपर्याप्तानुपूर्वीमत्त्वेन, अन्यथा एकदेशानुपूर्वीमादाय एकदेशे लक्षणस्यातिव्याप्तिः स्यात्। **शब्दत्वमिति** स्वसदृशशब्दप्रतिपाद्यत्वस्यार्थेऽपि सत्त्वात् तत्रातिव्याप्तिवारणाय शब्दत्वमिति। **भेदपक्षज्ञापक इति**। अयञ्च पक्षः "मतौ छः" (५। २। ५९)

अनुकार्यादनुकरणमभिन्नमित्यभेदविवक्षायां चार्थवत्त्वाभावान्न प्रातिपदिकत्वम्, नवा पदत्वम् ।

अभेदपक्षज्ञापकस्तु 'भू सत्तायाम्' इत्यादिनिर्देशः । प्रातिपदिकत्वपदत्वाभावेऽपि 'भू' इत्यादि साधु भवत्येव ॥

---

इति सूत्रे भाष्ये विस्तृतः । तथाहि 'अस्य वामीयम्' इत्यत्र छसिद्ध्यर्थम् अस्य वामशब्दस्यानुकरणत्वसमर्थनाय 'सिद्धं तु प्रातिपदिकविज्ञानात्' इत्युक्त्वा, "एवं योऽसावाम्नायेऽस्य वामशब्दः पठ्यते सोऽस्य पदार्थः । किम्पुनरन्ये आम्नायशब्दा अन्ये इमे ? ओमित्याह" इत्युक्तेरनुकार्यशब्दस्वरूपनिरूपितायाः शक्तेरनुकरणे सत्त्वात् वृत्त्यार्थविषयकबोधजनकत्वरूपार्थवत्त्वेन प्रातिपदिकत्वात् स्वादयो जायन्ते । तादृशार्थवत्त्वस्यैवार्थवत्सूत्रे स्वीकारात् । अत एव "भुवो वुग्लुङ्लिटोः" अत्र भुव इति निर्देशः संगच्छते, अन्यथा भुवो धातुत्वात् प्रातिपदिकत्वाभावे निर्देशासंगतिः स्पष्टैव ।

**अभेदपक्षज्ञापक इति** अयं पक्षः "ऋलृक्" सूत्रे भाष्ये स्पष्टः । तत्र हि — "प्रकृतिवदनुकरणं भवति, किम्प्रयोजनम् ? द्विः पचन्त्वित्याह "तिङतिङः" इति निघातो यथा स्यात् । 'अग्नी इत्याह' "ईदूदेद्द्विवचनं प्रगृह्यसंज्ञं भवति इति "प्रगृह्यसंज्ञा यथा स्यात्" । इति भाष्यात् अनुकरणमनुकार्यादभिन्नमिति च लभ्यते । अत्र पक्षे हि स्वशब्दशब्दमात्रार्थतात्पर्यकोच्चारणविषयरूपानुकरणं सादृश्यमूलाभेदविवक्षया स्वसादृश्येनानुकार्यस्वरूपार्थमुपस्थापयति इति वृत्त्याऽर्थोपस्थापकत्वरूपार्थवत्त्वाभावात् प्रातिपदिकत्वं न भवति इति स्वाद्यभावेऽपि शिष्टप्रयोगात् साधुत्वम् । अत एव 'भू सत्तायाम्' इत्यत्र विभक्तिरहितः 'भू' इति निर्देशः संगच्छते ।

ननु घटमानयेत्यादिवाक्यात् समवायेनाश्रयतयाऽऽकाशस्याप्युपस्थित्या आकाशविषयकशाब्दबोधवारणाय वृत्तिज्ञानजन्योपस्थितेः हेतुत्वेनाभेदपक्षेऽनुकार्यस्य बोधो न स्यादिति चेन्न, शाब्दबोधं प्रति निरूपकताऽऽश्रयताऽन्यतरसम्बन्धेन वृत्तिविशिष्टविषयकोपस्थितेरेव

ननु 'अपदं न प्रयुञ्जीत' इति भाष्यादसाध्विदमिति चेत्, न । अपदमित्यस्य हि अपरिनिष्ठितमित्यर्थः । परिनिष्ठितत्वं च—अप्रवृत्तानित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम् । देवदत्तो भवतीत्यादौ 'तिङतिङः' इति निघाते जातेऽतिङन्तपदपरतिङन्तत्वरूपोद्देश्यतावच्छेदकसत्त्वे अपरिनिष्ठितत्ववारणाय अप्रवृत्तेति । "स्वरति" इत्यादिविकल्पसूत्रस्य पाक्षिकप्रवृत्तौ 'सेद्धा' इत्यादावसाधुत्ववारणाय नित्यविधीति । अभेदपक्षे तु "अर्थवत्" इति सूत्रस्यार्थवत्त्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात् सूत्राप्रवृत्तावपि भू इत्यादिपरिनिष्ठितम् । परिनिष्ठितसाधुशब्दौ पर्य्यायौ ।

नन्वनुकरणस्यानुकार्यस्वरूपबोधकत्वस्याभावेन कथमनुकार्यस्वरूपप्रतीतिरिति चेत् 'सादृश्याख्यसम्बन्धेनेति गृहाण । यथा मैत्रसदृशपिण्डदर्शने मैत्रस्मरणम् । एवं भू इत्याद्यनुकरणज्ञाने तादृशानुकार्यस्य ज्ञानमिति सङ्क्षेपः ।

अथ समासादिवृत्त्यर्थः । वृत्तिर्द्विधा ।

---

हेतुत्वकल्पनात् । अनुकार्यविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति अनुकरणजन्योपस्थितित्वेन कारणताया विशेषरूपेण स्वीकाराच्च । **अपदमिति** । अभेदपक्षेऽर्थवत्त्वाभावेन सुबाद्यनुत्पत्त्या पदत्वाभावात्, पदस्यैव साधुत्वविधानाच्चास्यासाधुत्वमिति शङ्काशयः । **अप्रवृत्तेत्यादि** । राम सु इत्यवस्थायाम् अप्रवृत्तो नित्यविधिः "ससजुषोरुः" इति तदुद्देश्यतावच्छेदकम्—पदान्तत्वविशिष्टसत्वम्, तेनाक्रान्तत्वादपरिनिष्ठितत्वम् । 'रामः' इत्यस्य तु अनाक्रान्तत्वात् नापरिनिष्ठितत्वम् । भेदाभेदपक्षौ च जातिव्यक्तिपक्षवत् शिष्टप्रयोगानुसारिणौ । अत एव क्वचिद्विभक्तिविशिष्टाः क्वचिद्विभक्तिरहिताश्चानुकरणप्रयोगाः संगच्छन्ते । इति ज्योत्स्नायां नामार्थनिर्णयः ॥

## अथ समासादिवृत्त्यर्थनिरूपणम् ।

सामान्यतो नामार्थं निरूप्य समासस्यापि नामविशेषत्वात् तदर्थं निरूपयितुमारभते—**अथेति** । **अत्रादिपदेन** कृत्तद्धितैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयो ग्राह्याः । अयञ्च विभागः प्राचीनमतानुसारेण । नव्यास्तु एकशेषस्य वृत्तित्वं नेच्छन्ति । परार्थान्वितस्वार्थोपस्थापकत्व-

जहत्स्वार्थाऽजहत्स्वार्था च । अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वं जहत्स्वार्थात्वम् । अवयवार्थसंवलितसमुदायार्थबोधिकात्वमजहत्स्वार्थात्वम् ।

रथन्तरं सामभेदः, शुश्रूषा सेवा इति पूर्वस्या उदाहरणम् । राजपुरुष इत्यादावन्त्या । समासादिपञ्चसु विशिष्टे एव शक्तिर्न त्ववयवे । रथन्तरं, सप्तपर्णः, शुश्रूषेत्यादौ अवयवार्थानुभवाभावात् । अत एव भाष्ये व्यपेक्षापक्षमुद्भाव्य "अथैतस्मिन्व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य" इत्युक्तम् । धवखदिरौ, निष्कौशाम्बिः, गोरथो, घृतघटो, गुडधानाः, केशचूडः, सुवर्णालङ्कारो, द्विदशाः, सप्तपर्ण, इत्यादौ साहित्य-क्रान्त-युक्त-पूर्ण-मिश्र-सङ्घात-विकार-सुच्प्रत्ययलोप-वीप्साद्यर्था वाचनिका वाच्या इति तद्भाष्याशयः ॥

---

रूपवृत्तित्वस्य तत्राभावात् । अतएव "समर्थः पदविधिः" इति सूत्रस्याधिकारत्वपक्षे एकशेषासङ्ग्रहः उक्तो भाष्ये । समासत्वम्—अखण्डोपाधिविशेषः । एवञ्चाखण्डधर्मवत्त्वं, सङ्केतसम्बन्धेन समासपदवत्त्वं वा समासत्वम्' अर्थबोधायाननुसन्धीयमानविभक्तिकपूर्वपदकनामसमुदायत्वं समासत्वं तु न, दधि मधुरमित्यादावतिव्याप्तेः । **जहत्स्वार्थाऽजहत्स्वार्थेति** ।

जहति—त्यजन्ति, स्वानि–पदानि, अर्थं यस्यां वृत्तौ सा जहत्स्वार्थावृत्तिः । एवम् अजहति—न त्यजन्ति स्वानि—पदानि, अर्थं यस्यां सा अजहत्स्वार्था वृत्तिरित्यर्थः । अत्र स्वशब्द आत्मीयपरः, अर्थस्यात्मीयश्च पदमेव । एवञ्च जहत्स्वार्थत्वमेवैकार्थीभावः । अजहत्स्वार्थत्वञ्च व्यपेक्षा । एकार्थीभावे समुदायस्यैव विशिष्टार्थोपस्थापकत्वेऽवयवभूतानि पदानि न स्वार्थोपस्थापकानि, निष्फलत्वात्, अनन्यलभ्यस्यैव शब्दार्थत्वात् । व्यपेक्षापक्षे—परस्परापेक्षत्वरूपव्यपेक्षात्वस्य सम्भवात् तत्पक्षेऽवयवाः स्वार्थोपस्थापका एव । तथा च स्वार्थपर्यवसायिनां पदानामाकाङ्क्षावशात् परस्परान्वयो व्यपेक्षा इति सिद्ध्यति । एतदेव विशदयति–**अवयवार्थेत्यादिना** । अतएव—समासे विशिष्टशक्तिस्वीकारादेव ।

**वाचकनिका वाच्या इति** । "चार्थे द्वन्द्वः" इत्यत्र 'चार्थे' इत्येको

यत्तु व्यपेक्षावादिनो नैयायिकमीमांसकादयः—न समासे शक्तिः । राजपुरुष इत्यादौ राजपदादेः सम्बन्धिनि लक्षणयैव राजसम्बन्धवदभिन्नः पुरुष इति बोधात् । अत एव राज्ञः पदार्थैकदेशत्वान्न तत्र ऋद्धस्येत्यादि-विशेषणान्वयः । 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इत्युक्तेः । 'सविशेषणानां—वृत्तिर्न, वृत्तस्य च विशेषणयोगो न' इत्युक्तेश्च । न वा

---

योगः, तत्रानेकमिति–सुबिति चानुवर्तते । एवञ्चानेकं सुबन्तं चार्थे–वर्तते, तच्च द्वन्द्वसंज्ञकं भवति इति वाक्यभेदेन वचनादेव बोद्धव्य इत्यर्थः । एवम् अत्यादयः क्रान्ताद्यर्थे वर्तन्ते इत्यर्थकम् 'अत्यादयः क्रान्ताद्यर्थे' इति वाक्यं भित्त्वा द्वितीयेन 'द्वितीयया' इत्यनेन समाससंज्ञा विधेया, इत्येवमनेकवचनैरर्थबोधनेऽतिगौरवमिति भावः । 'धवखदिरौ' इत्यत्र 'सहितौ धवखदिरौ' इति साहित्यार्थः, निष्कौशाम्बिः' इत्यत्र निष्क्रान्तः कौशाम्ब्याः इति क्रान्तार्थः । 'गौरथ' इत्यत्र गोभिर्युक्तो रथ इति युक्तार्थः । 'घृतघटः' इत्यत्र घृतपूर्णो घट इति पूर्णार्थः । 'गुडधाना' इत्यत्र गुडमिश्रा धाना इति मिश्रार्थः । 'केशचूडः' इत्यत्र केशसङ्घातभूता ( जटीभूता ) चूडा यस्येति संघातार्थः । 'सुवर्णालङ्कारः' इत्यत्र सुवर्णविकारोऽलङ्कार इति विकारार्थः । 'द्विदशाः' इत्यत्र द्विरावृत्ता दश इत्यर्थात् सुच्प्रत्ययलोपः । 'सप्तपर्णः' इत्यत्र प्रतिपर्व सप्त सप्त पर्णानि यस्येति वीप्सा प्रतीयते । एते शब्दा एतादृशार्थबोधका इति वचनं कर्त्तव्यमित्येवंरीत्या गौरवमिति यावत् ।

**इति बोधादिति** । एवञ्च राजपदस्य राजसम्बन्धिनि लक्षणायां सम्बन्धभानसम्भवे तदर्थं समुदायशक्तिरनावश्यकी । अतएव–समासे लक्षणास्वीकारादेव । **पदार्थः पदार्थेनान्वेतीति** । पदार्थत्वञ्च आश्रयत्व-सम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यताश्रयत्वम् । पदार्थैकदेशत्वञ्च अवच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यताश्रयत्वम् । भगवदिच्छा च 'अस्मात् पदादयमर्थो बोद्धव्यः इत्याकारिका । अन्यत् व्युत्पत्तौ कार्यकारणभावादिकं पूर्वमेवोक्तमिति तत एवानुसन्धेयमिति भावः ।

घनश्यामो, निष्कौशाम्बिः, गोरथ इत्यादाविवादिप्रयोगापत्तिः। लक्षणयैवोक्तार्थतया "उक्तार्थानामप्रयोग" इति न्यायेन इवादीनामप्रयोगात्। नापि "विभाषा" इति सूत्रमावश्यकम्, लक्षणया राजसम्बन्ध्यभिन्न इति बुबोधयिषायां समासस्य, राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्य च प्रयोगनियमसम्भवात्। नापि "शक्तिः, पङ्कजशब्दवत्" इति पङ्कजशब्दप्रतिद्वन्द्विता शक्तिसाधिका। तत्रावयवशक्तिमजानतोऽपि ततो बोधात्।

न च शक्त्यग्रहे लक्षणया तस्माद्विशिष्टार्थप्रत्ययः सम्भवति। अत एव राजपदादिशक्त्यग्रहे राजपुरुष इत्यादिषु न बोधः। नच चित्रगुरित्यादौ लक्षणासम्भवेऽप्यषष्ठ्यर्थबहुव्रीहौ लक्षणाया असम्भवः, बहुव्युत्पत्ति-

---

**प्रयोगापत्तिरिति**। सर्वानुभूयमानसादृश्यक्रान्तयुक्तार्थप्रतीतीनां लक्षणयैव निर्वाहात्। व्यपेक्षावादिनये 'राजपुरुष' इत्यादौ प्रत्येकपदवृत्त्या पदार्थोपस्थितावाकाङ्क्षादिवशात् विशिष्टार्थबोधवत् पङ्कजपदादपि तथैव विशिष्टार्थोपस्थित्या रूढेरुच्छेदापत्तिः।

यदि तद्धर्मावच्छिन्नविषयकोपस्थितिं प्रति तद्धर्मावच्छिन्नविषयकशक्तिज्ञानस्य कारणत्वेन पद्मत्वावच्छिन्नोपस्थितये तत्र विशिष्टा शक्तिः स्वीक्रियते, तदा चित्रग्वादिपदेऽपि स्वामित्वेनोपस्थितये विशिष्टशक्तिकल्पनाऽऽवश्यकत्वात् लक्षणया तथोपस्थितिरिति चेत्, पङ्कजपदेऽपि सा सुवचा, नच सा व्यपेक्षावादिनामभीष्टेति प्रतिद्वन्द्वितया वृत्तौ शक्तिः सिद्ध्येदिति विशिष्टशक्तिवादीनां मतं खण्डयति—**नापीत्यादिना**। **सम्भवतीति**। शक्तिज्ञानं विना शक्यानुपस्थितौ शक्यसम्बन्धरूपलक्षणाया अभावेन लक्षणया पद्मत्वावच्छिन्नस्य बोधो नैव सम्भवतीति भावः। एवञ्च पङ्कजपदेऽवयवशक्त्यज्ञानेऽपि पद्मत्वावच्छिन्नविषयकबोधस्य सर्वानुभवसिद्धतया तत्र समुदायशक्तिरावश्यकीति सिद्धम्। तस्मात्—पङ्कजपदात्।

अतएव—अवयवशक्तिज्ञानस्य विशिष्टार्थबोधप्रयोजकत्वादेव। **न बोध इति**। तत्रावयवशक्तिज्ञानविरहदशायां शाब्दबोधाभावः सर्वानुभवसिद्धः इति बोधाभावस्तत्र इष्ट एवेत्याशयः। अषष्ठ्यर्थबहुव्रीहौ 'प्रासादको ग्रामः' इत्यत्र। **बहुव्युत्पत्तीति**। "समानाधिकरणनामार्थयोरभेदान्वयः"

भञ्जनापत्तेरिति वाच्यम् ।

प्राप्तोदक इत्यादौ उदकपदे एव लक्षणास्वीकारात् । पूर्वपदस्य यौगिकत्वेन तत्र लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात् ।

---

"प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्" इत्यादिव्युत्पत्तेः भङ्गापत्तेरित्यर्थः । अयमाशयः—'चित्रगुः' इत्यत्र अनुभवसिद्धायाः स्वाम्यादिप्रतीतेः कथञ्चिल्लक्षणयोपपत्तावपि नामार्थयोरभेदान्वयः इति व्युत्पत्त्या 'प्राप्तोदको ग्रामः' इत्यत्र 'प्राप्तिकर्त्रभिन्नमुदकम्' इत्यादिबोधोत्तरं प्राप्तिकर्त्रभिन्नोदकसंबन्धिग्रामे लक्षणायामपि उदककर्तृकप्राप्तिकर्मग्रामः, इतीष्टबोधो न स्यात्, प्राप्तेति क्तप्रत्ययस्यैव कर्त्रर्थकस्य कर्मणि लक्षणेति चेत्तर्हि, समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिभङ्गापत्तेः । अथोदकाभिन्नकर्तृका प्राप्तिरिति बोधोत्तरं तत्सम्बन्धिग्रामो लक्ष्यते इति चेन्न, प्राप्तेर्धात्वर्थतया क्तार्थकर्तारं प्रति विशेष्यताया असम्भवात् "प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्' इति व्युत्पत्तेः प्राप्तपदे प्राप्तेर्विशेष्यत्वे तस्या एव नामार्थत्वेनोदकेन सममभेदान्वयापत्तेश्चेति पूर्वपाक्षिण आशयः । **धातुप्रत्ययेति** । धातुश्च प्रत्ययश्च तदर्थश्चेति धातुप्रत्ययतदर्थास्तेषां ज्ञानेन साध्यतयेत्यर्थः । धातुप्रत्ययज्ञानं विना तदर्थज्ञानासम्भवेनार्थज्ञानद्वारा धातुप्रत्ययज्ञानमपि लक्षणाया प्रयोजकमिति भावः ।

ननु 'शक्तं पदम्' इति मते प्राप्तेति समुदाये न लक्षणा, तस्य शक्त्यभावेन शक्यसम्बन्धरूपलक्षणाया असम्भवात्, किन्तु तत्तद्घटकक्तप्रत्यये एव । तथा च तत्तदर्थज्ञानमात्रसाध्यत्वं न तु धातुतदर्थज्ञानसाध्यत्वमपि । एवञ्चोदकपदलक्षणायामपि उदकशब्दतदर्थज्ञानसाध्यतया साम्यमेव । ननूक्तप्रत्यये उदककर्तृकप्राप्तिकर्मलक्षणायां तादृशधातुसमभिव्याहारज्ञानस्य तात्पर्यग्राहकत्वं वाच्यम्, अन्यथा अतिप्रसङ्गात् । एवं च धातुतदर्थज्ञानसाध्यत्वमक्षतमेव । किञ्च स्वबोध्यसम्बन्धो लक्षणेति मीमांसकमते प्राप्तेति समुदाये लक्षणासंभवात् तत्तदर्थज्ञानसाध्यत्वमनपवादमिति स्फुटमेवेति चेत् । उदकपदे तादृशार्थलक्षणायामपि प्राप्तपदसमभिव्याहारस्य तात्पर्यग्राहकतया धातुप्रत्ययतदर्थ-

प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधाच्च । घटादि-पदे चातिरिक्ता शक्तिः कल्प्यमाना प्रत्येकं वर्णेषु बोधकत्वेऽपि विशिष्टे कल्प्यते, विशिष्टस्यैव सङ्केतितत्वात्। प्रकृते चात्यन्तसन्निधानेन प्रत्यया-न्वयसौलभ्यायोत्तरपदे एव लक्षणा कल्प्यत इति विशेषः। स्वीकृतं च घटादिपदेष्वपि चरमवर्णस्यैव वाचकत्वं मीमांसकंमन्यैरित्याहुः ।

अत्रोच्यते—समासे शक्त्यस्वीकारे विशिष्टस्यार्थवत्त्वाभावेन प्राति-पदिकत्वं न स्यात्। अत एवार्थवत्सूत्रे भाष्ये "अर्थवादिति किम्।

---

ज्ञानसाध्यत्वं दुरपह्नवमेव। प्राप्तिकर्मज्ञानं विना तत्संबन्धरूप—लक्षणा-ग्रहासम्भवादित्यत उत्तरपदलक्षणायां विनिगमकान्तरमाह—**प्रत्ययाना-मिति**। अतएव राजपुरुषमानयेत्यत्र राज्ञि न प्रत्ययार्थकर्मत्वाद्यन्वयः । अन्यथा द्विवचनापत्तेः। पुरुषे आनयनकर्मत्वविरहग्रहदशायां राजनि आनयनकर्मत्वान्वयतात्पर्येण राजपुरुषमानयेति प्रयोगापत्तेश्च। तादृश-श्रवणानन्तरं तदर्थबोधे सति राजानयनापत्तेश्च। घटादिपदघटकचरम-वर्णस्यैव वाचकत्वं स्यात् तुल्यन्यायादिति शाब्दिकोक्तप्रतिबन्दीरूपं दूषणं निरस्यति—**घटादिपदेचेति**। **अतिरिक्तेति**। ननु अतिरिक्तत्वं भिन्नत्वम्, तच्च यत्किञ्चित्प्रतियोगिकं सर्वत्रैवेतीदमसङ्गतमिति चेन्न, घटशब्दघटकधातुप्रत्ययशक्तिप्रतियोगिकाभिन्नत्वस्य, घटपदातिरिक्तं यद्-गृहीतशक्तिकं पदं तच्छक्त्यतिरिक्तत्वस्य, बोधकत्वापेक्षयाऽतिरिक्तत्वस्य वा विवक्षितत्वात्।

संकेतितत्वात्—कोशादिना संकेतितत्वेन बोधनात्। प्रकृते च—'प्राप्तोदकः' इत्यादिसमासस्थले च। **विशेष इति**। चरमवर्णस्या त्यन्तं प्रत्ययसंनिधानेऽपि तस्य बोधकत्वाननुभवात् समुदायस्यैव वाचकत्वं कल्प्यत इति भावः। **स्वीकृतंचेति**। तथा च घटादिशब्दे चरमवर्णस्यैव वाचकत्वे इष्टापत्तिरिति भावः।

यत्त्वित्यारभ्य आहुरित्यन्तं व्यपेक्षावादिनां मतं प्रदर्श्य खण्डयति—'अत्रोच्यते' इत्यादि । तस्य—समासस्य । अत एव—अर्थवत एव

अर्थवतां समुदायोऽनर्थकः—दश दाडिमानि षडपूपाः कुण्डमजाऽजिनम्" इति प्रत्युदाहृतम्। एवं च राजपुरुषपदयोस्त्वन्मते प्रत्येकमर्थवत्त्वेऽपि समुदायस्य दशदाडिमादिवदनर्थकत्वात्प्रातिपदिकत्वानापत्तेः । नच "कृत्तद्धित" इति सूत्रे समासग्रहणात् तत्संज्ञेति वाच्यम्। तस्य नियमार्थताया भाष्यकृतैव प्रतिपादितत्वात्। अन्यथा सिद्धिं विना नियमायोगात्। अत एव राज्ञः पुरुषो देवदत्तः पचतीत्यादिवाक्यस्य, मूलकेनोपदंशमित्यादेश्च न प्रातिपदिकत्वम्।

किञ्च समासे शक्त्यस्वीकारे शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवेन लाक्षणिकार्थवत्त्वस्याप्यसम्भवेन सर्वथा प्रातिपदिकत्वाभाव एव निश्चितः स्यादिति स्वाद्यनुत्पत्तौ "अपदं न प्रयुञ्जीत" इति भाष्यात्समस्तप्रयोगविलयापत्तेः ॥

अथ तिप्तस्झीत्यतः तीत्यारभ्य ङ्योस्सुबिति पकारेण तिप्प्रत्याहारो भाष्यसिद्धः, तत्पर्युदासेन 'अतिप्प्रातिपदिकम्' इत्येव सूत्र्यताम्, ततः "समासश्च" इति सूत्रं नियमार्थमस्तु किं सूत्रद्वयेनेति सुप्तिङन्तभिन्नं

---

प्रातिपदिकसंज्ञाविधानादेव । एवञ्च—अर्थवतः प्रातिपदिकसंज्ञाविधानेन समासे शक्त्यस्वीकारे च। प्रातिपदिकत्वानापत्तेरिति। एवञ्च राजन् ङस् पुरुष सु इत्यत्र "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपो लुक् न स्यादिति भावः । तस्य—समासग्रहणस्य । अत एव—समासग्रहणस्य नियमार्थत्वादेव । **मूलकेनोपदंशमित्यादेश्चेति** । तार्किकमते 'राज्ञः पुरुषः' इत्यादिवाक्यस्य अर्थवत्त्वाभावादेव प्रातिपदिकत्वं न स्यादित्यत आह-**मूलकेनोपदंशमिति** । तार्किकमते उत्तरसूत्रे अर्थवत्पदासम्बन्धात् कृद्ग्रहणपरिभाषया कृदन्ततदादित्वात् अतिप्रसङ्गोऽत्र दुर्वार एव ।

**नियमार्थमस्त्विति** । 'राजन् ङस् पुरुष सु' इत्यादिसमासस्य तिबन्ततदादिभिन्नतया, 'अतिप्प्रातिपदिकम्' इत्यनैवेव प्रातिपदिकत्वे सिद्धे समासग्रहणस्य नियमार्थत्वं सुवचनमिति भावः । **किं सूत्रद्वयेनेति** । गुरुभूतेन सूत्रद्वयेन किञ्चित्साध्यं नास्तीत्यर्थः । गुरुभूतम्

प्रातिपदिकमित्यर्थात् समासस्यापि सा स्यादिति "समासश्च" इत्यस्य नियमार्थत्वं सुलभमिति चेत्, सत्यम् । प्रत्येकं वर्णेषु संज्ञावारणाय "अर्थवत्" इत्यस्यावश्यकत्वेन समासेऽव्याप्तिस्तदवस्थैव । तथा च प्रातिपदिकसंज्ञारूपकार्यमेवार्थवत्त्वमनुमापयति । समासोऽर्थवान्, प्रातिपदिकत्वात् । यन्नार्थवत्तन्न प्रातिपदिकम्, अभेदविवक्षापक्षे—'भू सत्तायाम्, इत्याद्यनुकरणवदिति ॥

---

"अर्थवत्" इति "कृत्तद्धित" इति सूत्रद्वयं नारम्भणीयमिति भावः । अनेनात्र पक्षेऽपि सूत्रद्वयस्य सत्त्वेन किं सूत्रद्वयेनेत्यसङ्गतमित्यपास्तम्

**अव्याप्तिरिति** । तिबन्तभिन्नत्वेऽपि अर्थवत्त्वाभावात् प्रातिपदिकसंज्ञाया अप्राप्त्या विध्यर्थमेव समासग्रहणमिति वाक्यस्य संज्ञा दुर्वारा स्यादिति समासग्रहणस्य नियमार्थत्वाय समासशक्तेर्यथाश्रुतन्यासस्य चावश्यकत्वम् । **अनुमापयतीति** । समासस्य प्रातिपदिकसंज्ञा सर्वानुमतेति हेत्वसिद्धिर्नास्तीति भावः । व्यतिरेकव्याप्त्या अनुमानप्रयोगं दर्शयति—**समास इति** ।

ननु अनर्थकनिपाते प्रातिपदिकत्वरूपहेतोः सत्त्वात् व्यभिचारः स्यादिति चेन्न, तथाविधस्य निपातस्यैवाभावात् । नच "अधिपरी अनर्थकौ" इत्यादिना अधिपरिनिपातयोरनर्थकत्वस्य प्रशासनात् व्यभिचारस्तदवस्थ एवेति वाच्यम्, एकान्ततस्तयोः कश्चनार्थो नास्तीत्येव तस्याभिप्रायात् । निपातानां क्रियागतविशेषद्योतकत्वं क्रियानिरूपितसम्बन्धद्योतकत्वं वा यः स्वभावः स नास्ति एतावन्मात्रमेव अनर्थकपदेन प्रतिपाद्यते नतु सर्वथा आनर्थक्यं बोध्यते । धात्वर्थमात्रद्योतकत्वेनाप्यर्थवत्त्वस्याक्षतत्वात् । अत एव प्रकृतसूत्रे भाष्ये "एवं तर्हि सिद्धे सति यत् अनर्थकयोः उपसर्गसंज्ञाबाधिकां कर्मप्रवचनीयसंज्ञां शास्ति, तज्ज्ञापयति आचार्यः—अनर्थकानामप्येषां भवति अर्थवत्कृतमिति । किमेतस्य ज्ञापने प्रयोजनम्? निपातस्य अनर्थकस्य प्रातिपदिकत्वं चोद्यते तन्न वक्तव्यं भवति अथवा नेमौ अनर्थकौ, किन्तर्हि । अनर्थकावित्युच्यते, अनर्थान्तरवाचिनौ अनर्थकौ धातुनोक्तां क्रियामाहतुः । तदविशिष्टं भवति,

यत्तु 'पदार्थः पदार्थेन' इति 'वृत्तस्य विशेषणयोगो न' इतिवचनद्वयेन ऋद्धस्येत्यादिविशेषणान्वयो न भवति, तत्तु समासे एकार्थीभावे स्वीकृतेऽवयवानां निरर्थकत्वेन विशेषणान्वयासम्भवात् फलितार्थपरम् अस्माकं, युष्माकं तु अपूर्ववाचनिकमिति गौरवमित्यग्रे वक्ष्यते ॥

---

यथा शङ्खे पयः" इत्युक्तम् । अत्रैव कैयटेन "आहतुरिति द्योतयत इत्यर्थः । तदविशिष्टमिति—तत् क्रियालक्षणं वस्त्वविशिष्टम् अधिपरिसन्निधानेऽपि अनाहितविशेषमित्यर्थः । यथेति–शङ्खे न्यस्तं क्षीरं शौक्ल्येनाभिन्नं शङ्खादिवादित्यर्थः ॥ इति व्याख्यातम् । एवमर्थवत्सूत्रेऽपि आनर्थक्यञ्च निपातस्य धातुनिपातयोः साधारणार्थया अधिकद्योत्यार्थाभावादुच्यते नतु सर्वात्मना अर्थाभावादिति कैयटेनोक्तम् । "वस्तुतस्तु व्यतिरेकमुखेनापि मूलोक्तमनुमानमसङ्गतम् तद्धि यद्यत् अर्थवत्त्वाभाववत् तत्तत् प्रातिपदिकत्वाभाववत् इति क्रमेण वाच्यम्, तत्तु न सम्भवति उक्तेषु अनर्थकनिपातेषु व्यतिरेकव्यभिचारादिति बोध्यम्, इति केचिदाहुः तत् प्रत्युक्तम् ।

**एकार्थीभाव इति** । तत्त्वञ्च न तावत् एकार्थोपस्थितिजनकत्वम्, अपृथगुपस्थितिविषयत्वं वा घटादावतिव्याप्तेः । किन्तु शक्तिविशिष्टोपस्थापकशक्तिपर्याप्त्यधिकरणत्वं वक्तव्यम् । वै० स्वविषयकज्ञानप्रयोज्यज्ञानविषयत्वसम्बन्धेन । यथा ब्राह्मणकम्बल इत्यत्र ब्राह्मणत्वावच्छिन्ने ब्राह्मणशब्दस्य कम्बलत्वावच्छिन्ने कम्बलशब्दस्य शक्तिः । तद्विषयकज्ञानप्रयोज्यविशिष्टशक्तिविषयकज्ञानविषयोपस्थापकशक्तिपर्याप्त्यधिकरणत्वं 'ब्राह्मणकम्बलः' इति समासस्य । शक्तौ उपस्थापकपदप्रक्षेपेण वाक्यस्य व्युदासः । तत्रानुभावकशक्तेः सत्त्वात् ।

अस्मद्गुरवः श्रीमदुपाध्यायपादास्तु–शक्तिविशिष्टत्वमेकार्थीभावत्वम्, वै० स्वपर्याप्त्यधिकरणघटितत्व–स्वनिरूपकार्थेतरार्थनिरूपितशक्तिपर्याप्त्यधिकरणघटितत्व – स्वज्ञानप्रयोज्यज्ञानविषयशक्तिपर्याप्त्यधिकरणत्वैतात्त्रितयसम्बन्धेन । वृत्तिघटकपदनिष्ठशक्तिमादाय लक्षणसमन्वयः कार्यः । यथा

यत्तु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरिति, तन्न। उपकुम्भम् अर्धपिप्पलीत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्। मम तु प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेर्विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात् विशिष्टस्यैवार्थवत्त्वाच्च न दोषः।

---

'राजपुरुषः' इत्यत्र राजपदनिष्ठराजत्वावच्छिन्ननिरूपितशक्तिविशिष्टत्वं राजपुरुषपदस्य तथाहि—स्वम्—राजत्वावच्छिन्ननिरूपिता शक्तिः, तत्पर्याप्त्यधिकरणं राजपदं तद्घटितत्वस्य, स्वनिरूपको राजरूपोऽर्थः, तादितरोऽर्थः—पुरुषरूपः, तच्छक्तिपर्याप्त्यधिकरणं पुरुषपदं तद्घटितत्वस्य, स्वज्ञानं राजपदनिष्ठशक्तिज्ञानं, तत्प्रयोज्यज्ञानं राजपुरुषत्वावच्छिन्ननिरूपितसमुदायनिष्ठशक्तिज्ञानं, तद्विषयः समुदायनिष्ठा शक्तिः, तत्पर्याप्त्यधिकरणत्वस्य च राजपुरुष इति समुदायेऽक्षतत्वम्। 'लिट्' इत्यादावपि शक्तित्रयम्—आस्वादनत्वावच्छिन्नार्थनिरूपिता एका शक्तिः, 'लिह आस्वादने' इत्युक्तेः। कर्त्तृत्वावच्छिन्नार्थनिरूपिता अपरा शक्तिः, कर्त्तरि क्विब्विधानात्। आस्वादनकर्त्तृत्वावच्छिन्नार्थनिरूपिता तृतीया शक्तिः, "समर्थः पदविधिः" इत्युक्तेः। आद्यशक्तिद्वयान्यतरशक्तिमादाय लक्षणसमन्वयो बोध्यः। एवञ्च लोमवल्लाङ्गूलावच्छिन्नवाचकपशुशब्दे, "सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः, इति पारिभाषिककूकुदशब्दे पूर्वोक्तलक्षणस्यातिव्याप्तिदोषो नोभावदूयितुं शक्यते, इत्याहुः।

युष्माकम्—व्यपेक्षावादिनां नैयायिकमीमांसकीनाम्। दण्डिनमानयेत्यादौ दण्डे कर्मत्वान्वयवारणाय स्वीक्रियमाणायां 'प्रकृत्यर्थनिष्ठविषयतानिरूपितविषयतासम्बन्धेन शाब्दबोधं प्रति विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणम्' इति कार्यकारणभावमूलायां "प्रत्ययाना" मिति व्युत्पत्तौ प्रकृतेः सन्निहितत्वेनैव निवेशः तावतैव व्यभिचारवारणात्, प्रकृतित्वेन प्रकृतेः निवेशे गौरवमिति मतं दूषयति—**यत्त्विति**। **सन्निहितेति**। सन्निहितत्वञ्चाव्यवहितपूर्वत्वेनानुसन्धीयमानत्वम्। तच्च दण्डिन्येवास्ति नतु दण्डे। सन्निहितपदघटितव्युत्पत्तौ व्यभिचारमुद्भावयति—

किञ्च राजपुरुषादौ राजपदादेः सम्बन्धिनि सम्बन्धे वा लक्षणा। नाद्यः। राज्ञः पुरुष इति विवरणविरोधात्। वृत्तिसमानार्थवाक्यस्यैव विग्रहत्वात्। अन्यथा तस्माच्छक्तिनिर्णयो न स्यात्। नान्त्यः। राजसम्बन्धरूपपुरुष इत्यन्वयप्रसङ्गात्।

ननु तर्हि वैयाकरण इत्यस्य व्याकरणमधीते इति, पाचक इत्यस्य पचतीति कथं विग्रहः? वृत्तिसमानार्थत्वाभावादित्यत आह—

आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावादौ तत्र दृष्टो विपर्य्ययः ॥ इति ॥

तद्धितकृतोर्यत्किञ्चिदर्थबोधकं विवरणमाख्यातं तिङन्तमिति यावत्, तत्र विवरणविव्रियमाणयोर्विशेष्यविशेषणभावविपर्ययो दृष्ट इति। कृदन्त-तद्धितान्तयोराश्रयप्राधान्यम्, आख्याते व्यापारस्येति बोध्यम्। ननु

---

उपकुम्भमिति। **पूर्वपदार्थे इति।** उपपदार्थाद्धपदार्थस्यैव विशेष्य-त्वाद् विभक्तेर्विशेष्यगतसंख्यादिबोधकत्वस्यैव नियमेन पूर्वपदस्योत्तरपदेन-व्यवधानात् सन्निहितत्वं नास्तीत्यतो व्यभिचार इति भावः। मम तु—विशिष्टशक्तिवादिनस्तु। **विवरणविरोधादिति।** 'राजपुरुषः' इति समासात् राजसम्बन्धिप्रकारकाभेदसंसर्गकबोधः। 'राज्ञः पुरुषः' इति वाक्यात् राजसम्बन्धप्रकारकस्वरूपसंसर्गको बोध इति विरोधः स्पष्ट एव। अन्यथा—वृत्त्यसमानार्थकवाक्यस्य विग्रहत्वे। **इत्यन्वयप्रसङ्गादिति** अभेदसंसर्गावच्छिन्नप्रातिपदिकार्थनिष्ठप्रकारता-निरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति विरुद्धविभक्ति—रहितपदजन्योपस्थितेर्हेतुत्वेन तस्या 'राजपुरुषः' इत्यादिसमासोत्तरपदार्थे पुरुषादौ सत्त्वादभेदान्वयो दुर्वार इति तात्पर्यम्।

ननु समानविशेष्यप्रकारकप्रतीतिजनकत्वरूपं समानार्थत्वं वृत्ति-विग्रहयोरपेक्षितम्, तच्च वैयाकरणः पाचक इत्यादौ नास्ति, यतो व्याकरणमधीते वेत्ति वेति विग्रहस्य व्यापारमुख्यविशेष्यकबोधजनकत्वं, वैयाकरणेः, पाचक इति वृत्तेः आश्रयमुख्यविशेष्यकबोधजनकत्वमित्याह—**नन्विति। विपर्ययो दृष्ट इति।** तथाहि 'आक्षिकः' इति तद्धितात्

रथन्तरशब्दाद्रथिकस्यापि प्रत्ययः किन्न स्यादिति चेत् मैवम् । 'रूढिर्योगार्थमपहरति' इति न्यायात् । ननु विशिष्टशक्तिस्वीकारे पङ्कजपदादवयवार्थप्रतीतिर्माभूत्, समुदायशक्त्यैव कमलपदवत् पुष्पविशेषप्रत्ययः स्यादिति चेत् न ।

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।

---

अक्षकरणकव्यापाराश्रयः, 'कुम्भकारः' इति कृदन्तात् कुम्भोत्पत्त्यनुकूलव्यापाराश्रयः इति बोधः । 'अक्षैर्दीव्यति' "कुम्भं करोति" इत्यत्र अक्षकरणिका देवनानुकूला–भावना, कुम्भोत्पत्त्यनुकूला भावनेति बोधः । कारिकायाम् यत्किञ्चिदर्थस्य–ईषदर्थस्य । उपदर्शकम्–बोधकम् । गुणप्रधानभावादौ–विशेष्यविशेषणभावादौ । तत्र–तद्धितकृतोः । एवञ्च वृत्तिजन्यबोधसमानविषयकबोधजनकत्वमेव विग्रहत्वम्, नतु वृत्तिजन्यबोधीयप्रकारताविशेष्यतासमानप्रकारताविशेष्यताकबोधजनकत्वम् । केचित्तु–' तत्र दृष्टो विपर्ययः " इत्यस्य कर्त्रादिमुख्यविशेष्यकबोधजनकत्वं विग्रहवाक्यस्य भावनामुख्यविशेष्यकबोधजनकत्वं कृत्तद्धितादेरिति तद्विपरीतविशेष्यविशेषणभावापन्नार्थविषयकबोधजनकत्वरूप एवात्र विपर्ययपदार्थो नत्वेकाधिकरणे विशेष्यतादिविपर्ययसत्त्वेऽपि आख्यातादिरूपैकनिष्ठत्वाभावः । किन्तु लोके प्रयुक्ततिङन्तस्य यथा भावनामुख्यविशेष्यकबोधजनकत्वं न तथा बोधजनकत्वं विग्रहवाक्यस्यापि तु तद्धितान्तादिवत् कर्त्रादिमुख्यविशेष्यकबोधजनकत्वमित्यर्थः । एवं च न वृत्तिवाक्ययोः समानार्थत्वभङ्गः इत्याहुः ।

**रथन्तरशब्दादिति** । रथेन तरतीति विग्रहात् रथकरणकतरणकर्तृत्वं रथिकस्यापीति भावः । व्यपेक्षापक्षे दूषणमिति । व्यपेक्षापक्षे 'राजपुरुषः' इत्यादौ यथा प्रत्येकपदार्थोपस्थिताकाङ्क्षया विशिष्टार्थबोधः, तथा पङ्कजशब्देऽपि विशिष्टार्थप्रत्ययोत्पत्त्या रूढेरुच्छेदः स्यादिति यद्दूषणं तत्तु अस्माकमेकार्थीभाववादिनां विशिष्टशक्तिसाधने भूषणमेवेति बोध्यम् । एवञ्च वृत्तिषु विशिष्टैव शक्तिरिति सिद्धम् ।

इत्यभियुक्तोक्तेः, अवयवार्थसंवलितसमुदायार्थे पद्मे शक्तिस्वीकारात् । अतएव चतुर्विधः शब्दः । यथा—रूढः, योगरूढः, यौगिकः, यौगिकरूढश्चेति । अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम्—रथन्तरमित्यादौ । अवयवार्थसंवलितसमुदायशक्त्याऽर्थबोधकत्वं योगरूढत्वम्—पङ्कजमित्यत्र । अवयवशक्त्यैवार्थबोधकत्वं यौगिकत्वं—पाचिका पाठिकेत्यादौ । अवयवशक्त्या समुदायशक्त्या चार्थबोधकत्वं यौगिकरूढत्वम् । मण्डपानकर्तृपरोऽपि गृहविशेषपरोऽपि मण्डपशब्द उदाहरणमिति विवेकः । व्यपेक्षापक्षे दूषणं शक्तिसाधकम् । हरिरप्याह—

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।
बहूनां वृत्तिधर्माणां वचनैरेव साधने ॥
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥ इति ।

पङ्कजशब्दे योगार्थस्वीकारे शैवालादेरपि प्रत्ययः स्यात् । वृत्तिधर्माः—विशेषणलिङ्गसङ्ख्याद्ययोगादयः' "सविशेषणानां वृत्तिर्न" इत्यादिवचनैरेव साध्याः, इति तत्तद्वचनस्वीकार एव गौरवम् । मम तु एकार्थीभावस्वीकारादवयवार्थाभावाद्विशेषणाद्ययोगो न्यायसिद्धः, वचनं च न कर्तव्यं न्यायसिद्धं चेति लाघवम् । व्यपेक्षायां दूषणान्तरमाह—

---

**पङ्कजशब्दवदिति** । यथा पङ्कजादिशब्दे अवयवशक्तितो भिन्नैव पद्मत्वावच्छिन्ननिरूपिता समुदाये शक्तिः, तथा वृत्तावपि समुदाये शक्तिः स्वीकार्या । **एकार्थीभावइति** । शक्तिर्द्विधा—व्यपेक्षारूपा एकार्थीभावरूपा च । तत्र स्वार्थपर्यवसायिनां शब्दानामाकाङ्क्षावशाद् यः परस्परं सम्बन्धः सा व्यपेक्षा । सा च वाक्ये एव, समासादिवृत्तौ तु एकार्थीभावरूपं सामर्थ्यम् । तदेव "समर्थः पदविधिः" इति सूत्रे समर्थपदेन गृह्यते । तदुक्तं—समर्थसूत्रे भाष्ये—किं समर्थन्नाम ? पृथगर्थानामेकार्थीभावः समर्थवचनम् । पृथगर्थानां पदानामेकार्थीभावः समर्थवचनमित्युच्यते । क पुनः पृथगर्थानि, क्वैकार्थानि ? वाक्ये पृथगर्थानि 'राज्ञः पुरुषः' इति । समासे पुनरेकार्थानि राजपुरुष इति ।

चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्तव्यन्ते न्यायसिद्धं त्वस्माकन्तादितिस्थितिः ॥

घटपटाविति द्वन्द्वे साहित्यद्योतकचकारनिषेधस्त्वया कर्तव्यः । आदिना घनश्याम इत्यादौ इवशब्दस्य । मम तु साहित्याद्यवच्छिन्ने शक्तिस्वीकारात् "उक्तार्थानामप्रयोग" इति न्यायात्तेषामप्रयोगः । बहुव्युत्पत्तिभञ्जनमिति–अषष्ठ्यर्थबहुव्रीहौ प्राप्तोदक इत्यादौ पृथक्शक्तिवादिनां मते प्राप्तिकर्त्रभिन्नमुदकमित्यादिबोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामपि उदककर्तृकप्राप्तिकर्मग्राम इत्यर्थालाभे प्राप्ते प्राप्तेति क्तप्रत्ययस्य कर्त्रर्थकस्य कर्मार्थे लक्षणा, ततोऽपि 'समानविभक्तिकनामार्थयोरभेद एव संसर्ग' इति व्युत्पत्त्या उदकाभिन्नं प्राप्तिकर्मेति स्यात् । उदकस्य कर्तृतया प्राप्तावन्वये तु नामार्थयोरभेदान्वयव्युत्पत्तिभञ्जनं स्यादिति तात्पर्यम् । 'नामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विभक्त्यर्थोपस्थितेः कारणत्वम्' इति व्युत्पत्तिभञ्जनं च । मम तु पृथक् शक्त्यनङ्गीकारात् विशिष्टस्यैव विशिष्टार्थवाचकत्वात् नामार्थद्वयाभावान्न क्वचिदनुपपत्तिरित्यलम् ।

इति श्रीशिवभट्टसुतसतीदेवीगर्भजनागेशभट्टकृता

## परमलघुमञ्जूषा समाप्ता ॥

---

भट्टास्तु–समासेषु न शक्तिः, न वा लक्षणा । समासोपस्थापितविग्रहवाक्यादेव बोधः श्लोकादावन्वयवाक्यादिवत् । अतएव रामेश्वर इत्यादौ "रामस्तत्पुरुषं प्राह बहुव्रीहिं—महेश्वरः । अन्ये तु ऋषयः सर्वे कर्मधारयमूचिरे" इत्यादौ विग्रहवाक्योपस्थित्यैव बोधः । एवं विग्रहसन्देहे बोधसन्देहोऽप्युपपद्यते । अतः समासादीनां विग्रहवाक्योपस्थित्या बोधजनकत्वं युक्तमिति ब्रुवन्ति । तदपि न सम्यक् । विग्रहवाक्यमजानानानामपि समासतोऽर्थबोधदर्शनाच्छक्तिज्ञानमन्तरा तद्बोधानुपपत्तेः । अन्यच्च "अन्यपदार्थे च संज्ञायाम्" इत्यादिना—उन्मत्तगङ्गम् , लोहितगङ्गम् , अरण्ये तिलकाः, वने कशेरुका इत्यादौ वाक्येन संज्ञान-

वगमादिह नित्यसमास इत्युक्तम् । अत्र विग्रहवाक्यात् संज्ञावगमाभावेन समास[illegible]क्तिस्वीकारमन्तरा नान्यः पन्थाः इति अवश्यं विशिष्टशक्तिः स्वीकार्येति दिक् ।

इति वटपत्तनस्थ—म० स० विश्वविद्यालय–संस्कृतमहाविद्यालय-
व्याकरणोत्तमकक्षाध्यापक–व्याकरणाचार्यपण्डितश्रीकालिका-
प्रसादशुक्लविरचितज्योत्स्नाटीका समाप्ता ।



श्रीः

# शुद्धिपत्रकम् ।

| अनुक्रमाङ्काः | अशुद्धिः | शुद्धिः | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|
| १ | समवाय | समवेतत्व | ७ | २२ |
| २ | तीत्य | तीत्या | १२ | १६ |
| ३ | गृहि | गृही | २९ | २ |
| ४ | वाध | वाधः | १३८ | २ |
| ५ | द्व | द्व | १३८ | १३ |
| ६ | शक्त | शक्य | १४७ | ३ |
| ७ | शक्तय | शक्त | १४७ | ३ |
| ८ | पस्थे | पस्थिते | १५० | ५ |
| ९ | भाव | भावा | १५१ | १२ |
| १० | स्यौ | स्यो | १५२ | ५ |
| ११ | कार्य | कार्यं | १५९ | १ |
| १२ | तष्य | तेष्य | १६७ | १ |
| १३ | नदा | नहा | १९७ | १ |